# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

३० वर्षे
१-२ अङ्कौ

ज्येष्ठभाद्रपदपूर्णिमे, वै० सं० २०३२
जून-सितम्बर, १९७५ ई०

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# अभिनवप्रकाशनानि सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

| क्रम सं० | ग्रन्थनाम | | मूल्यम् |
|---|---|---|---|
| १. | शुक्लयजुर्वेदकाण्वसंहिता | [उत्तरविंशतिः] संहितेयं सायणभाष्यसहिता प्रकाशिता त्रिविधैः खलु गवेषणाप्रधानैः भूमिका-टिप्पण-परिशिष्टैः समलङ्कृता | २६-२५ |
| २. | वाक्यपदीयम् | [वृत्तिसमुद्देशात्मकम्] ग्रन्थरत्नमिदं हेलाराजप्रणीतया प्रकाशव्याख्यया तथा च प० रघुनाथशर्मविरचितया अम्बाकर्त्रीटीकया विभूषितम् | ६५-५० |
| ३. | वैयाकरणसिद्धान्तमञ्जूषा | [नागेशभट्टविरचिता] ग्रन्थोऽयं सर्वतः प्रथमं सम्पादककृतविविधैः सारभूतैः टिप्पणभूमिका-परिशिष्टैः समलङ्कृत्य प्रकाशितः | ३६-०० |
| ४. | प्रक्रियाकौमुदी | [ भागद्वयात्मिका ] रामचन्द्राचार्यप्रणीतेयं प्रक्रियाकौमुदी सर्वतः प्रथमं शेषश्रीकृष्णपण्डितप्रणीतया प्रकाशव्याख्यया विभूष्य प्रकाशिता। तृतीयो भागोऽप्यचिरादेव प्राकाश्यमेष्यति । | |
| | | प्रथमभागस्य | ५२-०० |
| | | द्वितीयभागस्य | ६७-०० |
| ५. | सरलत्रिकोणमितिः | [ ज्योतिषम् ] म० म० श्रीबापूदेवशास्त्रिविरचितोऽयं ग्रन्थो गवेषणापूर्णैः उपोद्घातपरिशिष्टैः सम्भूष्य प्रकाशितः | २९-०० |
| ६. | प्रशस्तपादभाष्यम् | [ प्रशस्तपादाचार्यप्रणीतम् ] न्यायदर्शनस्य प्राणभूतमिदं ग्रन्थरत्नं श्रीधरभट्टकृतन्यायकन्दलीव्याख्यया, श्रीदुर्गाधरझाकृतहिन्दीभाषानुवादेन च समलङ्कृतं पुनः प्रकाशितम् | ६८-०७ |
| ७. | रसगङ्गाधरः | [ पण्डितराजजगन्नाथविरचितः ] साहित्यशास्त्रग्रन्थोऽयं प० केदारनाथओझाप्रणीतया रसचन्द्रिकाख्यया व्याख्यया विभूष्य प्रकाशितः। द्वितीयभागोऽपि किलाचिरादेव प्राकाश्यमेष्यति | २२-०० |
| ८. | नानकचन्द्रोदयमहाकाव्यम् | [ श्रीदेवराजशर्मविरचितम् ] गुरुनानकचरितमुपजीव्यत्वेनाङ्गीकृत्य प्रतिभावता देवराजशर्मणा महाकविना विरचितमिदं महाकाव्यं कामं संस्कृतवाङ्मयस्य श्रियं समेधयति | ७४-६० |
| ९. | रसिकजीवनम् | [पण्डितश्रीरामानन्दपतित्रिपाठिविरचितम्] नायिकाभेदनिरूपणपरमिदं काव्यं सर्वतः प्रथमं विस्तृतगवेषणात्मिकया प्रस्तावनया समलङ्कृत्य प्रकाशितम् | |

प्रकाशकः-निदेशकः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी-२२१००२.

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

मुख्यसम्पादकः

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

सह-सम्पादकः

डॉ० हरिश्चन्द्रमणित्रिपाठी

३० वर्षे
१-२ अङ्कौ

वार्षिकमूल्यम् १० रूप्यकाणि
संयुक्ताङ्कयोः ६ रूप्यकाणि

CC-0. Sampurnanand University Collection. Digitized by eGangotri

## सम्पादकीयम्

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिकेयं 'सारस्वती सुषमा' साम्प्रतमेकोनत्रिंशत्समाः परिपूर्य त्रिंशे हायने पदमर्पयतीति निवेदयतामस्माकं चेतसि जाजायते महान् प्रमोदः। युवत्यपि पुरातनीयं गीर्वाणवाण्या अनुसन्धान-पत्रिका खल्वेकोनत्रिंशद्वर्षेभ्योऽनारतमनुसन्धानचणेभ्यो विचक्षणेभ्यो गवेषणापूर्ण-निबन्धसाहाय्यकमधिजग्मुषी विलसति कोविदकरकमललालिता। संस्कृतविश्व-विद्यालयस्थापनादारभ्य यद्यपीयं कतिचन वर्षाणि विश्वविद्यालयीयसुधीजन-निबन्धैरेव पुष्णाति स्म स्वात्मानम्, तथापि ततस्तदतिक्रान्तसीमैषा समाश्रृणोति सर्वतोदिक्कानां विद्वज्जनानां गवेषणागर्भान् विविधविद्यानिबन्धान्।

अनयोरङ्कयोः श्रीशिवनारायणशास्त्रिविभावितः 'वैदिकवाङ्मयेऽर्कशब्दस्य व्युत्पत्तिः' इति, श्रीकेदारनाथत्रिपाठिसंदृब्धः 'आचार्यवाचस्पतिमिश्रस्य जीवनं कृतित्वं च' इति, श्रीशशिधरशर्मणः 'आदिकवेराद्यपद्यस्यार्थविषयकं गवेषणम्' इति च गवेषणागर्भा निबन्धास्तादृशां सर्वतोदिक्कानां बुधवराणां प्रकाशमानीताः सन्ति। गवेषणाकर्मणि नदीष्णा अनुसन्धायका दोषज्ञा इह यथायथं सम्पादन-पूर्वकतदीयगवेषणागर्भनिबन्धप्रकाशनेन सन्ततं प्रोत्साहिताः प्रोत्साह्यन्ते च। 'भगवात् सृष्टिप्रक्रियाविमर्शः' इत्याख्यस्तादृश एव निबन्धोऽभ्युपगन्तव्यः। डॉ० श्रीकृष्णमणित्रिपाठिसमुपस्कृतः 'महाभारतयुद्धसमयसमीक्षणम्' इति निबन्ध इदानीन्तनप्रचलितविचारधाराऽऽनुकूल्यमातनुते।

एतावच्चिरमप्रकाशिता लघुग्रन्था इह पूर्वत एव पदमासादयन्तीति विदन्त्येव सुषमारसिकाः। अनयोरङ्कयोः प्रकाशितस्तादृशः 'रसिकजीवनम्' इत्याख्यो लघुरपि महनीयो ग्रन्थो वाराणसेयेन कवीन्द्रेण पण्डितश्रीरामानन्द-पतित्रिपाठिना प्रणीतचरस्तत्कुलावतंसेन पण्डितश्रीकरुणापतित्रिपाठिना वर्तमान-कुलपतिमहोदयेन पाण्डित्यपूर्णया प्रस्तावनया विभूष्य सम्पादितो विद्वत्तल्लजानां मनोमोदाय जिज्ञासूनां च विबोधाय नूनं सेत्स्यतीति विश्वासः।

### दिवंगता गणपतिदेवशास्त्रिदैवज्ञमहोदयाः।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य दृक्सिद्धपञ्चाङ्गसम्पादकचराः स्वर्गताः पण्डितगणपतिदेवशास्त्रिदैवज्ञमहोदयास्त्रिशदुत्तरद्विसहस्रतमवैक्रमाब्दे पौषशुक्ल-षष्ठ्यां तिथावस्मान् विहाय शिवसायुज्यमवापुरिति व्याहरतामस्माकं चेतश्चे-खिद्यतेतराम्। मृत्युतिथेः किल वर्षैकपूर्वमेवैभिः स्वनिधनतिथिः समुद्घोषिताऽऽ-सीत्। पुण्यश्लोकानामेतेषां निधनेन काशीस्थविद्वन्मण्डलीमणिषु किलैकः प्रोज्ज्वलतमो ज्ञानविज्ञानपरिमण्डितश्च मणिर्विलोपं गतः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

गणपतिदेवो हि किल ४–१२–१८८७ तमे खैस्ताब्दे निजजनुषा म० म० श्रीवापूदेवशास्त्रिमहाभागानां गृहमलञ्चकार। अनूपनयनसंस्कारं गणपतिदेवेन पण्डितमहादेवशास्त्रिघाटेसकाशात् सषडङ्गाश्वलायनशाखीया वेदग्रन्थाः समधीताः। तदनु ज्यौतिषशास्त्रं पण्डितचन्द्रदेवशास्त्रिणः, साहित्यशास्त्रं म० म० श्रीतैलङ्गशास्त्रिणः, पालि-प्राकृतवाङ्मयं म० म० तैलङ्गलक्ष्मणशास्त्रिणः, आङ्ग्लभाषा, जर्मनभाषा, पुरातत्त्वशास्त्रं च क्रमशः श्रीभाऊसाहव—डॉ० लद्घूमहोदय —डॉ० वेनिसमहोदयेभ्यः सकाशादध्ययनविषयीकृताः।

तदानीन्तनस्य काशिकराजकीयसंस्कृतमहाविद्यालयस्य प्राचार्या डॉ० वेनिसमहोदयाः १९१४ तमे खैस्ताब्द आङ्ग्लभाषाध्यापकपदे पाश्चात्त्य-पौरस्त्य-ज्ञानविज्ञानपरिमण्डितं श्रीगणपतिदेवं नियोजयामासुः। ततः प्रभृति १९४३ तमखैस्ताब्दं यावद् श्रीगणपतिदेव आङ्ग्लभाषाध्यापकपदमलमकार्षीत्।

तदानीन्तनानां काशिराजानां **श्रीईश्वरीनारायणसिंहदेव**महाभागानां सम्मतिं लब्ध्वा खल्वेभिः स्वपितृचरणैः सुगृहीतनामधेयैः म० म० वापूदेव-शास्त्रिभिः प्रवर्तितस्य **'दृक्सिद्धपञ्चाङ्गस्य'** सम्पादनं २०२३ वैक्रमाब्दं यावद् विहितम्। तदनन्तरं सुगृहीतनामधेयानां डॉ० **सम्पूर्णानन्द**महोदयानां सत्प्रयासेन काशिकराजकीयसंस्कृतमहाविद्यालयः पञ्चाङ्गमिदं प्रकाशयितुमारेभे। पश्चाच्च काशिकराजकीयसंस्कृतमहाविद्यालये विश्वविद्यालयात्मना परिणते सति १९६७ ईशवीयाब्दं यावद् श्रीगणपतिदेवशास्त्रिमहोदया एवास्याध्यक्षपदं विभूषयामासुः।

लेखनकलायामपि श्रीशास्त्रिमहाशया लब्धप्रतिष्ठा आसन्। डॉ० आदित्यनाथझामहाभागानामाग्रहमूरीकृत्यैभिः **'दृक्सिद्धपञ्चाङ्गनिर्माणपद्धतिः'** इति संज्ञकोऽनुपमो ग्रन्थो निरमायि। ग्रन्थोऽयं स्वमहिम्ना पुरस्कृतोऽभूद् उत्तर-प्रदेशीयशासनेन।

महानुभावानामेषां त्रिस्कन्धज्यौतिषशास्त्राधीतिवोधाचारयशोगीतिं श्रावं श्रावं पुण्यपत्तनस्थज्यौतिषशिक्षणमहाविद्यालयेन १९४२ तमे खैस्ताब्दे **'सिद्धान्तवागीशः'** इत्युपाधिनैते शास्त्रिमहोदयाः सभाजिताः।

एवंविधवदान्यचरितानां प्राच्य-पाश्चात्त्यज्ञानविज्ञानसमेधितान्तःकरणानां गीर्वाणवाणीसेवानिरतानां महानुभावानां निधनं सुरभारत्या ह्यपूरणीयां क्षतिमावहति। अतो विषादपरिप्लुतमानसैरस्माभिर्विश्वविद्यालयपक्षतः सारस्वतसुषमा-पक्षतश्च साम्वशिवोऽभ्यर्थ्यते यदेतेषां नित्यकैवल्यलाभस्स्यादिति।

## यशःकायाः खिस्तेमुकुन्दशास्त्रिणः।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य सम्मानितप्राध्यापकाः **पण्डितमुकुन्द-शास्त्रिखिस्ते**महोदयास्त्रिशदुत्तरद्विसहस्रतमवैक्रमाब्दे पौषशुक्लदशम्यां तिथा-

CC-0. Sampurnanand University Collection. Digitized by eGangotri

वस्मान् विहाय दिवं जग्मुरिति संसूचयतामस्माकं खिद्यते चेतः। स्वनामधन्यानां वदान्यानामेतेषां महानुभावानां तिरोधानेन साहित्यशास्त्रस्य प्रोज्ज्वलतमं नक्षत्रं विलोपं गतम्।

तत्रभवतां जन्म १९५१ तमे वैक्रमाब्दे मार्गशीर्षकृष्णतृतीयायां तिथौ काश्यामभूत्। जन्मनो वर्षद्वयानन्तरमेव तदीयपितृचरणानां **पण्डितभैरवनाथशास्त्रिणां** देहावसानं सञ्जातम्। तेन निजपरिवारस्य भरणपोषणभारो जनन्यां शकुनादेव्यामेव समापतितः।

श्रीमुकुन्दशास्त्रिणः साहित्यशास्त्राध्यापका म० म० तैलङ्गरामशास्त्रिमहोदया आसन्। व्याकरणशास्त्रं तु श्रीरामचन्द्रशास्त्रिणः सकाशाद् अधीतमनेन। सर्वप्रथमं श्रीमुकुन्दमहोदयाः काशिकशङ्करसंस्कृतपाठशालायामध्यापकपदमलङ्कृतवन्तः। तदनु १९२० तमे खैस्ताब्दे काशिकस्याद्वादसंस्कृतमहाविद्यालये साहित्याध्यापकपद एतेषां नियुक्तिः सञ्जाता। एवमेव १९३० तमे खैस्ताब्दे तत्रभवन्तः श्रीचन्द्रसंस्कृतमहाविद्यालयस्य साहित्याध्यापकपदं विभूषयामासुः।

एतेषां महानुभावानां साहित्यशास्त्रप्रौढिप्रकर्षं श्रावं श्रावं १९४० तमे खैस्ताब्दे काशिकराजकीयसंस्कृतमहाविद्यालयप्राचार्यवर्या डॉ० मङ्गलदेवशास्त्रिमहोदयाः साहित्यप्राध्यापकपद एनान् नियोजयामासुः। तदनु काशिकराजकीयसंस्कृतमहाविद्यालये विश्वविद्यालयात्मना परिणते सति प्राथम्येन श्रीमुकुन्दशास्त्रिणः साहित्यविभागाध्यक्षपदे नियुक्तिर्जाता।

महानुभावानामेतेषां सारस्वतसाधनां दर्शं दर्शं १९६३ तमे वैक्रमाब्दे वाराणसेयसंस्कृतविश्वविद्यालयेन सहर्षं **'सम्मानितप्राध्यापकपदम्'** एभ्यः प्रदत्तम्। तत्रभवतां शिष्यशाखा-प्रशाखा देशस्य प्रतिप्रदेशं लब्धप्रसरा वर्वर्ति। खिस्तेमहानुभावानां विविधसंस्कृतपत्रपत्रिकासु प्रकाशिताः शास्त्रीयवैदुष्यमण्डिता निबन्धास्तेषां पाण्डित्यख्यापनायालम्। काव्यप्रकाशस्य भीमसेनीटीकायाः सम्पादनं तेषां समुल्लेख्या ग्रन्थसम्पत्।

एवंविधसारस्वतसाधनासमर्थितान्तःकरणानां सुरगवीसमाराधनधृतैकव्रतानां छात्रकुलपरिमण्डितपण्डितानां स्व० मुकुन्दशास्त्रिखिस्तेमहोदयानां देहबन्धमोक्षः सुरभारत्या ह्यपूरणीयां क्षतिमावहति। अतस्तद्दुःखदुःखितान्तःकरणैरस्माभिर्विश्वविद्यालयपक्षतः सारस्वतसुषमापक्षतश्च साम्बशिवः प्रार्थ्यते यदेतेषां शाश्वतकैलासधामनिवासः स्यादिति शम्।

## स्वर्गताः पण्डितक्षेत्रेशचन्द्रचट्टोपाध्यायमहोदयाः !

२७–१०–१८९६ खीस्ताब्दे वङ्गदेशस्य महनीयब्राह्मणपरिवारे जनिं लेभिरे श्रीमत्क्षेत्रेशचन्द्रचट्टोपाध्यायमहाभागाः। सुरसुन्दरीति नामधेया तदीया माता

CC-0. Sampurnanand University Collection. Digitized by eGangotri

धर्मपरायणा बभूव। सा मातृभक्तस्य श्रीचट्टोपाध्यायमहाभागस्य मानसमत्यर्थं स्पृष्टवती। म० म० डॉ० गङ्गानाथझा—म० म० डॉ० गोपीनाथकविराज—डॉ० आर्थरवेनिस — म० म० पण्डितलक्ष्मणशास्त्रितैलङ्ग — म० म० पण्डितवामाचरणन्यायाचार्य — म० म० अम्बादासशास्त्रि — पण्डिताऽच्युतानन्दशास्त्रि-महोदयानां सकाशाद् विविधानि शास्त्राणि समधीतानि तैः। डॉ० तुकाराममलड्डू-महाभागेभ्यः पालिप्राकृतभाषे तुलनात्मकभाषाशास्त्रतत्त्वानि च समधिगतानि। वेदवेदान्तदर्शनेति त्रीन् विषयानादाय तिस्र एम० ए० परीक्षाः समुत्तीर्णाः। श्रीचट्टोपाध्यायमहोदयैः प्रयागविश्वविद्यालयस्य संस्कृतविभागे व्याख्यातृप्रवाचक–प्राध्यापकपदेषु नियुक्तैर्वेद-वेदान्त-मीमांसा-साहित्य-पालि-प्राकृत-भाषाविज्ञान-अवेस्ता-प्राचीनपारसीक-प्राचीनभारतेतिहासादिविषया अध्यापिताः।

१९५८ खीस्ताब्दे यदा काशिकराजकीयमहाविद्यालयो वाराणसेयसंस्कृत-विश्वविद्यालयत्वेन परिवर्तनं गतः, तदेमे न्ययोजिषत प्रथमतया तदीयस्यानुसन्धान-संस्थानस्य संचालकतया। इह सरस्वतीभवनग्रन्थमाला – गङ्गानाथझाग्रन्थ-माला-सम्पूर्णानन्दग्रन्थमालादिषु तेषां प्रधानसम्पादकतया गौरवभाजोऽनुसन्धान-प्रधाना ग्रन्था अनुसन्धानप्रधाना 'सारस्वती सुषमा' चेति त्रैमासिकी पत्रिका प्रकाशमुपेताः। तदीयेन परामर्शेन विश्वविद्यालयेऽस्मिन् मुद्रणालयः संस्थापितोऽभूत्। संचालककार्यं निर्वहन्तो वर्षोनम् उपकुलपतिपदमप्यध्यतिष्ठन्। ततो निवृत्ता इमेऽखिलभारतीयाऽऽकाशवाणीसंस्कृतकार्यक्रमाणां परामर्शदातृत्वेन नियोजिता अभूवन् भारतशासनेन। तत्रैतैस्ते संस्कृतपाठा रचिताः, ये साम्प्रतं प्रतिसप्ताहमाकाशवाण्या द्विः प्रसार्यन्ते।

वेदावेस्तयोस्तुलनामूलकस्यानुशीलनस्य हेतोरिमान् भारतीयशिक्षामन्त्रालयेन तिरुपतिस्थकेन्द्रीयसंस्कृतविद्यापीठे विशिष्टपण्डितरूपेण नियोज्य स्वात्मा कृतार्थितः। तत्र त्रीण्युद्घाटनभाषणानि प्रस्तुतान्येभिः। तदाधारेण ततो वेदवित्तप्रकाशिका इत्याख्यं पुस्तकमपि प्रकाशितम्, कालिकाताविश्वविद्यालय-स्तुलनात्मकधर्मविषयके स्टीफेनस्निर्मलेन्दुघोषव्याख्यातृपदे १९६० खीस्ताब्दे चट्टोपाध्यायमहोदयान् नियोज्य कृतकृत्यं मेने स्वात्मानम्। तत्र १९६३-६४ खीस्ताब्दे तुलनात्मकधर्ममधिकृत्याष्टौ व्याख्यानानि प्रस्तुतानि चरितनायकैः। पटियालाविश्वविद्यालयस्तुलनात्मकधर्मविषयके गुरुगोविन्दसिंहाख्ये प्राध्यापकपदे महोदयानिमान् नियोज्य धन्यधन्यमात्मानमूरीचक्रे। किन्तु ६७–६९ वर्षा-वधिकादेषामस्वास्थ्यादिमे स्वचरणविन्यासेन विश्वविद्यालयं तं पावयितुं नाशकन्। कालिकातास्थे संस्कृतकालेजे, लालबहादुरशास्त्रिकेन्द्रीयसंस्कृत-विद्यापीठे च व्याख्यानार्थमाहूता इमे तदर्थं तत्रोपेताः। १९६६ खीस्ताब्दे राष्ट्रपतिना राष्ट्रपतिपुरस्कारेण सभाजिताः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

एभिरखिलभारतीयप्राच्यविद्यासम्मेलनस्य नवमे ( १९३७ ख्री० ), अष्टादशे ( १९५५ ख्री० ) च समारोहे वेदविभागीयम्, कराँचीनगरे १९४६—ख्रीस्ताब्दे समायोजितेऽखिलभारतीयहिन्दीसाहित्यसम्मेलनस्य दर्शनविभागीयं चाध्यक्ष्यं समलमकारि। कार्यालयीयभाषात्वेन हिन्दी स्वीक्रियेतेति सम्मेलनस्य प्रयत्नेष्विमे संवद्धा अभूवन्; काशिकराजकीयसंस्कृतमहाविद्यालयसम्वद्धानां परम्परागतसंस्कृतपाठशालानां पाठ्यक्रमस्याधुनिकीकरणविरोध उत्तरप्रदेशीय-शासनमलिखन्। वैदुष्यपूर्णास्तदीयाः सप्ततिसंख्याका महत्त्वभाजोऽनुसन्धाननिवन्धाः पत्रिकासु समये समये प्रकाशिताः। तेषु 'डेट आफ् कालिदास' इत्याख्यो निवन्धः परमां प्रसिद्धिमध्यगमत्। आचार्यगुणगणगरिष्ठानाम् ऋषिकल्पानां महोपाध्या-यानां चारित्रप्रतिमूर्तीनां भूयोविद्यानां श्रीचट्टोपाध्यायमहाभागानां प्रतिभा-शालिच्छात्रहितकारिता सुप्रथिता। तदीयाश्छात्रा जाग्रद्ग्रन्थवद् देशेषु विदेशेषु च विद्याचारित्रसौरभं विकिरन्ति।

'वज्रादपि कठोराणि मृदूनि कुसुमादपि' इत्युक्तिमक्षरशश्च चरितार्थयतां पुण्यश्लोकानां श्रीचट्टोपाध्यायमहाभागानां ३-३-१९७४ ख्रीस्ताब्दे निधनेन प्राच्यविद्याक्षेत्रस्य, वहूनां विदुषां चात्मनीना क्षतिरजायत। सारस्वतसुषमापक्षतः काशीविश्वनाथस्तदीयशिवसायुज्याय प्रार्थ्यते।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# विषयानुक्रमणी



CC-0. Sampurnanand University Collection. Digitized by eGangotri

# सारस्वती सुषमा

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ३० वर्षः | ज्येष्ठभाद्रपदपूर्णिमे, वि० सं० २०३२ | १-२ अङ्कौ |
|---|---|---|

## पूजाभावसुधा

[ देवपूजापरतया पुरुषसूक्तमन्त्रव्याख्या ]

–: ● :–

डॉ० श्रीगोपालचन्द्रमिश्रः, वेद-धर्मशास्त्र-मीमांसादर्शनाचार्यः, एम्० ए०, पी-एच्० डी०,

आचार्यः, अध्यक्षश्च—वेदविभागे

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी ।

वेदात्मानं जगद्बीजं नत्वा नारायणं विभुम् ।
सर्वदेवात्मकतयावस्थितं भक्तवत्सलम् ॥
पूजाद्रव्योपचारैस्तु तस्याराधनमिष्यते ।
व्याख्यायन्तेऽथ तन्मन्त्राः पूजाभावसुधाख्यया ॥

पुरुषसूक्तं हि नाम पुरुषद्दष्टा पुरुषदैवत्याश्च षोडश मन्त्राः । ते च सर्वासां देवतानां पूजनाङ्गभूतेषूपचारेषु समर्पणाय प्रयुज्यन्ते । केन मन्त्रेण क उपचारो देवतायै समर्पणीय इति हि स्मृतावेवं व्यवस्थाप्यते—

आद्ययावाहयेद् देवमृचा तु पुरुषोत्तमम् ।
द्वितीययासनं दद्यात् पाद्यं चैव तृतीयया ॥
अर्घश्चतुर्थ्या दातव्यः पञ्चम्याचमनं तथा ।
षष्ठयास्नानं प्रकुर्वीत सप्तम्या वस्त्रधौतकम् ॥
यज्ञोपवीतं चाष्टम्या नवम्या गन्धमेव च ।
पुष्पं देयं दशम्या तु एकादश्या च धूपकम् ॥
द्वादश्या दीपकं दद्यात् त्रयोदश्या निवेदनम् ।
चतुर्दश्या तु ताम्बूलं पञ्चदश्या प्रदक्षिणाम् ।
पुष्पाञ्जलिं तु षोडश्या देवस्याराधनं चरेत् ॥ इति ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

पुरुषसूक्तं सामान्यतया स्पष्टार्थमपि सत् ।
पितृदेवमनुष्याणां वेदश्चक्षुस्तवेश्वर ॥
श्रेयस्त्वनुपलब्धेऽर्थे साध्यसाधनयोरपि ॥ ( भा० ११।२०।४ )
'विचित्रभाषाविततां छन्दोभिश्चतुरुत्तरैः ।
अनन्तपारां बृहतीं सृजत्याक्षिपते स्वयम् ॥ ( भा० ११।२१।४० )

इत्यादिवचोभिर्वेदवाणीनां विचित्रभाषाविततात्वमस्तीति यथाधिकारं सा नानाविधान् रहस्यान् प्रकाशयति । अत एव पुरुषसूक्तादिमन्त्राणां विभिन्नैराचार्यैर्विभिन्ना अर्थाः प्रतिपादिताः सन्ति । सत्यप्येवं देवपूजापरतया पुरुषसूक्तमन्त्राणामर्थो न दृष्टिगोचरतामुपैति । श्रद्धालवो हि शास्त्रवचनमनुसृत्य सर्वदा सर्वत्र देवपूजायां तत्तदुपचारसमर्पणे मन्त्रानेतान् प्रयुञ्जानाः पूजासमृद्धयनुरूपतया वेदार्थंजिज्ञासन्त इति मया वेदपुरुषानुग्रहेण कश्चन पूजाभावप्रकाशकः पुरुषसूक्तस्य मन्त्रार्थ उपस्थाप्यते—

**१. देवतावाहनमन्त्रः—**

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं सर्वतः स्पृत्वात्यतिष्ठद् दशाङ्गुलम् ॥ १ ॥

अत्र सहस्रशब्दो बहुत्वाभिधानत्वात् ( निघं० ३।१ ) सङ्ख्याविरहवाची । भूम्यां ये दृश्यमाना जीवास्तेषां सर्वेषां भगवद्रूपत्वात् शिरोनेत्रपादाद्यवयवानां भगवदवयत्वेनात्र स्तुतिः । ततश्च—अर्चनीयो देवः पुरुषः सहस्रशीर्षा, विश्वगतजीवानां शिरांसि तस्यैव शीर्षाणीति अनन्तशिराः । सहस्राक्षः = अनन्तनेत्रयुक्तः । सहस्रपात् = अनन्तपादसहितश्च वर्तते । अत्र 'पुरि शेत इति पुरुषः' इति निर्वचनात् (निरु० २।१) सर्वयोन्यात्मकेषु पुरेषु वर्त्तमान ईश्वरः पुरुष उच्यते । सः भूमिं, भवतीति भूमिः = शरीरम्, सर्वतः = आनखशिखम्, स्पृत्वा = व्याप्त्वा, अपि, दशाङ्गुलम्, दशाः = शरीरावस्थाः (भा० ११।२२।४६) । अत एव 'तिस्रः दशाः समाना इति त्रिदशाः' इत्यत्र शरीरावस्थापरत्वेन दशाशब्दस्य दर्शनम् । ताः शरीरदशाः, अङ्गं लान्ति प्रापयन्ति, उलति वा येन तत् दशाङ्गुलम् = मायाविकारम्, अति = अतिक्रम्य, अतिष्ठत् स्थितवानस्ति ॥ १ ॥

**अथवा—**

पुरि नानाविधयोनिशरीरात्मिकायां परमात्मस्वरूपेणावस्थितो निर्विकारी शेत इति पुरुषः । यद् वा पुरु = बहु सनोति ददाति भक्तेभ्योऽभिलषितानिति पुरुषः ।

( निरु० पूरयतेर्वा २।१ तु० यदि वा बहुदानाद् वै विष्णुः पुरुष उच्यते—त्रि० द० ८० इत्युक्तेः । )

सर्वात्मकत्वादस्माभिः पूजनीयो देवः पुरुषः स्वमहिम्ना सहस्रशीर्षा, सहस्रमनन्तानि शिरांसि मस्तकानि यस्य सः । अनन्तभक्तजनानां कार्यसाधनाय तत्तद् बुद्धिप्रविष्टत्वात् सर्वस्यापि भक्तस्य भूतजातस्य च सशिरस्त्वात् सहस्रशीर्षत्वम् । बुद्धेः शिरोऽधिकरणत्वं प्रसिद्धं लोके । देवानां चानुग्रहो बुद्धयैव भवतीति—

न देवा दण्डमादाय रक्षन्ति पशुपालवत् ।
यं तु रक्षितुमिच्छन्ति बुद्धया संयोजयन्ति तम् ॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

इत्याद्युक्तिषु स्पष्टम् । एतेन मन्त्रेण कामपूरणायाराधितो देवः सम्बद्धेषु सर्वेषु व्यक्तिषु शिर आद्यवयवैः प्रविष्टः प्रेरयन् कार्यं साधयतीति देवस्य ध्यानाय आवाहनाय वा पुरुषविग्रहो वर्ण्यते ।

सांसारिककार्यं हि ज्ञानेन्द्रिय-कर्मेन्द्रियसहकृतेन मनसा सिद्ध्यतीत्यनुभवसिद्धम् । ततश्च मन्त्रेऽस्मिन् चक्षुःशब्दो ज्ञानेन्द्रियोपलक्षकः, पादशब्दश्च कर्मेन्द्रियोपलक्षकः । एवमयं देवः सहस्राक्षोऽनन्तचक्षुष्कः, सहस्रपात् = अनन्तचरणश्चास्ति ।

स एवं सर्वत्र व्याप्तो देवो भक्तजनकार्यसम्बद्धव्यक्तीनां भूमिम् = भावयति, उद्भावयति सङ्कल्पविकल्पसरणिमिति भूमिर्मनः । तां मानसीं भूमिं सर्वतः सम्पूर्णतया, स्पृत्वा = अभिव्याप्य, दशायाः = अवस्थाया अङ्गम् = स्वरूपम्, उलति प्रापयतीति दशाङ्गुलमस्ति भक्तेच्छापूरकं स्वरूपम् । तं दधदपि, अति = तदतिक्रम्य, निर्लिप्त इव, अतिष्ठद् वर्तत इति महतो देवस्यास्य महिमास्तीति । स यथार्हमस्माभिरिह ध्यायते आवाह्यते पूजार्थमिति शेषः ॥१॥

२. आसनसमर्पणमन्त्रः—

पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥२॥

यत्, सर्वमिदं वर्त्तमानम्, भूतम् = व्यतीतम्, यत् च अपि भाव्यम् = भविष्यत् च वर्त्तते, तत् सर्वं पुरुषः = पुरि अस्मदीयहृदयाकाशे शेते पूजनाय, ध्यानेन तिष्ठति, देवरूपत्वेन वर्त्तते । अयं पुरुषः कालत्रितयजनितपरिणामस्वामी, एवास्तीत्येतावन्न मन्तव्यम्, अपि तु देवरूपैव कालत्रये वर्त्तते । उत = अन्यच्चायं देवः, अमृतत्वस्य ध्रुवतायाः, ईशानः = स्वामी, अपि अस्ति । अर्थात् स्थिरपदार्थानाम्, आकाशकालदिगादीनामपि प्रभुः । तस्मादेव च सर्वैश्वर्यत्वं सर्वशक्तिमत्वं च देवस्य सिद्ध्यति । यद् अधुना पूजायाम् अन्नेन, द्वितीयार्थे तृतीया । अन्नं भोग्यद्रव्यम् आसनं तन्निमित्तीकृत्य, अतिरोहति = अधिरोहति । अस्मिन्नासन उपविशतीत्यर्थः । अथवा हेतौ तृतीया, अन्नेन पूजोपचारभोग्यहेतुना च आसनेऽधिरोहति । अस्मत्समर्पितमिदमासनं स्वीकुरुत इति भावः ।

अथवा—

इदं जगत् सर्वं सम्पूर्णं 'पुरु = बहु, सनोति = ददाति, अभीप्सितम्' इति पुरुषो देव एव, स्ववैभवरूपत्वाद् जगतः । इदं वर्तमानमेव नहि, अपि तु यद् जगत् भूतम् = भूतकालिकक्रियाविषयीभूतं जातम्, यत् च भाव्यम् = भविष्यत्क्रियाविषयीभूतं, यद् भविष्यति, तत्सर्वं पुरुषः = देव एव । उत = अपि चायं देवः, अमृतमविनश्वरं तस्य भावोऽमृतत्वमविनाशित्वं यदस्ति, सापेक्षं देशकालनिरपेक्षं वा पदार्थपूर्वथात्मकं तत्त्वम्, तस्यायं देव ईशानः = कर्तुमकर्तुमन्यथाकर्तुं सामर्थ्यात् प्रभुः । एवं तदा भवति यद् यदा अन्नेन, मतुबर्थे मूलशब्दो विवक्षितः—'ताद्धितेन कृत्स्नवन्निगमा भवन्ति' इति निरुक्तोक्तेः ( २।१ ) । ततश्च, अन्नेन = अन्नवता कर्मणा, अन्नम् = हविः, यत्रास्ति सा पूजा, पूजाहेतुना चायं देव आसनपदार्थं उपस्थिते-भक्तमनोवाञ्छानुरूपतया धृतविग्रहोऽस्मत्कल्पिते अति = स्वात्मवैभवमतिक्रम्य रोहति = आरोहति ।

अतोऽयं देवोऽस्मत्प्रार्थनयोपकल्पितमासनमलङ्करोतु, इति प्रार्थना ॥२॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**३. पद्यासमर्पणमन्त्रः—**

एतावानस्य महिमातो ज्यायाँश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥३॥

अस्य=आराधनीयस्य देवस्य, इमानि मदीयकार्यसिद्धिसम्बन्धीनि, विश्वा=विश्वानि सर्वाणि भूतानि जीवानि, पादः, लुप्तोपमं पदम्, पाद इव । चरणतलमिवाधिकृतानि सन्ति । यतो हि—अस्य यत् त्रिपाद्, त्रयः पादाः, पद्यते गच्छति भक्तकार्यसिध्यर्थमिति पादो देवस्य मानसिकोऽनुग्रहः । तस्य सात्त्विक-राजस-तामसभेदेन कार्यानुरूपतया भक्तेच्छाधीनत्वात् त्रैविध्यम् । एवं च त्रयः सात्त्विक-राजस-तामसाः पादाः=देवस्य मानसिका अनुग्रहा यस्य तत् त्रिपाद् देवस्वरूपम्, अमृतम्=अक्षय्यम्, मादृशानन्तजनमनोऽभिलापपूरणे व्ययितमपि अक्षय्यम्, दिवि द्युस्थाने वर्त्तत इति देवस्य पादतलमहिमानुस्मरणेन मया पादयोः प्रक्षालनं पाद्यजलेनानेन क्रियत इत्याशीः ॥३॥

**अथवा—**

अस्य पूज्यस्य देवस्य येयं मूर्तिः प्रतिमा, अधिकरणं वा पूगफलादिस्थापितं तद् अस्य महिमा ज्ञानप्रकारः । महिमा हि सोऽभिधीयते येन गूढेन भावात्मकेन प्रभावेणाज्ञातो ज्ञातो वा पुरुषः शक्तिमानिति निश्चीयत । ततश्च इदं देवताधिकरणं प्रत्यक्षतयाऽकिञ्चित्करमिव प्रतिभाति । परं मयावस्थितेन भावात्मकेन प्रभावेण शास्त्रनिर्देशप्रभावेण च शक्तिमानिति ज्ञात इति महिमा=महिम्ना, एतावान् इति सर्वजनवेद्यतयास्ति । परं पूरुषः=पुरि प्राणिजातस्य शरीरे शरीरे शेते तिष्ठति, इति पुरुषः=देवोऽयम् । अतो दृश्यमानादधिकरणात् विग्रहेण ज्यायान् । चकारात् शक्तिमत्तयापि विग्रहेण ज्यायान् । पाद्यार्पणार्थं योऽयं पादो मया ध्यातः, अस्य महिमा=महिम्ना विश्वा=सर्वाणि भूतानि सृष्टौ कार्यं कुर्वन्ति । अन्यच्च, अस्य देवस्य त्रिपात् त्रि=त्रितयं कालं भूतभवद्भविष्यात्मकं पातीति त्रिपात् स्वरूपं यदस्ति तद् अमृतम्, एकरसमविकारि दिवि=द्युलोके स्वाधिष्ठाने वर्तते । अत्र तु जगति एतस्य महिमैव, न स्वरूपतोऽवस्थितिः सार्वकालिकीति, महानहो महिमा देवस्य । सोऽयं महाविभूतिर्देवः पाद्यजलार्पणेन समर्चितोऽनुग्रहं विदधात्वित्याशीः ॥३॥

**४. अर्घ्यसमर्पणमन्त्रः—**

त्रिपादूर्ध्वम् उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥ ४ ॥

मया आराधनीयोऽयं देवः त्रिपात् सात्त्विकराजसतामसैः स्वीयैस्त्रिभिः पादैः=त्रिगुणात्मकानुग्रहैर्वा, ऊर्ध्वः=निरीहतया पूर्णकामतया च निश्चलोऽपि सन् मत्कार्यसिद्ध्यर्थमूर्ध्वः=स्वीयकूटस्थस्वरूपेण स्थितः सन् अपि, अत्र पूज्यस्थाने, उदैत्=उदयति प्रकाशितो भवति ।

**अथवा—**

मत्कार्यसफलतासम्बद्धजीवानां मनःसु प्रेरणायै उद्गतं भवति । कार्यसिद्ध्यर्थमनुग्रहं कृतवतोऽपि देवस्य पादः चरणचन्द्रिकारूपोऽनुग्रह इह मयि पुनरपि मदीयेच्छापूरणायाभवत्, वर्त्तते, भविष्यतीत्यपि चाहं विश्वसिमि ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

ततः तस्मादेव च अनुग्रहात् कारणात्, विषु = नानाविधमञ्चति, गच्छति, भोग्यरूपेणेति विष्वङ् नानाविधभोग्यवस्तुजातम्, व्यक्रामत् = विविधं क्रामति नानारूपतया मयि आयाति। अत एव च लोकानां दृष्टौ मयि, साशनमनशनं चेति साशनानशने–साशनम्=जङ्गमम् = जीवजातम्, अनशनम्=स्थावरजातम्। अभि उपसर्गवशात् क्रमेः पूर्वतोऽनुषङ्गः। अभि = ममाभिमुखं क्रमतः = आयातः। देवानुग्रहेण कार्यसिद्धौ सत्यां स्थावरजङ्गमात्मकं फलसम्बद्धं जगत् मदभिमुखमायातीति वरदहस्तस्यास्य मया हस्तप्रक्षालनीयजलसमर्पणेन पूजनं क्रियते।

अथवा--

उत्तरार्धस्यायमर्थः–ततः = तस्मादेव चानुग्रहकारणाद्, इह, पूर्वतोऽनुकर्षणीयम्। अस्मिन् पूजाकर्मणि मयि विषये वा, विष्वङ्-विषु = नानाविधतया भक्तधैर्यवर्धनाय, अञ्चति = गच्छति, इति विष्वङ्, कृपासिन्धोर्देवस्य हस्तावयवः। साशनम् = जङ्गमजीवजातम्। अनशनं स्थावरं तत्त्वम्। तदुभये, अभि = अभिलक्ष्य, वि = विविधम्, अक्रामत् = गतिशीलमभवदित्यहं जलेनानेन प्रक्षालनविधयाऽर्चयामि, इति ॥४॥

५. आचमनीयसमर्पणमन्त्रः--

ततो विराडजायत विराजो अधि पूरुषः।
स जातो अत्यरिच्यत पश्चाद् भूमिमथो पुरः ॥५॥

ततः पूज्यस्य भवतोऽनुग्रहकारणाद् मम भाग्यं, विराट् = विविधम् नानाविधानुग्रहप्राप्तसाधनैः राजते शोभत इति विराट् = सुखिनो जीवनम्, अजायत = भूतमित्याशंसा। सुखिनश्च जीवनाद् विराजः, अहम्, अधि पूरुषः = पुरुषाणां प्रधानो भवानि।

सः विराट्=मम सुन्दरं जीवनं, लोकेषु ज्ञातं माम् अत्यरिच्यत = सर्वेभ्यः सामान्यजनेभ्योऽतिक्रम्य विभिन्नमकरोत्, सर्वेषां श्रद्धापात्रतया। पश्चाद् भगवतोऽनुग्रहप्राप्तवैशिष्ट्यसिद्ध्यनन्तरं मैत्रीदृशा चाहं लोकैरवलोकितः, भूमिम्, उपलक्षणमेतत्, स्थावरसम्पत्तिं, अथ = अपि, पुरः पुत्रपश्वादिशरीरपुरश्च प्राप्स्यामीति भवतामनुग्रहः। अतः करुणासिन्धो! मया प्रदत्तमिदमाचमनीयम् गृहाण ॥५॥

६. स्नानीयसमर्पणमन्त्रः—

तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम्।
पशूंस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ॥६॥

यज्ञात्=यजनीयात् सर्वैर्हूयमानाद् आहूयमानाद्वा, सत्तया सर्वव्यापिनो विराजः पुरुषादेव, पूर्वमन्त्रे प्रतिपादितोत्पन्नौ भूमि-( लोकः ) पुरोः ( आकारयोः ), पृषदाज्यम् = पृ पूरणम्, षत् स्थापयति स्थिरयति इति पृषत्, योनिस्थिरकारकं स्थिरं तत्त्वम्, आजिघर्त्यवत्तं सान्तत्यं तद्धितावहम् आज्यं वंशानुक्रमविधायकं वीर्यतत्त्वम्, सम्भृतम् = स्थापितं पुरुषेणैव।

एवं च योनिस्थिरतावहवंशानुक्रमविधायितत्त्वयोः प्रभावेण तेषां पुरा वायव्यारण्यग्राम्यभेदेन त्रयो जीवविभागाः सृष्टाः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

वायव्यशब्देन वायवे हिताः, आकाशगामिने । वायुसहत्वेन तदुद्भावनेन वा गन्तारः पक्षिण आकाशचारीणि भूतानि । आरण्याः = अरण्ये हिताः सर्वपशवः, ग्राम्याः = ग्रामाय हिता मानवादयः । जलचराणाम् आरण्यग्राम्ययोरन्तर्भावः, तत्रैवोभयोपलब्धेः । अतो हे सृष्टिविधायक ! पापतापमूलभूताया अपवित्रताया दूरीकरणाय स्नानीयं जलं स्वीकुरु इति प्रार्थना ॥६॥

७. वस्त्रसमर्पणमन्त्रः –

तस्माद्यज्ञात्सर्व्वहुत ऋचः सामानि जज्ञिरे ।

छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥७॥

उत्पन्नानां जीवानां परस्परव्यवहारनिर्वाहाय विकासाय स्वस्वरूप-( ब्रह्म ) प्रतिष्ठायै च ऋचः सामानि, यजूंषि-उत्पन्नानि, एताः त्रिविधा वाच उत्पन्नाः । छन्दांसि इति दैशिकभाषोत्पत्तिसङ्केतः ।

सर्वहुतः सर्वैराह्वातव्याद् यज्ञाद् यजनीयात्, तस्मात्पूज्याद्देवात् पूर्वमन्त्रप्रतिपादितत्रिविधपशुत्वविनिवृत्तये, ऋचः सामानि जज्ञिरे = प्रादुर्भूतानि । तस्मादेव च छन्दांसि = आह्लादकानि विविधभाषोच्चारणानि, जज्ञिरे प्रादुर्भूतानि । पुनस्तस्मादेव यजुः=यज्ञस्वरूपविधायकं वेदवाक्यजातम्, अजायत=समुत्पन्नम् । यथेदं वागात्मकम् ऋगादितत्त्वं सर्वं जगदाच्छाद्य वर्त्तते, एवमिदं मत्समर्पितं वस्त्रं स्वीकृत्य मदनुग्रहाय स्वीकृतमिदं रूपमाच्छादयस्वेति प्रार्थना ॥७॥

८. यज्ञोपवीतसमर्पणमन्त्रः—

तस्मादश्वा अजायन्त ये के चोभयादतः ।

गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥८॥

यथा मानवादिजीवानां पशुभावनिवृत्त्यर्थम् ऋग्वेदादयो वेदा आविर्भूताः तथैवाऽऽसक्त्या पशुभावसिद्ध्यर्थं जङ्गमसम्पत्तिसाधनानामप्युत्पत्तिरिति, 'तस्मादश्वा' इति मन्त्रेण प्रतिपाद्यते ।

तस्मात् प्रसिद्धादेतस्मात् पूज्याद्देवादश्वा अजायन्त । तथा ये के च अन्येऽश्वा इव अशृङ्गाः सन्ति, त उभयादतो मुखे ऊर्ध्वाधोदन्तावलिसहिता अजायन्त । तस्मादेव च पुरुषाद् ह निश्चयेन गाव इत्युपलक्षणं सशृङ्गाणां पशूनाम्, ततश्च सर्वेऽपि सशृङ्गा एकतोदन्ताः पशवोऽजायन्त । तस्मादेव च पुरुषाद्, अजाश्च अवयश्च छागमेषाद्याः पशवः । अथवा अज् गतौ, गतिशीलाः पृथिवीचारिणो जीवाः, वयः पक्षिणश्च जाता उत्पन्नाः । हे पूज्यदेव, यया भवत्सृष्टैरेभिर्जीवैः सुखसाधनत्वेन परिज्ञातैर्मादृशोऽज्ञानी पुरुषः परितो बद्धो वर्त्तते; तदेतस्य बन्धस्य निवृत्त्यर्थं यज्ञस्वरूपस्य भवत उपव्यानायेदं यज्ञोपवीतं समर्पयामि । तदेतत्परिधाय मां यज्ञार्थमुपव्ययस्व, येनाहं—

"यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः"

इति भगवदुक्तेरावागमनकारिकर्मबन्धान्निवृत्तो भूयासमिति ॥८॥

९. गन्धसमर्पणमन्त्रः—

तं यज्ञम्बर्हिषि प्रोक्षन्पुरुषञ्जातमग्रतः ।

तेन देवा अयजन्त साद्ध्या ऋषयश्च ये ॥९॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

तमेनं सर्वस्यापि सृष्टेरग्रतः सर्वप्रथमं जातमुत्पन्नं यज्ञं यजनीयं पुरुषम्, बर्हिषि 'वृहि वृंहणे' शास्त्रीयत्वेन दृढेऽस्मिन् पूज्य आस्थाने विग्रहादावनुग्रहप्राप्तये, गन्धादिसुगन्धोपचारैः प्रौक्षन् प्रकर्षेण समसिञ्चन् व्यलिम्पन्निति भावः ।

एतेन गन्धाद्युपचारसमर्पणेन देवाः सृष्टिस्थितिविधायिनः, चन्द्रादित्यनक्षत्रादयः, ये च साध्याः कर्मणा सिद्धिं प्राप्ता देवाः, ये च ऋषयो लोकानुग्रहकारिणो दृष्टतत्त्वा वशिष्ठवामदेवादयः, ते सर्वेऽप्येनम् अयजन्त समपूजयन् । तस्मादहमप्येनं गन्धादिभिरनुलिप्य पूजयामि ॥९॥

**१०. पुष्पसमर्पणमन्त्रः—**

यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्यासीत्किम्बाहू किमूरू पादा उच्येते ॥१०॥

दशमो मन्त्रः पुष्पार्पणे विनियुज्यते । पुष्पं हि वृक्षेऽङ्कुरितम्, मुकुलितम्, विकसितम्, उपयुक्तं च सत् जगदुपकरोति । एवमेवायं विराट्पुरुषः स्वलीलया महत्तत्वादिरूपेणाङ्कुरितः, तन्मात्राभिर्मुकुलितः, पञ्चमहाभूतैर्विकसितः, सांसारिकप्रपञ्चविधया विनियुक्तो विश्वात्मको वर्त्तत इति, तमेवार्थं वेदपुरुषः प्रश्नविधया ज्ञापयति । अत्र मन्त्रे "व्यदधुः" इत्यस्य कर्तृत्वेन सृष्टिमूलतत्त्वानि महदहङ्कारादीनि ग्राह्याणि । ततश्च महदादीनि तत्त्वानि, यत् विभक्तिविपरिणामः, यं सृष्टिव्यवहारक्षमं नानाविधयोनिजीवसमवस्थितं पुरुषम्, तदाकारत्वेन ज्ञेयम्, व्यदधुः=रचनाविषयमकुर्वन् । तमेतं सृष्टिप्रपञ्चस्थितं पदार्थजातं मूलतः कतिधा कियत्संख्याकैः प्रकारैः व्यवहाराय व्यकल्पयन्=स्पष्टं व्यभजन् ।

सामान्येन प्रश्नस्य समाधानं सृष्टेरनन्तत्वाद् भवितुं नार्हतीति कृत्वा वेद एव प्रश्नं चतुर्धा विभज्य स्पष्टयति—मुखमित्यादिना । अस्य महतो विराट्पुरुषस्य मुखं नामावयवः, किं तत्त्वमासीत् । बाहू हस्तौ किं तत्त्वमासाते । ऊरू नाम शरीरावयवौ किं तत्त्वमासाते । पादौ च गतिसाधनौ किं तत्त्वमासाते । एवं तत्त्वविकासस्वरूपस्य परमाराध्यस्य देवस्य कृते विकासगुणकं पुष्पमिदं समर्पयामीति प्रार्थना ॥१०॥

**अथवा—**

देवाः साध्या ऋषयश्च पूज्यत्वेन यद् यं पुरुषं व्यदधुः=शास्त्रीयमार्गेण मनसि सविग्रहं समकल्पयन्, तमेतं विग्रहवन्तं पूज्यं देवम्=सृष्टिस्थितिसंहारात्मकाभिलषितकर्मणि कतिधा कतिभिः प्रकारैः व्यकल्पयन् व्यभजुः । एतस्याभिलषितपूरयितुर्देवस्य मुखम्=मुखरूपावयवः किमासीत्, बाहू च सृष्टिप्रपञ्चे किं वर्णनासाते । ऊरू एतन्नामकावयवौ च किं वर्णन स्तः, पादौ च वर्णेन किमभिलप्यौ भवतः । यथा मुखाद्यवयवजिज्ञासासापेक्षः पूज्यो देवः, तथैव समर्पितमिदं पुष्पमपि मुखाद्यवयवकल्पनापेक्षमस्तीति साधर्म्यादुपचारत्वेन समर्पितमिदं पुष्पं समस्यात्वेनोपस्थितं, मम वाञ्छितं समनन्तरकाल एव समादध्यादित्याशीः ॥१०॥

**११. धूपसमर्पणमन्त्रः—**

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।
ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत ॥११॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

धूपद्रव्योपचारसमर्पणेऽयं मन्त्रः पूजायां विनियुज्यते ।

धूपसुगन्धिर्हि सर्वस्य मानवस्य मनः प्रसादयति । तथैवास्य समर्प्यमाणस्य धूपस्य सुगन्धिर्देवस्यापि मनः प्रसादयिष्यतीति । तदेतौ प्रत्यक्षानुमानौ मनसि निधाय प्रसन्नमनसो देवस्यानुग्रहेण कथं प्रार्थितसिद्धिरिति मन्त्रो बोधयति । यतो हि प्रार्थितकार्यसिद्धौ सम्बद्धा ब्राह्मण-क्षत्रिय-वैश्य-शूद्रा इति चत्वारो वर्णा भवेयुः । ते च सर्वे पूज्यमानस्यास्य देवस्यावयवभूता एव सन्ति, महाभाग्यादिति, मन्त्रेऽस्मिन् चतुर्णां वर्णानामङ्गत्वं प्रार्थितकार्यसिद्धेः सरलतापादकमेवेति विनियोगानुगुणत्वेन धीः कर्तव्या । देवाराधनेऽहं ज्ञातानज्ञातान् प्रार्थितकार्यसफलतासम्बद्धान् वर्णान् एवं देवावयवत्वेन स्मरामि ।

अस्य देवस्य ब्राह्मणो मुखम् = मुखात्मकोऽवयव आसीत् अस्ति, भवति । राजन्यो बाहू= एतद् रूपोऽवयवः कृतो 'वर्तत' इत्यध्याहार्यम् । यत् स्वीयस्वार्थनिर्वर्तनकुशलं तत्त्वमस्ति—तद्, वैश्यो वर्णोऽस्य देवस्योरू, एतन्नामकोऽवयवः कृतोऽस्ति । 'अस्य' इति पूर्वस्थितमत्रापि योज्यम् । देवस्य, महिम्ना शूद्रो वर्णः, पद्भ्यामिति तृतीया पूर्वप्रोक्तावयवत्रयाणां विभक्त्यनुसारं प्रथमायां विपरिणेतव्या । ततश्च पद्भ्यामिति = पादौ, अजायत = जायेते देवानुग्रहात् । एवं च प्रसन्नमनाः देवः सर्वानपि वर्णान् अवयवतयापाद्य मम प्रार्थितमवश्यं साधयतीति मन्त्रार्थोऽनुध्येयः ।

अथवा--

साम्प्रतिकलोकव्यवहारानुसारिणी व्याख्या । सम्प्रति हि लेखनकार्यप्रधाने युगे कार्यसम्बद्धाश्चत्वारो वर्णा भवन्ति—ये लोकविधया स्वामी-अधिकारी-करणिक-परिचारकपदैर्व्यपदिश्यन्ते । त एवेमे चत्वारः क्रमेण ब्राह्मण-क्षत्रिय-वैश्य-शूद्रेति पारिभाषिकतया विज्ञेयाः ।

१२. दीपसमर्पणमन्त्रः—

चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
श्रोत्राद् वायुश्च प्राणश्च मुखादग्निरजायत ॥१२॥

चन्द्रमा मनस इति मन्त्रेण दीपोपचारसमर्पणं भवति । दीपो ज्योतिरूपः । प्रकृतौ च त्रीणि ज्योतींषि स्पष्टं प्रसिद्धानि—पृथिव्यामग्निः, अन्तरिक्षे चन्द्रमाः, द्यवि सूर्यः । एतेषां ज्योतिषां महत्त्वम् उपयोगश्च जीवनाधारभूतस्य प्राणतत्त्वस्य वायोश्च अनुग्रहेणैव भवितुमर्हति । बहिर्विस्तृतानां विषयाणां ज्योतीरूपैर्ज्ञानेन्द्रियैः प्रकाश उपलभ्यते । अत एवास्मिन्मन्त्रे विषयग्राहिणां ज्योतिष्ट्वेनात्मनः परस्य तात्त्विकं ज्ञानमुपदिशतां ज्ञानेन्द्रियाणां ज्योतिर्भिर्ज्योतिषां माहात्म्यमुपयोगं च प्रकाशयद्भ्यां प्राणवायुभ्यां चाराध्यदेवस्य ज्ञानेन्द्रियतया प्रतिपादनं क्रियते ।

तथाहि—विषयज्ञाने समर्हितस्य मनस इन्द्रियस्य सकाशात् चन्द्रमा जातः=प्रादुर्भूतः । देवस्य चक्षुरिन्द्रियाच्च सूर्यो ज्योतिरजायत । देवस्य श्रोत्राच्चेन्द्रियात् प्राणो वायुश्चाजायेताम् । मुखाद मुखोपलक्षिताद वागिन्द्रियादग्निर्ज्योतिरजायत । एवं च यथा इमानि ज्योतींषि सर्वं जगत्प्रकाशयित्वोपकुर्वन्ति, एवमेवायं समर्प्यमाणं प्रतीकज्योतिर्मयो दीप आराध्यदेवस्यानुग्रहेण मम

CC-0. Sampurnanand University Collection. Digitized by eGangotri

मनश्चक्षुः श्रोत्रवागिन्द्रियेषु अभिलषितफलप्रतिबन्धकं तमो निरस्य कार्यंसफलतानुकूलं सज्ज्योतिः प्रकाशयेदिति प्रार्थ्यते ।

१३. नैवेद्यसमर्पणमन्त्रः—

नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्त्तत ।
पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन् ॥१३॥

नाभ्या आसीदित्यनेन नैवेद्यं समर्प्यते । नैवेद्ये समर्पणीयं वस्तुजातं मूलतो भूम्याः लभ्यते । भूमिरप्यन्तरिक्षप्रदत्तवर्षाभिर्विना द्युलोकगतसूर्यस्य तापेन विना च वस्तूनि जनयितुं न शक्नोति । तस्मादेतस्मिन् मन्त्रे भोज्यवस्तूनाम् उत्पत्तिसहायकानां त्रयाणां लोकानां पूज्यदेवता-वश्यत्वबोधनाय देवताया विश्वरूपत्वं, तदवयवेभ्यो लोकव्यवस्था च प्रतिपाद्यते । देवस्य नाभ्याः =नाभेरवयवादन्तरिक्षं लोक आसीत् = प्रादुर्भूतम् । शीर्ष्णोऽवयवाच्च द्यौर्लोकः समवर्तत समुत्पन्नम्, पद्भ्यां सकाशाच्च भूमिरुत्पन्ना ।

तथा च भागवते—

"शीर्ष्णोऽस्य द्यौर्धरा पद्भ्यां खं नाभेरुदपद्यत" (३।६।२६) इति ।

श्रोत्राद्देवस्यावयवाद् दिशः प्राच्याद्या उत्पन्नाः । तथा श्रोत्रादेव कर्णपरम्परानुश्रुतकृषिवि-धानेन जनाः तत्तद्दिक्षु वैशिष्ट्येन भूमिजलवायुतापाद्यनुसारेणानुकूल्यतयोत्पद्यमानान्लोकान् विविध-भोज्यपदार्थानकल्पयन् = उत्पादितवन्तः । लोकयन्ति = चाक्षुषास्तित्त्वेन प्रवर्तयन्ति जीवनमिति लोकाः = भोज्यानि वस्तूनि ।

एवं च पूजनीयस्य देवस्य कृपया तत्तदवयवभूतलोकत्रयाणां साहाय्येन तत्तद्दिक्षूत्पन्न-भोज्यपदार्थान् पारम्परिकविधिना जना उत्पादयन्ति । तानि यथाशक्ति संङ्गृह्य भवने नैवेद्यात्म-नोपहराणीति शेषः ।

१४. ताम्बूलसमर्पणमन्त्रः

यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोऽस्यासीदाज्यङ् ग्रीष्म इध्मः शरद्धविः ॥१४॥

'यत्पुरुषेण' इति ताम्बूलं समर्पयेत् । यद् = यदा, देवा विराड्रूपस्य देवस्याराधकाः पुरुषेण=पुरुषस्य महिम्ना उद्भूतेन, हविषा=नैवेद्येन, यज्ञं पूजाविधानम्, अतन्वत=विस्तारं चक्रुः, तदा मुखशुध्यर्थं ताम्बूलमप्युपाजह्रुः । तत्र ताम्बूले मसृणता—उष्णता-सेव्यत्वं चेति त्रयो गुणाः सन्ति । ते त्रयोऽपि गुणा ऋतुमुखेन पदार्थान्तररूपकेण च मन्त्रोत्तरार्धेनोच्यन्ते । अस्य ताम्बूलस्य वसन्त ऋतुः आज्यम् = स्निग्धतापादकमस्ति । ग्रीष्म ऋतुश्चेध्मः = ताम्बूलगतमुष्णतागुणं विकासयति । शरदृतुश्च हविः = सेव्यत्वगुणं सन्निधत्त इति, उष्णगुणकं स्निग्धं सेव्यं ताम्बूला-ख्यं हविर्भवते पूज्याय देवायोपहराणीति शेषः ।

१५. प्रदक्षिणामन्त्रः—



CC-0. Sampurnanand University Collection. Digitized by eGangotri

सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञन्तन्वाना अबध्नन्पुरुषं पशुम् ॥१५॥

'सप्तास्य' इति मन्त्रेण प्रदक्षिणात्मक उपचारः क्रियते । अस्यार्थः---यत् = यदा, देवाः = भूदेवाः स्वर्देवाश्च, यज्ञं देवताऽऽराधनात्मकं पूजात्मकं यज्ञं तन्वाना विस्तृतवन्तोऽभूवन्, तदा पशुम् = पश्यति कर्मफलसिद्धिमित्यभिलषितस्वार्थसाधकं पुरुषं मादृशं नरं पूजाविधानात्मककर्मणि अबध्नन्, शास्त्रीयानुशासनात्मकेन विषयेभ्यो व्यावृत्य व्रतस्वीकारेण नियन्त्रितमकुर्वन् । अस्य पूजात्मकाराधनस्य, सप्त परिधयः, परितो धीयन्ते इति परिधयः, सर्वदाऽनुध्येयतत्त्वान्यभूवन् । तानि च सप्त—इच्छा, फलम्, कर्म, देवता, उपचारद्रव्यजातम्, त्यागः, गुरुक्रमश्चेति । तथा त्रिः सप्त = सप्तकानां त्रिकम्, कर्मणोऽपूर्वस्य समिध उद्दीपनपदार्थत्वेन कृताः = विहिताः सन्ति ।

**तच्च सप्तकत्रिकम्**—स्वात्म-देश-कालरूपेण वर्त्तते । तत्र--

१. **स्वात्मसप्तकम् यथा**---यजमानः, आचार्यः, शुद्धिः, भावः, शाखा, वेदः, मन्त्रश्चेति ।

२. **देशसप्तकम् यथा**---क्षेत्रम्, नदी, पर्वतः, सन्निधिः, शाला, अधिकरणम्, प्लवश्चेति ।

३. **कालसप्तकं यथा**—संवत्सरः, अयनम्, ऋतुः, मासः, पक्षः, तिथिः, वासरश्चेति ।

यथातत्त्वज्ञैर्मनुष्यदेवैरभिलषितसिद्धिदर्शनत्वेन पूर्वोक्तानि यज्ञावयवानि कृतानि सन्ति, तान्यज्ञानादल्पशक्तेर्वा मयोपेक्षितानि यदि भवन्ति, तदा तानि सर्वाणि विश्वात्मकस्य पूज्यस्य भवतो देवस्य परिक्रमणेन पूर्णानि सन्त्वित्याशीः प्रार्थ्यते ।

**अथवा**

अस्य देवस्य प्रार्थितसिद्धये पूज्यमानस्य सप्त परिधयः परितो बुद्धौ धीयन्ते, न तु प्रत्यक्षतया ज्ञातुं शक्यन्त इति परिधयः, सप्त सप्तसङ्ख्याका उपचारा आसन् सन्ति । त्रिः = त्रयः सप्त च = मिलित्वोपचाराः देवविग्रहध्यानेनैकाधिकाः षोडशसमिधः = सम्यग् इध्यन्ते = प्रत्यक्षं स्वरूपतो दीप्यन्त इति समिधः । प्रत्यक्षं स्पष्टम् अर्चाविग्रहे दीपयितारः कृता वेदानुशासनेन वैदिकर्षिवचनप्रचारितेन ।

वेदेन स्वीयस्य प्रत्यक्षेण अप्रत्यक्षेण ( स्मार्तपौराणादिदेवाः ) हविर्भाक्त्वेन स्तुतिभाक्त्वेन च द्योतिता यत् यदा यज्ञं स्वीयभागप्राप्तिसाधनं कर्मगणं तन्वाना मानवेषु विस्तारमनसोऽभवन्, तदा एतं मादृशं पूजयितारं प्रार्थयितारं पशुं = पश्यति कार्यसिद्धिमिति सफलताभिलाषिनं मम मानसम् एतस्मिन् षोडशोपचारपूजनविधौ अबध्नन् दाढर्येन समयोजयन् । तस्मादहं देवं पूजयामि परिक्रमामि च ।

**१६. पुष्पाञ्जलिसमर्पणमन्त्रः**—

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः । १६॥

यज्ञेन यज्ञमित्यनेन पुष्पाञ्जलिसमर्पणं क्रियते । यज्ञेन = शास्त्रविहितकर्मात्मकेन, यज्ञम् = यजनीयम् आराध्यं देवम्, देवाः = तत्त्वज्ञा भूदेवा ऋषयः, अयजन्त = देवपूजामकुर्वन् । तानि देवपूजात्मकानि धर्माणि, धारयति फलसिद्धिमिति धर्मः, अभीष्टफलप्रदायिकर्माणि, प्रथमानि = उपनीतानुपनीताधिकारित्वात्, प्रथमानि सर्वतः प्रथमं करणीयान्यासन् = अभवन् ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

ये शास्त्रानुवर्त्तिनो जना एवं पूजायज्ञमनुतिष्ठन्ति, ते यजमानाः । ह = निश्चयेन, महिमानो महिमासम्पन्नाः सन्तो नाकं दुःखाभावम् अभिलषितफलसिद्धिमिति भावः । सचन्ते प्राप्नुवन्ति । तथा यत्र = यस्मिन् शास्त्रीये पथि, पूर्वे = एतत्कालसीमातः प्राचीनाः, साध्याः = साधयन्ति कार्यजातमिति साध्याः = फलसिध्यनुसन्धातार ऋषयः, सन्ति = श्रद्धातिशयेन वर्त्तन्ते, तत्रैवाहमपि श्रद्धादाढर्येन शास्त्रपथा सर्वथा कर्मफलसिद्धिं लभेयमिति पुष्पाञ्जलिप्रदानेन प्रार्थयति ।

अथवा

प्रथमो यज्ञशब्दो वेदबोधितापूर्वजनको द्रव्यदेवतात्यागत्रितयानुलक्षितक्रियाकलापं प्रत्युच्यते ( तु० श० ब्रा० ३।९।४।२३ ) करणविभक्त्या निर्देशात् । द्वितीयश्च यज्ञशब्दः सृष्टिविस्तारकलौकिकक्रियासङ्घवाचकः[१] कर्मकारकत्वात् ।

'अयजन्त' इत्यत्र 'यजिः सङ्गतिकरणार्थः' अत्र समन्वयरूपं करणात्मकं च भावमाचष्टे[२] । एवं च—

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्[३] ॥

इति भगवद्गीतावाक्यम्, एतद् मन्त्रव्याख्यानरूपं भवति । गीतावाक्ये 'अनेन' इति करणविभक्तिर्वेदबोधितादृष्टफलकक्रियाकाण्डमाचष्टे ।

'प्रसविष्यध्वम्' इति 'प्रसवं कुरुध्वम्' इति विश्लेषणे प्रसवस्य कर्मकारकस्य सृष्टिविस्तारकलौकिकक्रियाकलापार्थकस्य स्पष्टावगतिः । ततश्चायं मन्त्रार्थः—

यज्ञेन कर्मकाण्डेन, यज्ञम् = स्वाभिमतसृष्टिविस्तारकक्रियाकलापम्, अयजन्त=समन्वायन् । वैदिकयाज्ञिकप्रक्रियामनुलक्ष्यैव सृष्टिविधौ व्यवहारो नियमश्चेति मनीषया प्राजानन् । तानि वेदानुरूपाणि लौकिकान्याचारविचारादीनि, धर्माणि—स्मृतिपुराणादिशिष्टानुगृहीतग्रन्थप्रोक्तत्वाद्[४] दृष्टप्रयोजनत्वसम्भवेऽपि, अदृष्टोत्पादकत्वाद् 'वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्मः' इति—धर्मलक्षणान्तर्भूतानि, प्रथमानि = प्रथमानुष्ठेयानि, आसन् = श्रौतादपि पूर्वमाचरणीयानि । अत एव—

'उपनीय गुरुः शिष्यं···शौचाचारांश्च शिक्षयेत्' ।—या० स्मृ० १।१५

इति संस्काराणां प्राथम्यमाचारशिक्षणं चोपदिष्टम् ।

तृतीयपादस्य स्पष्टार्थावगमाय—वैदिकयज्ञप्रक्रियाविधानुरूपाणां श्रौत-स्मार्त-पौराण-सदाचाराणामनुवर्तयितारो धार्मिका ये सन्ति, इत्यध्याहार्यम् । ते धार्मिका महिमानः = लौकिकमहिमाशालिनो जनैः प्रशंसिताः । नाकम् = स्वर्गं लोकं ह = निश्चयेन सचन्ते = सेवन्ते । स्वर्ग-

---

१. तुलनीयम्—'अजातो ह वै तावत् पुरुषो यावन्न यजते, स यज्ञेनैव जायते' ।
( जै० उ० ३।१४।८ )

२. तु० 'ह्वलति ( कम्पते, विभ्रंश्यति ) वा एष यो यज्ञपथादेति ( अतिक्रामति ) । एति वा एष यज्ञपथाद् यद् अयज्ञियान् यज्ञेन प्रसजति' । ( श० ब्रा० ५।३।२।४ )

३. भगवद्गीता—३।१० ।

४. 'अद्भिर्यज्ञः प्रणीयमानः प्राङ् तन्यते । तस्मादाचमनीयं पूर्वमाहारयति' । (गो० १।३९ )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

समसुखावाप्तेरमुत्र स्वर्गभोगावाप्तेश्च ज्ञापनाय सचेः प्रयोगो विशिष्यते । नाकस्य बहुविधत्वात् कस्मिन्नाके धार्मिकाणां स्थितिर्भविष्यतीति जिज्ञासां प्रशमयति भगवान् वेदः—

यत्र=नाके, पूर्वे=अस्माकं [1]पूर्वजाः, साध्याः–कर्मभिः साधितलोकत्वात् साध्याः= धार्मिका मनुष्याः (सम्प्रति ऋषित्वेन समादृताः), देवाः=मनुष्यदेवा भूत्वा सन्ति । तत्रैवायमप्याधुनिकोऽनुष्ठाता गमिष्यतीति पुरुषसूक्तमन्त्राणामर्थः ॥ १६ ॥

**पुरुषसूक्तेन सर्वदेवतापूजा**

एवं पूजनपरतया व्याख्यातस्य पुरुषसूक्तस्यास्य मन्त्रैः सर्वदेवतापूजा भवतीत्याश्वलायनगृह्यपरिशिष्टे देवपूजाप्रकरण उक्तम् । तथाहि—

'षोडशैमानुपचारान् पौरुषेणैव सूक्तेन प्रत्यृचं सर्वत्र प्रयुञ्जते' ।

अस्यार्थस्त्र्यम्बकाचार्येणैवं विवृतः—"इमानिति वचनं पुरुषसूक्तमन्त्रार्चनपक्षेऽपीमानेव पूर्वोक्तानुपचारान् दद्यात् । पौरुषेणैव सूक्तेनेति नान्येन षोडशर्चेन सूक्तेनेत्यर्थः । सर्वत्रैव सर्वासु देवतास्वित्यर्थः । प्रयुञ्जते यज्ञविदः" । (आ० पु० १८३ पृ०) इति ।

अत्रेदं विचार्यते–यत् पौरुषेणानेन सूक्तेन कथं सर्वासां देवतानामर्चनं युज्यत इति । अत्रोच्यते—

समस्तस्यापि जगतः सृष्टिस्थितिलयकर्तृकमेकमेव तत्त्वमस्ति । परं तदेव तत्त्वम्—'महाभाग्याद् देवताया एक आत्मा बहुधा स्तूयते' इत्याचार्याणां प्रतिपादितसिद्धान्तस्य—

'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद् विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः' ॥

(ऋ० १।१६४।४६; अथर्व ९।१०।२८; निरुक्त ७।१८)

'रूपं रूपं मघवा बोभवीति'—(ऋ० ३।५३।८)

'रूपं रूपं प्रतिरूपो बभूव'—(ऋ० ६।४७।१९)

इत्यादिश्रुतिवचोभिः समर्थनात्, यथासम्प्रदायमाचार्योपदेशमनुसृत्य यथाभिमतया मूर्त्या यथाकालं शास्त्रविधानमनुसृत्य समर्च्यते । अत एव श्रीमद्भागवत एकादशस्कन्ध उद्धवं प्रति श्रीकृष्णवाक्यम्—

लब्धानुग्रह आचार्यात्तेन सन्दर्शितागमः ।
महापुरुषमभ्यर्चेद् मूर्त्याभिमतयात्मनः ॥ इति ।

एवं च एकस्यैव महापुरुषत्वेन पुरुषत्वेन वा समभिहितस्यात्मनोऽभिमतायां शास्त्रतोऽनुमतायां च विभिन्नक्रियासु तत्तद्रूपेण विहितायां मूर्तौ सर्वदा सर्वत्रैकेनैव मन्त्रगणेन पुरुषसूक्ताख्येन तत्तदुपचारसमर्पणं न विरुध्यते ।

अतएव पुरुषसूक्तेन स्त्रीदेवतासु पूजनविचार आचारेन्दौ (पृ० १९३) व्यवस्थाप्यते । यथा—"ननु देव्याः पूजने कथमेते मन्त्राः पुरुषपदघटिता उपयुज्यन्ते, उच्यते—वैदिकमन्त्राणां ब्रह्मपरत्वात् । तस्य च सर्वव्यापकत्वाद् वैदिकमन्त्राः सर्वत्रोपयोक्तुं शक्याः । दृश्यते च सर्वा-

१. तु०—मनुर्हं अग्रे यज्ञेनेजे । तदनुकृत्येमाः प्रजा यजन्ते । (श० ब्रा० १।५।१।७)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

नुक्रमण्यां जातवेदस इति मन्त्रेऽग्निर्देवता मन्त्रलिङ्गेनापि सैव। परमस्मिन् (चैत्ययज्ञापरनामके-अ० इ० १७६) पूजायज्ञे तु 'जातवेदस इति शक्तेः' इत्युक्तत्वाद् गौरी देवता क्वचिद् दुर्गापि। तद्वदत्रापि ज्ञेयम्। उक्तं च शौनकीय ऋग्विधाने—

आनुष्टुभस्य सूक्तस्य त्रिष्टुबन्तस्य देवता।
पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृतः ॥ इति।

तस्माद् जगद्बीजरूपेण स्त्रीपुरुषाभेद इति ज्ञाते न कश्चिद् विरोध" इति।

तस्मात् पुरुषसूक्तेन स्त्रीदेवतानां पुरुषदेवतानां च निःशङ्कतया यथावचनं पूजनं कर्तव्यमिति सिद्धयति।

**देवपूजनावधिः**

तदिदं देवपूजनं कियत्कालं मानवेन कर्तव्यमिति विचार आध्यात्मरामायणीयं श्रीराम-वचनं द्रष्टव्यम्। तद्यथा—

यावन्न पश्येदखिलं मदात्मकं तावन्मदाराधनतत्परो भवेत्।
श्रद्धालुरत्यूर्जितभक्तिलक्षणो यस्तस्य दृश्योऽहमहर्निशं हृदि ॥

अन्यत्रापि—

तावद् मामर्चयेद्देवं प्रतिमादौ स्वकर्मभिः।
यावत्सर्वेषु भूतेषु स्थितं चात्मनि न स्मरेत् ॥ इति ( नि० प्र० मा० ६२ )

एवं चोपचारसमर्पणदेवाराधनक्रिया चेयमभ्यस्ता मानवस्य हृदयग्रन्थिनिर्वर्तिका भवति। अत एव श्रीमद्भागवते स्पष्टमुपदिश्यते यथा—

'य आशु हृदयग्रन्थिं निर्जिहीर्षुः परात्मनः।
विधिनोपचरेद् देवम्........................' ॥ इति।

हृदयग्रन्थिभेदश्चात्मदर्शनफलक एव। तथा चोक्तम्—

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ इति।

ततश्च सोपचारदेवाराधना—'आत्मा वा अरे द्रष्टव्यः' इति श्रुत्युपदिष्टस्यात्मतत्त्वज्ञानस्य सर्वथोपकारिकास्तीति सिद्धयति।

यत्तु स्मृतिपुराणादिवचनेषु तत्तद्देवताराधनविषये काम्यानां फलानां श्रवणम्, तत्तु प्रवर्तनाय। अत एव श्रीमद्भागवते स्पष्टमेवोक्तम्—

वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे।
नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः ॥ इति।

**पुरुषसूक्तपरिग्रहविचारः**

सर्वसाधारणपुराणस्मृत्यादिषु "पुरुषसूक्तेन स्तुवीत", इत्यादिवाक्येनानेकशाखागतपुरुष-सूक्तत्वेनोपस्थितस्य कस्य ग्रहणम्? तत्र गुप्तवतीसप्तशतीटीकाकारेणानेकतन्त्रेषु पठितस्य मन्त्रस्य

CC-0. Sampurnanand University Collection. Digitized by eGangotri

भेदाभावः साधितः। तथाहि–'अथायं सप्तशतीमन्त्रश्लोकसंख्याभेदेन त्रिविधोऽपि व्यवस्थयैव त्रिभिस्तन्त्रैरवलम्बितोऽपि न भिद्यते।

शाखान्तराधिकरणन्यायेन कर्मण इव, वेदान्तप्रत्ययन्यायेन विद्याया इव, मन्त्रस्याप्यैक्याद् ईषद्विलक्षणत्वस्याप्रयोजकत्वादिति। ऐतरेयब्राह्मणभाष्ये विद्यारण्यपादा अपि—'शाखाभेदेऽपि मन्त्रभेदाभावादर्थभेदो न युक्तः' इत्याहुः।

तद्वदनेकशाखासु पठितस्य पुरुषसूक्तादिपदव्याहृतस्याभिन्नत्वेन येन केनाप्यनुष्ठानकरणे बाधकाभावः। अत एव सर्वपृष्ठचेष्ट्यादौ 'वासन्तः' 'वासन्तिकः' इत्यादावीषद्वैलक्षण्याप्रयोजकत्वमूलक एव याज्ञिकाचारोऽप्युपपद्यते। तत्रापि यच्छाखापठितमन्त्रस्तच्छाखीयानाम्, अन्येषां काठकादीनां त्वैच्छिक इति सर्वत्र व्यवस्था।

**पुराणे पुरुषसूक्तव्याख्या—**

पुरुषसूक्तमन्त्रेषु केषाञ्चिन्मन्त्राणां श्रीमद्भागवते द्वितीयस्कन्धेऽपि विवरणमुपलभ्यते।

१—प्रथममन्त्रस्य 'सहस्र शीर्षा' इत्यस्य यथा—

कालं कर्मं स्वभावं च मायेशो मायया स्वया।
आत्मन् यदृच्छया प्राप्तं विबुभूषुरुपाददे ॥ ( २।५।२१ )
वर्षपूगसहस्रान्ते तदण्डमुदकेशयम्।
कालकर्मस्वभावस्थो जीवोऽजीवमजीवयत् ॥ ( २।५।३४ )
स एव पुरुषस्तस्मादण्डं निर्भिद्य निर्गतः।
सहस्रोर्वङ्घ्रिबाह्वक्षः सहस्राननशीर्षवान् ॥ ( २।५।३५ )
सर्वं पुरुष एवेदं भूतं भव्यं भवच्च यत्।
तेनेदमावृतं विश्वं वितस्तिमधितिष्ठति ॥ ( २।६।१५ )

सृष्ट्वाग्रे महदादीनि सविकाराण्यनुक्रमात्।
तेभ्यो विराजमुद्धृत्य तमनु प्राविशद् विभुः ॥ २१ ॥
यमाहुराद्यं पुरुषं सहस्राङ्घ्र्यूरुबाहुकम्।
यत्र विश्व इमे लोकाः सविकासं समासते ॥ २२ ॥
यस्मिन् दशविधः प्राणः सेन्द्रियार्थेन्द्रियस्त्रिवृत्।
त्वयेरितो यतो वर्णास्तद्विभूतीर्वदस्व नः ॥ २३ ॥

भागवतम्—३।७।२१-२३
वराहपुराणेऽपि—६।१३

२—'पुरुष एवेदं सर्वम्' इति द्वितीयमन्त्रस्य यथा—

अहं भवान् भवश्चैव त इमे मुनयोऽग्रजाः।
सुरासुरनरा नागाः खगा मृगसरीसृपाः॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

गन्धर्वाप्सरसो यक्षा रक्षोभूतगणोरगाः ।
पशवः पितरः सिद्धा विद्याधराश्चारणा द्रुमाः ॥
अन्ये च विविधा जीवा जलस्थलनभौकसाः ।
ग्रहर्क्षकेतवस्तारास्तडितः स्तनयित्नवः ॥
सर्वं पुरुष एवेदं भूतं भव्यं भवच्च यत् ।
तेनेदमावृतं विश्वं वितस्तिमधितिष्ठति ॥
स्वधिष्ण्यं प्रतपन् प्राणो बहिश्च प्रतपत्यसौ ।
एवं विराजं प्रतपंस्तपत्यन्तर्बहिः पुमान् ॥
नारायणे भगवति तदिदं विश्वमाहितम् ।
गृहीतमायोरुगुणः सर्गादावगुणः स्वतः ॥
इति तेऽभिहितं तात यथेदमनुपृच्छसि ।
नान्यद्भगवतः किंचिद्भाव्यं सदसदात्मकम् ॥ (भागवतम् २।६।१२-१६, ३०, ३२)

३—'एतावानस्य' इति तृतीयमन्त्रस्य यथा—

सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात् ।
महिमैष ततो ब्रह्मन् पुरुषस्य दुरत्ययः ॥
पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुः ।
अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्धसु ॥ ( भा० २।६।१७-१८ )

४—'त्रिपादूर्ध्वं' इति चतुर्थमन्त्रस्य यथा—

पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुः ।
अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्धसु ॥
पादास्त्रयो बहिश्चासन्नप्रजानां य आश्रमाः ।
अन्तस्त्रिलोक्यास्त्वपरो गृहमेधोऽबृहद्व्रतः ॥
सृती विचक्रमे विष्वङ् साशनानशने उभे ।
यदविद्या च विद्या च पुरुषस्तूभयाश्रयः ॥ ( भा० २।६।१८-२० )

५—'ततो विराडजायत' इति पञ्चममन्त्रस्य यथा—

यस्मादण्डं विराड् जज्ञे भूतेन्द्रियगुणात्मकः ।
तद् द्रव्यमत्यगाद् विश्वं गोभिः सूर्य इवातपन् ॥ ( भा० २।६।२१ )

६—९ 'तस्माद्यज्ञात्' इत्यारभ्य 'तं यज्ञम्' इति षष्ठप्रभृति नवमान्तमन्त्राणां यथा—

यदास्य नाभ्यान्नलिनादहमासं महात्मनः ।
नाविदं यज्ञसम्भारान् पुरुषावयवादृते ॥
तेषु यज्ञस्य पशवः सवनस्पतयः कुशाः ।
इदं च देवयजनं कालश्चोरुगुणान्वितः ॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

वस्तून्योषधयः स्नेहा रसलोहमृदो जलम् ।
ऋचो यजूंषि सामानि चातुर्होत्रं च सत्तम ॥
नामधेयानि मन्त्राश्च दक्षिणाश्च व्रतानि च ।
देवतानुक्रमः कल्पः सङ्कल्पस्तन्त्रमेव च ॥
गतयो मतयः श्रद्धा प्रायश्चित्तं समर्पणम् ।
पुरुषावयवैरेते सम्भाराः सम्भृता मया ॥
इति सम्भृतसम्भारः पुरुषावयवैरहम् ।
तमेव पुरुषं यज्ञं तेनैवायजमीश्वरम् ॥
ततस्ते भ्रातर इमे प्रजानां पतयो नव ।
अयजन् व्यक्तमव्यक्तं पुरुषं सुसमाहिताः ॥
ततश्च मनवः काले ईजिरे ऋषयोऽपरे ।
पितरो विबुधा दैत्या मनुष्याः क्रतुभिर्विभुम् ॥ (भा० २।६।२२-२९)

१०-११—दशममन्त्रप्रश्नोत्तररूपस्यैकादशस्य 'ब्राह्मणोऽस्य' इति मन्त्रस्य यथा—

पुरुषस्य मुखं ब्रह्म क्षत्रमेतस्य बाहवः ।
ऊर्वोर्वैश्यो भगवतः पद्भ्यां शूद्रोऽभ्यजायत ॥ (भा० २।५।३७)

मुखतोऽवर्तत ब्रह्म पुरुषस्य कुरूद्वह ।
यस्तून्मुखत्वाद्वर्णानां मुख्योऽभूद् ब्राह्मणो गुरुः ॥
बाहुभ्योऽवर्तत क्षत्रं क्षत्रियस्तदनुव्रतः ।
यो जातस्त्रायते वर्णान् पौरुषैः कण्टकक्षतात् ॥
विशोऽवर्तन्त तस्योर्वोर्लोकवृत्तिकरीर्विभोः ।
वैश्यस्तदुद्भवो वार्तां नृणां यः समवर्तयत् ॥
पद्भ्यां भगवतो जज्ञे शुश्रूषाधर्मसिद्धये ।
तस्यां जातः पुरा शूद्रो यद्वृत्त्या तुष्यते हरिः ॥
एते वर्णाः स्वधर्मेण यजन्ति स्वगुरुं हरिम् ।
श्रद्धयाऽऽत्मविशुद्ध्यर्थं यज्जाताः सह वृत्तिभिः ॥ (भा०३।६।३०—३४)

१३—त्रयोदशस्य 'नाभ्या आसीद्' इत्यस्य यथा—

यस्येहावयवैर्लोकान् कल्पयन्ति मनीषिणः ।
कट्यादिभिरधः सप्त सप्तोर्ध्वं जघनादिभिः ॥
भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः ।
हृदा स्वर्लोक उरसा महर्लोको महात्मनः ॥
भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः ।
स्वर्लोकः कल्पितो मूर्ध्ना इति वा लोककल्पना ॥ (भा. २।५।३६,३८,४२)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

शीर्ष्णोरस्य द्यौर्धरा पद्भ्यां खं नाभेरुदपद्यत ।
गुणानां वृत्तयो येषु प्रतीयन्ते सुरादयः ॥
आत्यन्तिकेन सत्त्वेन दिवं देवाः प्रपेदिरे ।
धरां रजः स्वभावेन पणयो ये चताननु ॥
तार्तीयेन स्वभावेन भगवन्नाभिमाश्रिताः ।
उभयोरन्तरं व्योम ये रुद्रपार्षदां गणाः ॥ (भा० ३।६।२७–२९)

एवमन्येंष्वपि पुराणेषु पुरुषसूक्तमन्त्राणामभिप्राय उपोद्वलितो लब्धुं शक्यते ।

पुरुषसूक्तस्य यथा देवपूजने महिमातिशयः, तथा जपेऽपि महिमातिशयो बौधायनधर्मसूत्रे ३।१०, ऋग्वेदीयद्वारपालसूक्तेषु, यजुर्वेदीयसामवेदीयद्वारपालसूक्तेषु च पाठ-विधानादिभिरवगम्यते । पुरुषसूक्तमन्त्रैर्हवनमनुष्ठाय त्रिविधो विष्णुयागस्तु याज्ञिकेषु प्रसिद्ध एवेति शिवम् ।

तदेवं महनीयस्य सूक्तस्य पौरुषस्य हि ।
पूजाभावसुधाख्येयं व्याख्या भगवतेऽर्प्यते ॥

इति शिवम् ।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

# वैदिकवाङ्मये अर्कशब्दस्य व्युत्पत्तिः

श्रीशिवनारायणशास्त्री

अध्यक्षः, संस्कृतविभागः, किरोड़ीमलमहाविद्यालयः,

ई ४।२५, मॉडल टाउन्, दिल्ली ९

निरुक्तं नाम वेदाङ्गमिति विदितं वेदविद्याविदाम् । अङ्गं चाङ्गिनि तिष्ठदेव खल्वङ्गतां सार्थयतीति निरुक्तमपि वेदे सदेव तस्याङ्गत्वं भजति ।

निरुक्तमिति खलु निर्वचनान्न भिद्यते । तच्च निर्वचनं समस्तेऽपि वैदिके वाङ्मये प्राचुर्येणोपलभ्यते । 'परोक्षप्रिया हि देवाः' इति हि श्रूयते । देवस्तुतिप्रधान ऋग्वेदे च निर्वचनमपि परोक्षेणेव यदि लभ्यते, नानुचितमिव तद् विदुषां प्रतीयेत । परस्तादपि च क्वचित् परोक्षेण क्वचिच्च प्रत्यक्षेण निर्वचनं समुपलभ्यते। विस्तरेणायमर्थोऽस्माभिः 'वैदिकवाङ्मय में भाषाचिन्तन'[1] इति ग्रन्थे प्रत्यपादि । इह तु वैदिके वाङ्मये समुपलब्धान्यर्कशब्दस्य निर्वचनान्यधिकृत्य किञ्चित् प्रपञ्च्यते ।

'अर्क'शब्दस्य व्युत्पत्तिः ऋग्वेदस्य कतिपयानामृषीणां प्रयोगेषु परोक्षेणेवोपलभ्यते । ततोऽर्वाचीनेषु ग्रन्थेष्वपि शब्दोऽयं क्वचित् परोक्षेण क्वचिच्च प्रत्यक्षेण व्युत्पादितो लभ्यते ।

ऋग्वेदसंहितायामर्कशब्दः √अर्च्-धातोर्निष्पन्नेनाख्यातेन सह प्रयुक्त उपलभ्यते। एतेनास्य शब्दस्यार्चतिना सह कश्चिद् व्युत्पाद्यव्युत्पादकभावः सम्बन्ध इति परोक्षेण लभ्यते । अयं चार्चतेरर्कशब्दस्य व्युत्पत्तिं सूचयन् प्रयोग ऋग्वेदे द्वयोरर्थयोर्लभ्यते—

(१) अर्कः = स्तोत्रम्—ऋग्वेदेऽर्कस्य व्युत्पत्तिं सूचयत्सु प्रयोगेषु स्तोत्रार्थोऽर्थान्तरापेक्षयाऽऽधिक्येन लभ्यते । तथाहि—नोधा गौतमः वभ्रुरवस्युश्चात्रेयौ, श्रुष्टिगुः, काण्वश्चेत्येत ऋषयोऽर्कं देवताया अर्चनस्य कर्मत्वेनार्चतिना सह प्रायुञ्जत[2] । कुत्स आङ्गिरस ईदृश एव स्थलेऽर्चतेः कर्मत्वेन वचश्शब्दमदात्[3] । एतेन 'अर्क–वचश्शब्दा अभिधेयत्वेनैकस्यैव पदार्थस्य प्रतिपादनं शब्दान्तरेण कुरुत' इति वस्त्वञ्जसा समुपलब्धुं शक्यते—कुत्सप्रयुक्तं 'वचः' देवताया स्तुतौ प्रयुक्तं वाक्यं चेदस्ति, नोध-आदीनामर्कोऽपि देवताया स्तुतेर्भिन्नं किञ्चिद् वस्त्वन्तरं

---

१. ग्रन्थोऽयम् इण्डोलॉजिकल् बुक् हाउस्, वाराणसी, दिल्ली इत्यतः प्रकाशितः १९७४ ई० वर्षे उत्तरप्रदेशशासनेन पुरस्कृतश्च ।

२. द्रष्टव्या ऋग्वेदसंहिता १।६२।१ । सुवृक्तिभिः स्तुवत ऋग्मियायार्चामार्कं नरे विश्रुताय ।
५।३०।६ । तुभ्येदेते मरुतः सुशेवा अर्चन्त्यर्कं सुन्वन्त्यन्धः ।
५।३१।५ । वृष्णे यत्ते वृषणो अर्कमर्चान् इन्द्र, ग्रावाणो अदितिः सजोषाः ।
८।५१।४ । यस्मा अर्कं सप्तशीर्षाणमानृचुस्त्रिधातुमुत्तमे पदे ।
८।५१।१० । तुरण्यवो मधुमन्तं घृतश्चुतं विप्रासो अर्कमानृचुः । इति ।

३. द्र० सैव १।१०१।१ । प्र मन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना । इति ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

नास्ति। दीर्घतमा औचथ्योऽपि गायत्रसामवाकैः सहार्कमपि प्रयुक्तवान्।[1] अतो नोधः-प्रभृतीनाम् अर्कोऽपि स्तोत्रार्थादभिन्नः स्यादिति निर्णेतुमुचितम्।

मरुतां स्तुतेः प्रसङ्गेनार्चतेः कर्मत्वेनोपलब्धेष्वर्कस्य कतिपयेषु प्रयोगेष्वयं स्तोत्रार्थे वा, स्तुत्यर्थे वाऽर्थान्तरे वेति न स्पष्टतया प्रतीयते। तथाहि—मेधातिथिः, काण्वः, गोतमो रहूगणश्च मरुतोऽर्कमानृचुरित्याहतुः।[2] अत्रायमर्कशब्दो नोध आदीनां प्रयोगेष्विव स्तोत्रवाची स्यात्। मेधातिथस्य मन्त्रस्य भाष्ये सायणः शतपथोक्तमर्कस्याप्पर्यायत्वमाधृत्य तत्रत्यमर्कमुदक-वाचकं बभाषे। गौतमीयस्य मन्त्रस्य भाष्ये चास्यार्थमर्चनीयमिति भणितवान्[3]। अगस्त्यो मैत्रावरुणिरपि मरुतः सोमपानायार्कमर्चन्तीति ददर्श[4]। अत्र खलु वीरस्य ( प्रकृतस्येन्द्रस्य ) पौरुषकार्याणां विद्वद्भिर्मरुद्भिः कृतमर्कस्यार्चनीयस्येन्द्रस्यार्चनमप्यभिप्रेतं स्यात्। इन्द्रस्य स्तुतौ मरुद्भिः प्रस्तुतस्यार्कस्य स्तोत्रस्य गानमप्यभिप्रेतं स्यात्; गौरिवीतिर्हि शाक्त्यो मरुत इन्द्र-मर्चन्तीत्युवाच[5], अगस्त्यश्चैकत्र मन्त्रेऽर्चते कर्मत्वेन ब्रह्मन्निति पदं स्तोत्रपर्यायमेव प्रयुयोज[6]।

किन्तु कतिचनान्यन्यानि साक्ष्याणि सन्ति यानि स्तोत्रार्थोऽयमर्कशब्द इति साधन औप-यिकानि भवन्ति। तथाहि—"तुभ्येदेते मरुतः सुशेवा अर्चन्त्यर्कं सुन्वन्त्यन्धः" ( ऋ० ५।३०।६ ) इति बभ्रुरात्रेयो मरुत इन्द्रायार्कमर्चन्तीति प्रयोगेऽर्कं स्तोत्रपर्यायमभिप्रैत्। अवस्युरात्रेयोऽपि वृषणो मरुतोऽन्ये च केचन देवा वृष्ण इन्द्रायार्कमर्चन्तीति भावेनार्कं स्तोत्रार्थं एव प्रायुङ्क्त— "वृष्णे यत्ते वृषणो अर्कमर्चान् इन्द्र, ग्रावाणो अदितिः सजोषाः" ( ऋ० ५।३१।५ )। वसिष्ठेन मैत्रावरुणिना प्रयुक्तं मरुताम् 'स्वर्काः' इति विशेषणमपि[7] मरुतः सुस्तोत्रवन्त इत्यभिप्रायेणैव। मरुत्प्रयुक्तोऽर्कश्च झञ्झावातप्रयुक्तो ध्वनिः स्तनयित्नुस्तनितं चेति न तिरोहितं वेदविद्याजुषाम्। झञ्झावातादनन्तरं वर्षधारा भुवमाप्लावयन्तीति वर्षात् प्राक्कालीनोऽयं ध्वनिर्मरुत्कृतो वर्षा-

---

१. द्र० ऋ० १।१६४।२४। गायत्रेण प्रति मिमीते अर्कम्, अर्केण साम। त्रैष्टुभेन वाकम्॥

२. द्र० ऋ० १।१९।४। य उग्रा अर्कमानृचुरनाधृष्टास ओजसा॥

१।८५।२। त उक्षितासो महिमानमाशत दिवि रुद्रासो अधि चक्रिरे सदः।
अर्चन्तो अर्कम्, जनयन्त इन्द्रियमधि श्रियो दधिरे पृश्निमातरः॥

३. द्र० सायणीयमृग्वेदभाष्यम् १।१९।४। ये मरुत उग्राः=तीव्राः सन्तोऽर्कम्=उदकम् अर्चितवन्तः=वर्षेण सम्पादितवन्त इत्यर्थः। अर्कशब्दस्योदकवाचित्वं वाजसनेयिन आम-नन्ति—आपो वा अर्कः ( श० ब्रा० १०।६।५।२ )। ऋग्भा० १।८५।२। अर्कम्= अर्चनीयमिन्द्रम् अर्चन्तः=पूजयन्तः।

४. द्र० ऋ० १।१६६।७। अर्चन्त्यर्कं मदिरस्य पीतये, विदुर्वीरस्य प्रथमानि पौंस्या।

५. द्र० ऋ० ५।२९।१। अर्चन्ति त्वा मरुतः पूतदक्षाः। २। अनु यदीं मरुतो मन्दसान-मार्चन्निन्द्रं पपिवांसं सुतस्य। ६। अर्चन्तीन्द्रं मरुतः सधस्थे, त्रैष्टुभेन वचसा बाधत द्याम्।

६. द्र० ऋ० १।१६५।१४। ओ षु वर्त मरुतो, विप्रमच्छेमा ब्रह्माणि जरिता वो अर्चत्।

७. द्र० ऋ० ७।३५।९। शं नो भवन्तु मरुतः स्वर्काः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

कृदिन्द्रस्य स्तव इवेत्यौपमिकम् । एतच्च कारणं यदगस्त्यो मरुतामिमं शब्दमभ्रियां वाचमाह[1]। गोतमेन रहूगणेन तु तादृशशब्दवत्त्वान्मरुतां रथः स्वर्कः ( शोभनध्वनियुक्तः ) इत्युक्तम्[2] ।

अर्कः = स्तोत्रम् इति भावेन अर्कशब्दस्य प्रयोगोऽर्चनस्य करणत्वेनान्यैर्ऋषिभिरपि व्यधायि । तथाहि—'इम उ त्वा पुरुशाकः प्रयज्यो जरितारो अभ्यर्चन्त्यर्कैः' ( ऋ० ६।२१।१० ) इति । भरद्वाजो बार्हस्पत्य इन्द्रमर्कैः = स्तोत्रैरभ्यर्चितं बभाषे । एवमेव ऋजिश्वा नाम भारद्वाजो भरद्वाजा इन्द्रमर्कैरभ्यर्चन्ती उवाच—"एवा नपातो मम तस्य धीभिर्भरद्वाजा अभ्यर्चन्त्यर्कैः" ( ऋ० ६।५०।१५ ) इति । वसिष्ठो मैत्रावरुणिरपि अर्चनकरणमर्कं स्तोत्रार्थे प्रयुङ्क्ते—एवेदिन्द्रं वृषणं वज्रबाहुं वसिष्ठासो अभ्यर्चन्त्यर्कैः" ( ऋ० ७।२३।६ ) इति । "तमर्कैरभ्यर्चन्ति वत्सं ब्रह्म सन्तं ब्रह्मणा वर्धयन्तः" ( तै० ब्रा० २।८।८।९। ) इति तैत्तिरीया अपि स्तोत्रार्थं एवार्कमभ्यर्चतिनाऽऽमनन्ति ।

मरुतां स्तुतौ प्रयुक्त एकस्मिन् मन्त्रे भरद्वाजो बार्हस्पत्यो निकटस्थाञ्जनान् प्रार्थयते "प्र चित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम्" ( ऋ० ६।६६।९ ) इति । अत्रार्कोऽन्नमिति सायणः—मारुताय = मरुतां गणाय, चित्रम् = दर्शनीयम्, अर्कम् = अन्नम्, हविः, 'स्वधा अर्कः' ( निघण्टौ ) इत्यन्ननामसु पाठात्, प्रभरध्वम् = सर्वे यूयं प्रभरत । एतच्चापव्याख्यानमित्यस्माकं मतम् । तथाहि ऋग्वेदे प्रभरतेः कर्मत्वेन कुत्रचित्तु अन्नं दत्तम्[3], क्वचिच्च स्तुतेरेव कश्चित् पर्यायः[4], अपरत्र चोभे अपि ।[5] भरद्वाजोऽर्कमभ्यर्चतेः करणत्वेन स्तोत्रार्थे विहितवानित्यवोचाम् । तस्माद् भरद्वाजस्यास्मिन् मन्त्रेऽर्कः स्तोत्रार्थे नास्तीति सूचयितुं किञ्चिन्मानं नोपलभामहे । भरद्वाजेनान्नार्थेऽर्कस्य प्रयोगः स्पष्टतया विहितो नास्माभिरुपलब्धः, स्तोत्रार्थे तु समुपलब्धः । तेन भरद्वाजोऽत्रार्कमन्नार्थे प्रयुङ्क्ते इति नासंशयं वक्तुं क्षमम् ।

(२) अर्कः = स्तोतव्यः—"श्रुतकक्षस्याङ्गिरसस्य इन्द्राय मद्वते सुतं परि ष्टोभन्ति नो गिरः । अर्कमर्चन्तु कारवः" ( ऋ० ८।९२।१९ ) इति मन्त्रेऽर्कशब्दः सोमस्य

---

१. द्र० ऋ० १।१६८।८ । यदभ्रियां वाचमुदाहरन्ति ।

२. द्र० ऋ० १।८८।१ । आ विद्युन्मद्भिर्मरुतः स्वर्के रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः ।

३. द्र० ऋ० १।१२२।१ । प्र वः पान्तं रघुमन्यवोऽन्धो यज्ञं रुद्राय मिल्हुषे भरध्वम् ।

४. द्र. ऋ० ७।५।१ । प्राग्नये तवसे भरध्वं गिरम् । १३।१ । प्राग्नये विश्वशुचे धियन्धेऽसुरघ्ने मन्म धीतिं भरध्वम् । ८८।१ । प्र शुन्ध्युवं वरुणाय प्रेष्ठां मतिं वसिष्ठ, मील्हुषे भरध्वम् । १०।१११।१ । मनीषिणः, प्र भरध्वं मनीषां यथा यथा मतयः सन्ति नृणाम् ।

५. द्र० ऋ० ३।६१।५ । अच्छा वो देवीमुषसं विभातीं प्र वो भरध्वं नमसा सुवृक्तिम् । अत्र खलु नमसा ( अन्नेन ) सह सुवृक्तिं ( स्तुतिं ) प्र भरध्वम् इति कथनेन नमोऽपि प्रभरणस्य कर्माभिप्रेतम्—नमः प्रभरध्वम्, तेन सह सुवृक्तिं प्रभरध्वम् इति । ५।४१।३ । उत वा दिवो असुराय मन्म प्रान्धांसीव यज्यवे भरध्वम् । ७।४।१ । प्र वः शुक्राय भानवे भरध्वं हव्यं मतिं चाग्नये सुपूतम् ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

समानाधिकरण इति अर्कः = अर्चनीय इत्यर्थः प्रसङ्गानुकूलः । वेङ्कटमाधवसायणावप्येवमेवाभाषिषाताम् ।[1]

अस्मिन्नर्थे स्पष्टतरः प्रयोगो वैश्वामित्रेण मधुच्छन्दसा गायन्ति "त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः । ब्रह्माणस्त्वा शतक्रतो, उदवंशमिव मेमिरे" ( ऋ० १।१०।१ ) इत्यत्र स्तुत्यार्थेऽर्चतिकर्मणोऽर्कस्य, स्तोतृपर्यायेऽर्किणि चार्कस्य स्तोत्रार्थे विहितः ।

अर्कस्यानयोः स्तोत्र-स्तोतव्यरूपयोरर्थयोरभिव्यक्तिश्च मन्त्रांशस्यैकस्य शौनकीयायामथर्वसंहितायां तैत्तिरीये ब्राह्मणे चोपलब्धाभ्यां पाठभेदाभ्यां सुष्ठुतरामिव खलु विहितोपलभ्यते । तथाहि—"घृतेनार्कमभ्यर्चन्ति वत्सं ब्रह्म सन्तं ब्रह्मणा वर्धयन्ति" ( अ० सं० १३।१।३३ ) इत्याथर्वणे पाठे अभ्यर्चनस्य कर्मार्कशब्दः । अयं च द्वितीयवाक्यस्य द्वितीयान्तेन ब्रह्मणा समानार्थो यस्तत्रैव तृतीयान्ताद् ब्रह्मणो ( स्तोत्रार्थाद् ) भिद्यते । एतेनात्रार्कशब्दोऽर्चनीय इत्यर्थे प्रयुक्त इति लभ्यते । अस्यैव च मन्त्रस्य पाठभेदस्तैत्तिरीयब्राह्मण एवमुपलभ्यते—"तमर्कैरभ्यर्चन्ति वत्सं ब्रह्म सन्तं ब्रह्मणा वर्धयन्ति" ( तै० ब्रा० २।८।८।९ ) इति । अत्र अर्कैरिति तृतीयान्तं पदं परस्मिन् वाक्ये ब्रह्मणेति तृतीयान्तेन समम्, अभ्यर्चन्तीति क्रियापदस्य च करणमिति स्पष्टम् । तेनात्रायमर्कशब्दोऽर्चतेः करणे स्तोत्रार्थे व्युत्पन्नोऽभिप्रेत इति पाठेनानेनायातम् ।

ऋग्वेदस्यैषु सर्वेषु प्रयोगेषु अर्कशब्दोऽर्चतिना सम्बद्धः, अर्चतेरपि कर्मणि स्तोत्र-स्तोतव्ययोरर्थयोः, करणे च स्तोत्रमात्रार्थे व्युत्पन्नोऽभिप्रेतः । प्रकृतेस्तालव्यः स्पर्शश्चकारो विकृतावर्के कण्ठ्यस्पर्शे ककारे परिवर्तित इति ( १ ) शब्दस्यानेकार्थकतायाः, ( २ ) तदाधारश्च कारकभेद इति, ( ३ ) चकारककारयोः पारस्परिकः सम्बन्धोऽस्तीति ज्ञानानि एभिः प्रयोगैः सूच्यन्ते ।

अर्कशब्दः परवर्तिनि वैदिके वेदाङ्गे वाङ्मये व्याख्यात उपलभ्यते । परं तत्रास्येदं व्युत्पादनं तस्य वैदिकवाङ्मयस्य विशिष्टाभिः परिस्थितिभिः प्रभावितं दृश्यते, विशुद्धं भाषाशास्त्रीयं नास्ति । तथाहि—तैत्तिरीये काठके च यजुषि अर्कशब्दस्य व्याख्या मिथकस्यैकस्य माध्यमेनैवं कृता लभ्यते—

अङ्गिरसः सुवर्गं लोकं यन्तोऽजायां घर्मं प्रासिञ्चन् ।
सा शोचन्ती पर्णं पराऽजिहीत । सोऽर्कोऽभवत् । तदर्कस्यार्कत्वम्[2] ।

अत्रार्कनाम्नः क्षुपस्योत्पत्तिस्तु कथामाध्यमेन कृता, परमस्य शब्दस्य व्युत्पत्तिर्न दत्ता ।

इतः श्रेयसी स्थितिर्लभ्यते वाजसनेयिनां ब्राह्मणे—"नैवेह किं चनाग्र आसीत् । मृत्युनैवेदमावृतमासीदशनायया । अशनाया हि मृत्युः । तन्मनोऽकुरुत 'आत्मन्वी स्याम्' इति ।

---

१. द्र० वेङ्कटमाधवीयमृग्वेदभाष्यम् ८।९२।१९ । इन्द्राय मदनशीलायाभिषुतं सोममस्माकं वाचः स्तुवन्तु । अर्चनीयं सोममर्चन्तु स्तोतारश्चेति । सायणीयमृग्भाष्यम्—ततः कारवः = स्तुतिकारिणः स्तोतारश्च अर्कम् = सर्वैरर्चनीयं सोमम् अर्चन्तु = पूजयन्तु ॥

२. द्र० तैत्तिरीयसंहिता ५।४।३।४, काठकसंहिता २१।६ इति च ॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

सोऽर्चन्नचरत्। तस्यार्चत आपोऽजायन्त। 'अर्चते वै मे कमभूद्' इति तदेवार्कस्यार्कत्वम्। ...आपो वा अर्कः।[1]

अत्र याज्ञवल्क्योऽर्कशब्दमर्चतिना कशब्दस्य योगेन व्युत्पादयितुमभिप्रैति—अर्च + क = अर्क्क = अर्क इति।

यास्कस्तु चतुर्ष्वर्थेषु शब्दमिमं निरवोचत्—(१) अर्चनीयो देवः, (२) अर्चनस्य करणं मन्त्रः, (३) भूतान्यर्चतीत्यन्नम्, (४) कटुकिम्ना संवृत्तत्वेन चार्कनामा वृक्ष[2] इति। एतेषां त्रिषु निर्वचनेष्वयं शब्दः कारकभेदेनार्चतेरेव व्युत्पादितः। चतुर्थ्यां व्याख्यायां कस्माद् धातोर्निष्पादित इति न स्पष्टम्। सम्पूर्वेण वर्ततिना कदाचिदर्चतिरेवार्थतो नाभिप्रेतोऽत्र।

यास्कीयेषु प्रथमेषु त्रिषु निर्वचनेष्वाद्ये निर्वचने तु त एव स्तो येषां व्युत्पत्तिर्ऋग्वेदेऽभिप्रेता।

इयांस्तु विशेषः—ऋग्वेदेऽर्कशब्दस्य प्रयोगो मन्त्रार्थेऽधिकमिव जातः, देवार्थे चाल्प इति निरुक्तेऽस्य व्याख्यानां क्रमे मन्त्रार्थे व्याख्या प्रथमतां प्राप्नुयाद् देवार्थे च व्याख्या द्वितीयं स्थानमाभजेत्। यास्केन तु देवार्थे व्याख्या प्रथमं कृता, ततश्च मन्त्रार्थे। अत्र हेतुश्च मन्ये तन्मतेन मन्त्रापेक्षया देवार्थं प्रत्यादरस्याधिक्यं स्यात्।

अर्कार्चती उभावपि भारोपीयौ स्तः। अस्य भाषाकुटुम्बकस्य कतिषुचन भाषासु गीते व्यक्तोच्चारणे च लभ्येते[3]। एतेनर्ग्वेदीयर्षीणामनयोर्व्युत्पाद्यव्युत्पादकसम्बन्धस्य चिन्तनं सर्वथा भाषाशास्त्रीयमस्ति इत्यलम्।

---

१. द्र० शतपथब्रा० ( माध्यन्दिनीया शाखा ) १०।६।५।१।

२. निघण्टावर्कशब्दोऽनेकार्थकः क्लिष्टश्चेत्युभयथाऽभिप्रेत्य समाम्नातः। तत्रायं नैघण्टुके काण्डे अन्नार्थे ( २।७।१८ ) वज्रार्थे ( २।२०।१० ) च सङ्कलितोऽप्यैकपदिके काण्डे ( ४।२।२३ ) अप्यस्ति। अत्र यास्केनायं चतुर्धा व्याख्यातः—( १ ) अर्को देवो भवति, यदेनमर्चन्ति, ( २ ) अर्को मन्त्रो भवति, यदनेनार्चन्ति; ( ३ ) अर्कमन्नं भवति, अर्चति भूतानि; ( ४ ) अर्को वृक्षो भवति, संवृत्तः कटुकिम्ना ( ५।४ ) इति।

३. द्र० डॉ० सिद्धेश्वरवर्मणः एटिमालाजीज् आफ् यास्क, पृष्ठ १७। अर्क 'a mantra' has been traced to √अर्च् Indo-Eurerk 'to sound elearly', Arm. erg 'song.

●●●

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# आचार्यवाचस्पतिमिश्रस्य जीवनं कृतित्वञ्च

श्रीकेदारनाथत्रिपाठी
दर्शनविभागाध्यक्षचरः, प्राच्यविद्याधर्मविज्ञानसङ्काये
काशीहिन्दूविश्वविद्यालयः, वाराणसी

द्वादशदर्शनारण्यानीपञ्चाननान् विश्वविश्रुतान् महर्षिकल्पसर्वतन्त्रस्वतन्त्रश्रीमदाचार्यवाचस्पतिमिश्रान् को नाम न जानाति संस्कृतवाङ्मयसेविषु बुधजनेषु। प्रस्तुतवाचस्पतिवद् दर्शनशास्त्रधर्मशास्त्रचिकित्सादिशास्त्रप्रणेतारोऽनेके वाचस्पतयोऽभूवन्निति जानन्तीतिहासविदः। तत्र च मिश्रोपनामका अपि वाचस्पतयोऽष्टावासन्, तत्रापि च दार्शनिकत्वेन ख्यातौ द्वावास्तामिति मन्यन्ते विपश्चितः। तयोस्तत्त्वचिन्तामणिप्रकाशन्यायतत्त्वालोकन्यायसूत्रोद्धार-खण्डनोद्धारकर्ता तु वाचस्पतिमिश्रः १४२८ तमे वैक्रमवर्षे स्थितोऽभूद्।

शिवेनोरसि विधृतौ पादौ नत्वापवर्गदौ।
व्यलेखि न्यायसूत्रस्य चैत्रे वस्वक्षिवासवे॥

इति तदीयन्यायसूत्रोद्धारग्रन्थे दर्शनान्निश्चीयते।

प्रस्तुतनिबन्धविषय आचार्यवाचस्पतिमिश्रो मिथिलादेशे खैरतनवमशताब्द्याः पूर्वार्धेऽभूदिति विद्यते निर्णयो बहुसङ्ख्यकविपश्चिताम्। अस्याचार्यस्य मिथिलादेशोद्भवत्वे न कस्यापि विवादः। मण्डनमिश्र-मुरारिमिश्र-पार्थसारथिमिश्र-सुचरितमिश्रादीनां मिश्रशब्दान्तानां मैथिलत्वेनायमपि मैथिल एव। एवं 'श्रुतिस्मृतीतिहासपुराणलक्षणागमविहितमर्थमाचरतां तन्निषिद्धञ्च परिहरतां दाक्षिणात्यानाम्''[1] इति तल्लेखदर्शनादपि मैथिलत्वमस्य समर्थितं भवति।

अस्य तु पित्रोर्नामनी नोपलभ्येते, किन्तु भामती अस्यासीत् पत्नी। सन्ततिविहीनाया यस्याः सन्तोषाय तन्नाम्ना प्रसिद्धां भामतीटीकां व्यरचयदिति बहूनां मान्यता वरीवर्ति। भामती तस्य कन्यासीदित्यपि मतान्तरम्। अन्येषां मते नेपालप्रान्तभागे भामानामको ग्रामविशेषः, यत्र स्थितेन वाचस्पतिमिश्रेण भामतीग्रन्थो निरमायीति।

इत्थञ्चास्य मिथिलादेशोद्भवत्वे विवादाभावेऽपि कालविषये तु विवादो नाद्यापि शाम्यति। इदन्तु सत्यमस्ति यद् विवेच्यविषयप्रवचनैकलक्ष्याः प्राञ्चो मनीषिणो न स्वदेशकालोल्लेखेषु महत्त्वमातिष्ठन्ते। अतस्तेषां देशकालादिर्यद्यन्धकारगर्तनिमग्न ऐतिहासिकानां विवादविषयतामश्नुवीतेत्यत्र न किमप्याश्चर्यम्। प्रस्तुत आचार्यवाचस्पतिमिश्रस्तु न्यायसूचीनिबन्धान्ते स्वसमयं निर्दिशन्नपि स्वसमकालिकं नृपविशेषमुल्लिखन्नपि च वस्तुतः कदाभूदिति प्रश्नविषयतां नातिशेतेऽद्यापि।

आचार्यवाचस्पतिमिश्रा न्यायसूचीनिबन्धाख्ये न्यायसूत्रनिर्णायके ग्रन्थे—

न्यायसूचीनिबन्धोऽसावकारि सुधियां मुदे।
श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे॥

---

१. द्र० न्या० वा० ता० टी०, पृ० ४७।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

इति श्लोकमुल्लिख्य नवमशताब्द्या अन्तिमभागे वर्षविशेषसंज्ञामनिर्दिश्यैव ( ८९८ तमे वर्षे ) स्वस्थितिं सूचयामासुः । एवं ब्रह्मसूत्रशाङ्करभाष्यभामत्यामन्ते—

नरेश्वरा यच्चरितानुकारमिच्छन्ति कर्तुं न च पारयन्ति ।
तस्मिन् महीये महनीयकीर्तौ श्रीमन्नृगेऽकारि मया निबन्धः ।।

इत्युल्लिख्य च स्वस्य नृगराजकालिकत्वमावेदयन्ति । तथापि वत्सरपदेन शकाब्दा वा ग्राह्या वैक्रमाब्दा वेति । तथा कोऽयं नृगः ? एतन्नामा एतदुपाधिर्वा कश्चिद्राजा, तस्यापि राज्ञः कः काल इत्यत्रापि विसंवाद एव प्रायो विदुषाम् ।

उपर्युक्तन्यायसूचीनिबन्धस्थश्लोके वत्सरशब्दः शकाब्दवाचक एवेति मन्यन्ते श्रीविन्ध्येश्वरीप्रसादद्विवेदिनः, श्रीदिनेशभट्टाचार्याः, महामहोपाध्यायाः श्रीहरप्रसादशास्त्रिणश्च । एतदनुसारेण ८९८ शाकाब्द + ७८ = ९७६ तमे खीस्ताब्द एव न्यायसूचीनिबन्धनिर्माणकाल इति खैस्तदशमशताब्दचन्ते वाचस्पतिमिश्रस्थितिः सिध्यति ।

भामत्यन्तश्लोकोक्तस्य राज्ञो नृगस्यापि समयः स एव । यतो हि शार्ङ्गधरपद्धतौ विशिष्टराजवंशवर्णनप्रसङ्गे शाकम्भरीदेशे चउतानक्षत्रियवंशे समुत्पन्नस्यैतिहासिकानुसारेण ११०० तमे शाकाब्दे वर्तमानस्य हम्मीरराजस्य समापण्डितश्रीदामोदरस्यात्मजेन श्रीशार्ङ्गधरेण कृताद् नृगनृपतिपाषाणयज्ञयूपस्य नामोद्धरणादेवं सम्भाव्यते ।

११८२ तमशाकाब्दासन्नसमयवर्तिना वोपदेवेन शार्ङ्गधरसंहिताया व्याख्यानादपि शार्ङ्गधरस्योक्तसमयो न विरुध्यत इति तत्पूर्वभावित्वं नृगनृपतेर्निर्णीयमानं वाचस्पतिमिश्रस्यापि ८९८ तमशाकाब्दस्थितिमत्त्वमुपोद्बलयति ।

एवं कीर्तिवर्मराजसमकालिकः प्रबोधचन्द्रोदयनाटकप्रणेता १०२० तमशाकाब्दे वर्तमानः कृष्णमिश्रः प्रबोधचन्द्रोदये—

नैवाश्रावि गुरोर्मतं न विदितं तौतातिकं दर्शनम् ।
तत्त्वं ज्ञातमहो न शालिकगिरां वाचस्पतेः का कथा ।।

इति वाचस्पतिं स्मरन् न्यायसूचीनिबन्धोक्तं समयमेव द्रढयति ।

अपि च श्रीरामानुजाचार्याः १०१२ तमे शाकाब्दे यादवाचले मन्दिरे नारायणमूर्तिं स्थापितवन्त इति स एव रामानुजाचार्यसमयः । तैश्च खण्डनखण्डखाद्यकारिका समुद्धृता । खण्डनकाराच्च पूर्ववर्तिन उदयनाचार्याः स्वनिर्मिताया लक्षणावल्या निर्माणकालम् ९०६ तमशाकाब्दं स्वयं निर्दिशन्ति । तथा ते वाचस्पतिमिश्राणां तात्पर्यटीकाया उपरि तात्पर्यपरिशुद्धिं निर्मितवन्त इत्याचार्यवाचस्पतेः ८९८ तमशाकाब्दस्थितिमत्त्वं सर्वथा युक्तमेव । तदनुसारेण वाचस्पतिमिश्रस्थितिसमयः ९७६ तमं खीस्तवर्षम्, तथा १०१३ तमं विक्रमवर्षमायाति ।

यच्च डॉ० मेकडानलप्रभृतीनां कतिपयपाश्चात्त्यविदुषां कथनं यत् सांख्यतत्त्वकौमुद्यां वाचस्पतिमिश्रेण राजवार्त्तिककारिकोद्धरणाद् भोजराजसमयात् पश्चात्कालभावी वाचस्पतिरिति,

CC-0. Sampurnanand University Collection. Digitized by eGangotri

तन्न शोभनम्; राजवार्त्तिकस्य भोजराजनिर्मितत्वाभावात्। भोजराजेन तु राजमार्तण्डाभिधाना वृत्तिरेव योगसूत्रेषु रचितेति विन्ध्येश्वरीप्रसादद्विवेदिनां मतम्।[1]

किन्तूपर्युक्तद्विवेदिप्रभृतीनां विचारान् विरुन्धाना अन्ये विद्वांसो न्यायसूचीनिबन्धोपसंहारे लिखितं वत्सरपदं विक्रमवत्सरपरकं मन्यमानास्तदाधारेण वाचस्पतिमिश्रस्थितिं ख्रीस्तीयनवमशताब्द्याः पूर्वार्धे ( ८९८–५७=८४१ तमवर्षे ) निश्चिन्वन्ति। तेषु डॉ० गङ्गानाथझामहानुभावाः साङ्ख्यतत्त्वकौमुदीभूमिकायां श्रीवाचस्पतिमिश्रसमयम् ८४१ तमे ख्रीस्ताब्दे स्वीकृतवन्तः।

एतदुभयपक्षीयाणां मतं साधु विचार्य प्रसिद्धो गवेषको विद्वान् श्रीमदुदयवीरशास्त्रिमहोदयो झामहानुभावमतमेव विस्तरशः समर्थयति खण्डयति च श्रीद्विवेदिभट्टाचार्यादिमतम्। डॉ० कीथमहाशयो डॉ० वुड्समहाशयश्चापि झामतमेव समर्थयन्तौ न्यायसूचीनिबन्धस्थवत्सरपदं वैक्रमाब्दपरतयैव स्वीकुरुतः[2]।

किन्तु श्रीद्विवेदिमहाभागोऽपि न्यायसूचीनिबन्धस्थवत्सरपदं कथं न वैक्रमाब्दपरतया गृह्णाति, गृह्णाति च शाकाब्दपरतयेति वयमपि न विभावयामः, यतः स एव द्विवेदिमहाभागो नवीनवाचस्पतिमिश्रकृतन्यायसूत्रोद्धारान्ते लिखिते—

शिवेनोरसि विधृतौ पादौ नत्वापवर्गदौ।
व्यलेखि न्यायसूत्राख्यं चैत्रे वस्वक्षिवासवे॥

इति पद्ये वर्षविशेषनाम्नो निर्देशाभावेऽपि "वस्वक्षिवासवे" इत्यनेन १४२८ इति वैक्रमवर्षमेव स्वीकरोति। इत्थञ्च सत्यामपि समानायां स्थितौ प्राचीनवाचस्पतिमिश्रश्लोके वत्सरपदस्य शाकाब्दपरतया ग्रहणम्, नवीनवाचस्पतिमिश्रश्लोके च वैक्रमाब्दपरतया ग्रहणमित्यर्धजरतीयन्यायमनुहरति।

एवं वाचस्पतिमिश्रा न्यायवार्त्तिकतात्पर्यटीकां न्यायसूचीनिबन्धञ्चेत्युभावपि न्यायग्रन्थौ अव्यवहितपूर्वापरभावेन रचितवन्त इति विदुषां विश्वासः। अतः ८९८ तमशाकाब्दासन्नकाले वाचस्पतिमिश्ररचितायास्तात्पर्यटीकाया उपरि ९०६ तमशाकाब्दस्थितः प्रायो वाचस्पतिसमकालिक एवोदयनाचार्योऽनुपदमेव कथन्तरां तात्पर्यपरिशुद्धिं लिखेदिति न प्रतीतिमारोहति। समकालिकयोर्मूलकारव्याख्याकारयोः प्रायशोऽदर्शनात्। ८९८ तमवत्सरस्य वैक्रमसंवत्परत्वे तु ९०६ तमे शाकाब्दे स्थित उदयनाचार्यो वैक्रमसंवद्दृष्ट्या ९०६+१३५=१०४१ तमवैक्रमाब्दे, अर्थाद् वाचस्पत्यनन्तरं किञ्चिन्न्यूनसार्धैकशतवर्षानन्तरं तात्पर्यपरिशुद्धिं लिखितवान् भवेदिति विश्वासार्हं प्रतीयते।

एवं प्रसिद्धेन प्रायो व्यवहारो भवतीति बुद्ध्यैव न्यायसूचीनिबन्धश्लोके वाचस्पतिमिश्रा "वस्वङ्कवसुवत्सरे" इत्यत्र वैक्रमेति संवन्नाम न दत्तवान् भवेत्। उदयनाचार्यस्तु लक्षणावल्यां सामान्यतो वैक्रमाब्दप्रत्ययो मा भूदिति बुद्ध्या—

---

१. द्र० न्यायवार्त्तिकभूमिका।

२. हिस्ट्री आफ संस्कृतलिटरेचर, पृ० ४१७–४८३; तथा योगदर्शनव्यासभाष्याङ्ग्लानुवादभूमिका, पृ० २१–२३।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

तर्काम्बराङ्कप्रमितेष्वतीतेषु शकान्ततः ।
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम् ॥

इत्यत्र 'शकान्ततः' इति शकनाम विशेषतो निर्दिष्टवान् । दृश्यते हीदानीमपि ईशवीयेति पदमनुल्लिख्यापि केवलेन १९७५ वर्षम् १९७६ वर्षमिति रूपेण व्यवहारः । तत्र विनापि नामोल्लेखमीशवीयवर्षबोधस्तु सामान्यत एव जायते जनानामिति ।

तस्माद् न्यायसूचीनिबन्धश्लोकस्थं वत्सरपदं स्वरसतो वैक्रमाब्दपरमेवेति डॉ० झामहोदय-मतमेव साधु समञ्जसं प्रतीयते । तदनुसारेण ८९८ वि० सं०—५७=८४१ तमे ख्रीस्ताब्दे, अर्थाद् नवमख्रीस्तशताब्द्याः पूर्वार्धेऽवश्यं श्रीमद्वाचस्पतिमिश्राणामवस्थितिरभूदिति विभावयामि । नृगनाम्नो नृगोपाधिधारिणो वा नृपतेः समयोऽपि स एवोन्नेय इति मन्ये ।

श्रीमद्वाचस्पतेर्विद्यागुरुस्त्रिलोचन आसीदिति स्वयं तेन प्रत्यक्षलक्षणसूत्रस्थव्यवसाय-पदार्थव्याख्यानप्रसङ्गे उक्तम्—

त्रिलोचनगुरून्नीतमार्गानुगमनोन्मुखैः ।
यथामानं यथावस्तु व्याख्यातमिदमीदृशम्[1] ॥ इति ।

एतेन भामतीमङ्गलश्लोकोक्तो मार्तण्डतिलकस्वामी अस्य गुरुरिति मतमपास्तं वेदितव्यम् । मार्तण्डस्य तिलकस्वामिनश्च देवविशेषत्वेन कल्पतरौ व्याख्यानादिति ।

**कृतित्वम्**

आचार्यवाचस्पतिमिश्राणां कृतिषु सर्वान्तिमा कृतिर्भामती ब्रह्मसूत्रशाङ्करभाष्यव्याख्या-नात्मिकास्तीति सुविदितमेव । भामत्या अन्ते—

यन्न्यायकणिका तत्त्वसमीक्षा तत्त्वबिन्दुभिः ।
यन्न्यायसाङ्ख्ययोगानां वेदान्तानां निबन्धनैः ॥

इति श्लोके यः क्रमोऽनुसृतस्तेनैव क्रमेण वाचस्पतिमिश्रैर्ग्रन्था निर्मिता इत्यनुमीयते । तत्र प्रथमा कृतिर्न्यायकणिका विधिविवेकटीका, द्वितीया ब्रह्मसिद्धिव्याख्या तत्त्वसमीक्षा, तृतीया तत्त्वबिन्दुर्भाट्टमताश्रयं स्वकृतं प्रकरणम्, चतुर्थी न्यायवार्त्तिकतात्पर्यटीका, पञ्चमी न्यायसूची-निबन्धः, षष्ठी सांख्यतत्त्वकौमुदी, सप्तमी योगसूत्रभाष्योपरि तत्त्ववैशारदी, अष्टमी च कृतिः सुप्रसिद्धा भामतीति । उपर्युक्ते "यन्न्यायसाङ्ख्ययोगानां वेदान्तानां निबन्धनैः" इति श्लोकार्धे न्यायनिबन्धत्वेन न्यायसम्बन्धिनी तात्पर्यटीका न्यायसूचीनिबन्धावित्युभावपि सङ्गृहीतौ स्तः । अत एव पूर्वं न्यायसूचीनिबन्धकाल एव तात्पर्यटीकाकाल इति निराधारि ।

एतासु कृतिषु मध्ये न्यायवार्त्तिकतात्पर्यटीकानिर्माणान्ते भामतीनिर्माणान्ते च ग्रन्थ-निर्माणजन्यपुण्यवर्णनेन परमेश्वरप्रीत्यर्थं तत्पुण्यफलसमर्पणवर्णनेन चैताभ्यां कृतिभ्यामात्मनो महत्सन्तोषं व्यनक्त्याचार्यः । तदुक्तं तात्पर्यटीकान्ते—

यदलम्भि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् ।
उद्योतकरगवीनामतिजरतीनां समुद्धरणात् ॥ इति ।

---

१. न्या० वा० ता० टी० पृ० १३३ ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

समस्तकृत्यनन्तरं भामत्यामप्युक्तम्—

समचीषं महत्पुण्यं तत्फलं पुष्कलं मया ।
समर्पितमथैतेन प्रीयताम् परमेश्वरः ॥ इति ।

तत्र न्यायकणिका आचार्यमण्डनमिश्रकृतविधिविवेकस्य अतिनिगूढाभिप्रायस्य सुविशद-व्याख्यानात्मिकाऽस्ति । अयं हि अतिक्लिष्टो मीमांसाग्रन्थो यस्य टीकानिर्माणे सकलशास्त्र-पारदृश्वा श्रीमद्वाचस्पतिमिश्र आत्मनि गौरवं कृतार्थताञ्चानुभवन्नाचार्यमण्डनमिश्रे महतीं श्रद्धामभिव्यनक्त्यधस्तनेन श्लोकेन —

आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम् ।
रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयति ॥ इति ।

अस्य ग्रन्थस्योल्लेखः प्रायस्तत्कृतग्रन्थेषु दृश्यते, तस्मात् सर्वप्रथमं न्यायकणिका ( न्यायकलिका वा ) निर्मिता ।

एतदनन्तरं मण्डनमिश्रेणैव विरचिताया ब्रह्मसिद्धेर्व्याख्याभूता ब्रह्मतत्त्वसमीक्षा नाद्यावधि कुतश्चिदपि मुद्रितोपलभ्यते । पाण्डुलिपिरपि तस्या अत्यन्तं दुर्लभा । तदभावे च वाचस्पतेर्वेदान्त-सम्बन्धिन्याः पूर्णविचारधारायाः सन्तोषजनक उपन्यासो न शक्यते कर्तुम् । परन्तु भामती हि तस्य महान् ग्रन्थोऽस्ति, यतस्तदीयविचारधारायाः कतिपयमुख्यस्वरूपाणि सङ्कलयितुं शक्यन्त इति ।

तत्त्वबिन्दुरपि भाट्टमतानुसारी शाब्दबोधविषयकोऽतिप्रौढो मौलिको मीमांसाग्रन्थोऽस्ति । अयं ग्रन्थष्टिप्पणसहितः काश्याः प्राक्तनपण्डितपत्रे मुद्रितोऽपि लघुत्वाद् दुरूहः । अस्यैका विस्तृता टीका चतुःसहस्रश्लोकात्मिका श्रीविन्ध्येश्वरीप्रसादद्विवेदिसविधेऽभूदिति स्वयं तेन सङ्केतितं न्यायवार्त्तिकभूमिकायाम् ।

इदं तत्त्वसमीक्षातत्त्वबिन्दुग्रन्थद्वयं न्यायवार्तिकतात्पर्यटीकायां समुद्धृतमिति ततः पश्चादेव न्यायवार्त्तिकतात्पर्यटीकाया निर्माणमकरोद् वाचस्पतिमिश्रः ।

यद्यपि समासतो निर्मितस्य समाहितनागार्जुनाक्षेपस्य न्यायसूत्रवात्स्यायनभाष्यस्य तत्पश्चाद् भाविदिङ्नागवसुबन्धुप्रभृतिबौद्धैः समाक्षिप्तस्य च व्याख्यानभूतमुद्योतकराचार्यकृतं न्यायवार्त्तिकं तदाक्षेपाणां समुचितोत्तरप्रदायकमभूत्, तथापि परवर्तिभिर्धर्मकीर्तिप्रभृतिबौद्धै-रुद्योतकरयुक्तयोऽपि स्वयुक्तिभिर्जर्जरीकृता अभूवन् बहुकालपर्यन्तमिति अतिजरतीनामुद्योतकर-गवीनां समुद्धरणव्याजेनाचार्यवाचस्पतिमिश्रेण न्यायवार्त्तिकतात्पर्यटीकां निर्माय ते बौद्धाक्षेपा धूलिसात् कृताः । अत एवैतद् ग्रन्थनिर्माणेनात्मनः पुण्यलाभं पूर्णसन्तोषञ्चामन्यताचार्यमिश्रः । तदुक्तं तेन तात्पर्यटीकान्ते—

यदलम्भि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् ।
उद्योतकरगवीनामतिजरतीनां समुद्धरणात् ॥ इति ।

अतो दार्शनिकजगति तात्पर्यटीका वाचस्पतेर्महत्त्वपूर्णा कृतिर्निगद्यते । वार्त्तिकग्रन्थ-रहस्यव्यञ्जननैपुण्येन च तात्पर्याचार्यसंज्ञयाऽपि विश्रुतोऽभूद् वाचस्पतिमिश्रः ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

न्यायशास्त्रेऽस्यापरा कृतिर्न्यायसूचीनिबन्धाभिधाना समुपलभ्यते प्रकाशिता। अयं ग्रन्थस्तात्पर्यटीकातः पूर्वं पश्चाद्वा निर्मित इति यद्यपि नास्ति निर्णयः, तथापि एतयोर्ग्रन्थयोरव्यवहितपूर्वापरीभावे नास्ति सन्देहः। अतिलघुभूतस्यास्य ग्रन्थस्य निर्माणे न्यायशास्त्रव्याख्यानप्रसङ्गं भङ्क्त्वा पृथक् प्रयासे औचित्याभावात्। उभयत्रैव ग्रन्थे—

नमामि धर्मविज्ञानवैराग्यैश्वर्यशालिने।
विधये वाग्विशुद्धीनामक्षपादाय तायिने॥

इति समानमङ्गलश्लोकस्य तथा नामपरिवर्तनमात्रेण—

यदलम्भि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम्।
श्रीगौतमसुगवीनामतिजरतीनां समुद्धरणात्॥

संसारजलधिसेतौ वृषकेतौ सकलदुःखशमहेतौ।
एतस्य फलमखिलमर्पितमेतेन प्रीयतामीशः॥

इति समानश्लोकयोरुपलम्भाच्चानयोरव्यवहितपूर्वापरीभावोऽनुमीयते। इदमपि विभाव्यते यन्न्यायसूचीनिबन्धतात्पर्यटीकयोर्मध्ये न्यायसूचीनिबन्ध एव पूर्वं रचितो भवेत्। उभयोद्धरणकृतपुण्यलाभं वर्णयतां श्रीमिश्राणां सूत्रवार्त्तिकयोर्मध्ये सूत्रोद्धरणस्यैव प्राथम्यप्रदानौचित्यसम्भवादिति। सूचीकटाहन्यायोऽपीममेव पक्षं द्रढयतीति।

वस्तुतस्तु "इच्छामि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम्। उद्योतकरगवीनामतिजरतीनां समुद्धरणात्" इति तात्पर्यटीकारम्भोक्तश्लोकानुसारेण वाचस्पतिमिश्राणां मुख्यः संरम्भो वार्त्तिकोद्धरण एव प्रतीयते। अतो मुख्यत्वेनाभ्यवहितत्वात् तात्पर्यटीकैव पूर्वं रचिता भवेत्। न्यायसूचीनिबन्धारम्भे एवंविधसङ्कल्पाभावेन सूत्राणामुद्धरणस्याप्यपेक्षितत्वेऽपि वार्त्तिकस्येव मुख्यमभ्यर्हितत्वं न्यायसूत्राणामुद्धरणस्य नास्तीति पूर्वं तात्पर्यटीकानिर्माणेन मुख्याभ्यर्हितवार्त्तिकोद्धरणं सम्पाद्य तदनुपदमेव न्यायसूत्रोद्धरणधिया न्यायसूचीनिबन्धमप्यरचयदिति सुष्ठु प्रतीयते। न्यायवार्त्तिकतात्पर्यटीकाग्रन्थानन्तरमनुपदमेवाल्पकालेन रचितत्वेन न्यायसूचीनिबन्धग्रन्थान्त एव रचनाकालो निर्दिष्ट आचार्यवाचस्पतिमिश्रेण "वस्वङ्कवसुवत्सरे" इति। यदि पूर्वं न्यायसूचीनिबन्धो रचितो भवेत्, तदा तदनन्तरं बहुकालसाध्यरचनायास्तात्पर्यटीकायाः पृथगेव रचनाकालोऽवश्यं निर्दिश्येत। तस्मादुभयोर्न्यायग्रन्थयोः पूर्वं तात्पर्यटीकैव रचिता, पश्चाद् न्यायसूचीनिबन्ध इति विभावयामः।

साङ्ख्यजगति समुपलब्धसाङ्ख्यसूत्रेभ्योऽपि प्राप्ताधिकमहत्त्वपूर्णस्थानानामीश्वरकृष्णविरचितसाङ्ख्यकारिकाणामुपरि साङ्ख्यतत्त्वकौमुदीनाम्नीं व्याख्यां विधाय महान्तमुपकारं कृतवन्तः साङ्ख्यशास्त्रस्य श्रीमद्वाचस्पतिमिश्रा इति नास्ति सन्देहः; यद्यपि साङ्ख्यकारिकाया उपरि आचार्यमाठरो गौडपादाचार्यश्च व्याख्यां विधाय ग्रन्थस्य गूढरहस्यं प्रकटयितुं यथासम्भवं प्रयत्नमकुरुताम्। सतोरप्यनयोर्व्याख्याग्रन्थयोः श्रीमद्वाचस्पतिमिश्रेण या तत्त्वकौमुदीनाम्नी व्याख्या समुपस्थापिता, सा नितरां लोकोत्तरा वाचस्पतिवैदुष्यानुरूपा चेति। इयं हि तत्त्वकौमुदी वाचस्पतिमिश्रेण न्यायवार्त्तिकतात्पर्यटीकाया अनन्तरं रचिता। तथा चोल्लेखः साङ्ख्यतत्त्व-

CC-0. Sampurnanand University Collection. Digitized by eGangotri

कौमुद्याम्—"सर्वं चैतदस्माभिर्न्यायवार्त्तिकतात्पर्यटीकायां व्युत्पादितमिति नेहोक्त विस्तर-भयात्" इति ।

तत्त्वकौमुद्या व्याख्याशैली अतीवोत्कृष्टा सुविशदा सुबोधा चास्ते । आचार्यमिश्राः पूर्वं शब्दार्थान् अतिसुन्दरतया व्युत्पत्तिपूर्वकं प्रदर्शयन्ति, अनन्तरं कारिकाभावार्थान् स्फुटीकुर्वन्तः सुन्दरैरुपयुक्तैरुदाहरणैश्च साङ्गोपाङ्गं विषयनिरूपणं विदधति । यथा "प्रतिविषयाध्यवसाय" इति कारिकांशव्याख्याने दृश्यते ।

सर्ववस्तूनां त्रिगुणात्मकत्वावगमाय श्रीमिश्रपादैः कामिन्या रोचको दृष्टान्तः प्रस्तूयते "सत्त्वं लघुप्रकाशकम्" इति कारिकाव्याख्याने । शास्त्रविषयस्य जिज्ञास्यत्वनिरूपणाय च "दुःखत्रयाभिघाताज्जिज्ञासा" इति कारिकाव्याख्याने या शैली स्वीकृताऽऽचार्यवर्यैः सा अन्यत्र दुर्लभा कस्य न मनोमोदाय कल्पते ?

तत्त्वकौमुदीव्याख्या नूनं तुलनात्मकपद्धत्या कृता । व्याख्यायां न केवलं साङ्ख्यमतमेव झटिति प्रतिपाद्यते, किन्तु दर्शनान्तरमतोपन्यासतन्निरासपुरस्सरमेवाभीष्टप्रतिपादनं क्रियते । यथा च सत्कार्यवादकारिकाव्याख्यानावसरे लक्ष्यते । क्वचित्तु मूले संक्षिप्तोक्तमपि विषयजातं महता वैशद्येन विवृण्वती तत्त्वकौमुदी न व्याख्याग्रन्थतया प्रतीयते, अपि तु मौलिकग्रन्थ इवाभाति । यथा अनुमानस्वरूपनिरूपणप्रसङ्गे सत्कार्यवादसाधनप्रसङ्गे च दृश्यते ।

वाचस्पतिमिश्राणां सप्तमी कृतिस्तत्त्ववैशारद्यपि योगसिद्धान्तप्रतिपादने न काञ्चित् तुलां बिभर्ति, प्रत्युताग्रिमसकलव्याख्याग्रन्थोपज्ञताञ्चाश्रयते । पातञ्जलं योगदर्शनं सूत्रात्मकतया पारिभाषिकशब्दनिकरग्रथिततया च स्वतो दुरूहार्थमस्ति । किन्तु तत्र व्यासकृतं भाष्यमपि विशदव्याख्यानाभावे रहस्यभूतमेव सद् दुरूहतां नातिशेते । तदुपरि तत्त्ववैशारदीमन्वर्थाभिधानां टीकां निर्माय योगदर्शनस्य महान्तमुपकारं व्यधादाचार्यवाचस्पतिमिश्रः । अतस्तस्याप्युद्धरण-धियैव तत्त्ववैशारदीनिर्माणे प्रावर्तताचार्य इति मन्ये । एतदुपज्ञमेव विज्ञानभिक्षुः सुविस्तृतं योग-वार्त्तिकं व्यरचयदन्ये च विविधान् निबन्धान् न्यभान्त्सुः ।

तस्य वाचकः प्रणवः, तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः, शब्दार्थप्रत्ययानामितरेतराध्या-सात् सङ्करस्तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम्, परिणामैकत्वाद् वस्तुतत्त्वम्, क्षणप्रतियोगी परिणामान्तनिर्ग्राह्यः क्षण इत्यादिसूत्रेषु सूक्ष्मतया सङ्केतिता भाष्ये च किञ्चिदुन्मेषिता योग-दर्शनसिद्धान्तास्तत्रभवता वाचस्पतिमिश्रेण तत्त्ववैशारद्यां तथा वैशद्यमापादिता यथा तद्रह-स्यानि भास्करोदये पदार्थजातमिव स्फुटमाभान्ति तत्परिशीलनशीलजनानाम् ।

आचार्यमिश्राणामष्टमी सर्वोत्कृष्टाकृतिर्भामती ब्रह्मसूत्रशाङ्करभाष्यस्य प्रसन्नगम्भीरस्या-नितरसाधारणं व्याख्यानं विराजते । अस्यां हि वाचस्पतिमिश्राणां सर्वतोमुखीना वैदुषी प्रतिभा च पुञ्जीभूयेव प्रकटिते लक्ष्येते । अतो भामती तेषां सर्वस्वभूतेति नेह सन्देहलेशोऽपि । अत एव यत्र तात्पर्यटीकाद्यन्यग्रन्थनिर्माणेन तत्तच्छास्त्रोद्धरणभावनां निजामभिव्यनक्त्याचार्यस्तत्र भामतीनिर्माणेन पवित्रीकृतामिवात्मनो वाणीं मन्यमानः शङ्कराचार्यभगवत्पादं प्रति हार्दिकीं श्रद्धामभिव्यञ्जयन् न्यायकणिकाया इव भामत्याः प्रारम्भे स्माह—"आचार्यकृतिनिवेशनम्" इत्यादि ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

वेदान्तसिद्धान्तनिरूपणे भामती किमप्यपूर्वं वैशिष्ट्यमुररीकरोति, येन वेदान्तजगति भामत्या स्वतन्त्रमेवान्यतमं प्रस्थानं प्रवर्तितम्, यस्याऽनुयायिनोऽनेके परतरा वेदान्तिनोऽभूवन्। किन्तु वाचस्पतिमिश्राणां विचारेषु आचार्यमण्डनमिश्रविचाराणां प्रभाव इव लक्ष्यते। यथा वाचस्पतिमिश्रमतेऽविद्याऽनादिकालाज्जीवाश्रिता सती ब्रह्मविषयीकरोति। स्फुटीकृतञ्चैतत् "अनिर्वाच्याविद्या" इत्यादिमङ्गलश्लोकव्याख्याने कल्पतरुकारेण।

भामत्या भिन्नप्रस्थानत्वे कतिपयोदाहरणानि द्रष्टुं शक्यन्ते। यथा 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यः" इति श्रुतौ 'श्रोतव्यः' इत्यनेन न कोऽपि विधिः प्रत्याय्यते, आगमजन्यज्ञानात्मकस्य श्रवणस्य विधेयत्वासम्भवादिति वाचस्पतिमिश्राः। नियमविधिः परिसङ्ख्याविधिर्वेत्यन्ये।

जगदुपादानकारणत्वं जीवाश्रिताऽविद्याद्वितीयसच्चिवस्य ब्रह्मण एवेति वाचस्पतिमिश्राणां मतम्। मायोपहितं मायाद्वारकं वा ब्रह्मोपादानमिति परे। अज्ञानावच्छिन्नं चैतन्यं जीव इति मिश्राः। अविद्यायां चिदाभास इति, अवच्छेदचिदाभासोभयरहित इति वा जीव इत्यन्ये। ज्ञानकर्तृत्वमेवेशस्य सार्वज्ञ्यमिति वाचस्पतिमिश्राः, ज्ञानरूपत्वादिकसर्वज्ञत्वमित्यन्ये। ज्ञानेनैव मुक्तिर्भवति, कर्मणां तु विविदिषोत्पन्नावुपयोग इति वाचस्पतिः, ज्ञानोत्पत्तावुपयोग इत्यन्ये। इत्थं वेदान्ते श्रुतिस्मृतियुक्तीराधृत्य कतिपये मान्यसिद्धान्ताः श्रीमिश्रपादैः प्रस्थापिताः, येन भामत्याः स्वतन्त्रप्रस्थानत्वं सश्रद्धं स्वीकृतं मनीषिषु।

यद्यप्यन्तिमां कृतिं भामतीं निर्माय श्रीमद्वाचस्पतिमिश्रः स्वीयं सैद्धान्तिकं मनोभावं स्फुटमावेदयति दार्शनिकजगति, तथापि दर्शनान्तराण्यपि प्रत्यस्य सदाशयत्वं तेषां निष्पक्ष-व्याख्यानैरेवाभिव्यज्यतेतराम्। वस्तुतो दर्शनविशेषं व्याचक्षाणोऽयं मनीषिमूर्धन्यो विस्मरती-वात्मनो दर्शनान्तराचार्यत्वम्।

एवं षण्णामपि दर्शनानां निष्पक्षव्याख्यानैर्यत्र षड्दर्शनटीकाकृत्वमहिम्ना[1] मण्डितोऽ-यमास्ते तथा सर्वेष्वास्तिकदर्शनेषु स्वीयां समन्वयदृष्टिमप्यव्यक्तभावेन निवेदयत्येवाचार्यः। मम तु दृढो विश्वासो यन्न स्वाप्रतिमवैदुष्योद्घोषाय षड्दर्शनानि व्याख्यातानि, किन्तु तत्रास्ति हेतुद्वयम्। प्रथमस्तु दुरूहशास्त्राणां वास्तविकतात्पर्याविष्कारैस्तेषां समुद्धारः। द्वितीयश्चा-धिकारिभेदेन सर्वेषां प्रामाण्यमावेद्य तेषां समन्वयश्च। सन्त्यन्येऽपि दर्शनानां समन्वयितारो ये दर्शनान्तराणि दर्शनान्तरे प्रविलाप्य तेषां गौणत्वं वा निरूच्य समन्वयन्ति, परन्त्वयं मनीषी अधिकारिविशेषदृष्ट्या सर्वेषां समानं महत्त्वं प्रतिष्ठापयन् प्रतीयते।

किं बहुना, आस्तिकधुरन्धरोऽयं दार्शनिकशिरोमणिः स्वग्रन्थेषु परस्पराविनाभावेनैव श्रुतिस्मृतीतिहासपुराणानि प्रमाणतया सम्मानयतीति यथार्थमाचार्यत्वं श्रीमद्वाचस्पतिमिश्राणा-मिति शम्।

---

१. न्यायव्याख्यानेनैव वैशेषिकस्यापि व्याख्यानीभूतत्वात् षट्दर्शनटीकाकृदित्युच्यते। अतो वस्तुतः पञ्चदर्शनव्याख्यातृत्वेऽपि न विरोधः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# रूपके लक्षणामूलम्

पं० श्रीवायुनन्दनपाण्डेयः, व्या० साहित्याचार्यः

व्याख्याता—साहित्यविभागे, सं० सं० वि० वि०, वाराणसी

रूपके गौणसारोपलक्षणामूलमिति विषये प्रमुखविचारकाः सन्ति प्राचीनालङ्कारिका अप्पय्यदीक्षितः, पण्डितेन्द्रो जगन्नाथो राजचूडामणिदीक्षितश्च। तत्र प्राचीना निर्विचिकित्सं रूपके लक्षणामङ्गीकुर्वन्ति, अप्पय्यदीक्षितस्तां समालोच्य निरस्यति, पण्डितराजो राजचूडामणिश्च दीक्षितमतमनूद्य सयुक्तिकं निराचक्रतुरिति तेषां मतं ससमीक्षमुपस्थाप्यते।

तत्र मम्मटभट्टात् प्राचीनानां भामहदण्डिप्रभृतीनां ग्रन्थेषु प्राय एतद्विषये काचन मीमांसा नोपलभ्यते। परं लक्षणविमर्शेनैतद् ज्ञायते यद्रूपके सादृश्यमेव मूलम्। न च सादृश्यं शब्दोपात्तम्, अतो वाचकशब्दाभावात् तत्रोपमानपदस्यैव स्वसादृश्ये लक्षणाऽङ्गीकर्तव्या, अन्यथा सादृश्यानाकलनात् तत्र रूपकमपि न स्फुरति। अत एव सादृश्यप्रयोजकं साधर्म्यमप्युपादीयते क्वचित् प्रसिद्धतया न विवक्ष्यत इत्यन्यदेतत्। अत एव प्रायः सर्वे एवालङ्कारिका रूपकलक्षण उपमानोपमेयादिशब्दस्य प्रयोगं कुर्वन्ति। सादृश्ये साधर्म्ये सत्येवोपमानोपमेयभावो भवति, न तु कार्यकारणादिकयोः। तथा चाग्नेये[1] लक्षणद्वयमुपात्तम्, तत्र प्रथमम्—

> उपमानेन यत्तत्त्वमुपमेयस्य रूप्यते।
> गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुः॥

इति रूपकलक्षणे गुणानां समतां दृष्ट्वेति प्रतिपादनेन गौणीसारोपलक्षणा रूपके मूलमिति स्फुटं प्रतीयते।

इदमेव लक्षणं भामहेनाप्युक्तम्[2]।

द्वितीयं लक्षणम्—'उपमैव तिरोभूतभेदा रूपकमेव वा'[3] इति।

अस्यायं भावः—सादृश्यं द्विविधम्, भेदघटितम्, भेदाघटितं च। तत्र भेदघटितमुपमायां मूलं तिरोभूतभेदोपमा (भेदाकरम्बितसादृश्यमित्यर्थः) रूपकनिर्वाहिकेत्यस्मिन् पक्षेऽपि लक्षणामूलमिति सिद्धम्।

दण्डिनाऽपीदमेव[4] लक्षणमुक्तम्।

---

१. अग्निपुराणे ३४३ तमेऽध्याये २२ तमः श्लोकः।

२. काव्यालङ्कारे द्वि० प० २१ तमः।

३. आग्नेये ३४३ तमेऽध्याये।

४. काव्यादर्शे द्वि० प० ६६ तमः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

वामनेनापि रूपके लक्षणा स्वीक्रियते, यदुक्तम् 'यथा[1] च गौणस्यार्थस्यालङ्कारत्वम्; तथा लाक्षणिकस्यापीति दर्शयितुमाह' इति।

आनन्दवर्धनाचार्यः साहश्यमुखेनैव रूपकेऽलङ्कारत्वं वाञ्छति, निर्दिशति च रूपक-तुल्ययोगितानिदर्शनादिषु व्यङ्ग्यं साधारणधर्मं द्वारीकृत्य प्रतीयमानं यत्सादृश्यं तदेव शोभाशालि भवतीति। तथा हि 'येषु[2] चालङ्कारेषु सादृश्यमुखेन तत्त्वप्रतिलम्भः, यथा रूपकोपमातुल्य-योगितानिदर्शनादिषु तेषु गम्यमानधर्ममुखेनैव यत्साहश्यं तदेव शोभाशालि भवतीति'। रूपके लक्षणास्वीकारे सत्येव साधर्म्यं व्यङ्ग्यं भवति।

अभिनवगुप्तश्च 'सिंहो वटुः' इत्यत्र गौणलक्षणां वदत्येव [3]'ननु लक्षणा ताद्वद् गौणमपि व्याप्नोति..........भजते' इति। अन्यत्र[4] च रूपकादीनां पूर्वमेवोक्तं स्वरूपमिति निगदति।

रामषाकरश्च रूपकादौ सादृश्यं व्यङ्ग्यमभिधत्ते[5]।

मुकुलभट्टश्च[6] 'गौर्वाहीकः' इत्यत्र गौणोपचारं ब्रूते। न केवलं सामानाधिकरण्येना-भेदान्वयं वाञ्छति।

मम्मटभट्ट-विश्वनाथाप्पय्यदीक्षित-जगन्नाथ-राजचूडामणि-दीक्षित-प्रभृतीनां मतमेवात्र विशेषत उल्लेखनीयमित्यग्रे निरूप्यते।

जयदेवश्च[7]—

यत्रोपमानचित्रेण सर्वथाप्युपरज्यते।
उपमेयमयी भित्तिस्तत्र रूपकमिष्यते॥

इति रूपकं निरूपयन् भामहादिवद् रूपके सादृश्यं स्वीकरोत्येव।

शोभाकरमित्रोऽपि[8] रूपके लक्षणां स्वीकरोत्येव। तथाहि 'अन्ये' आचार्याः सादृश्यनिमि-त्तकमारोपो रूपकम्, न सम्बन्धान्तरनिमित्तकमिति मन्यन्ते। सम्बन्धान्तरनिमित्तकं तु वैचित्र्य-मात्रमिति। तत् साहितीसुधासुहितहृदां हृदयावर्जकं न। यतो हि द्विविधा लक्षणा—रूढा कार्या (प्रयोजनवती) च। तत्र रूढा वैचित्र्याभावादलङ्कारूपतां न याति, कार्या तु काव्यजीवितभूता सर्वथा कविभिरादर्तव्येति। तत्र सादृश्ये सम्बन्धान्तरे काचन विशेषता नास्ति,

---

१. काव्यालङ्कारसूत्रवृत्तौ अधि० ४, अ० ३ अष्टमसूत्रोपक्रमे।
२. ध्वन्यालोके तृतीयोद्योते ४७० तमपृष्ठे ( लोचनोपेते सटीके )।
३. लोचने ( प्रथमोद्योतस्य ) १५२ पृष्ठे।
४. लोचने ४७० तमपृष्ठे।
५. ध्वन्यालोकलोचनटीकायां बालप्रियाख्यायाम् ४७० तमपृष्ठे।
६. अभिधावृत्तिमातृकायाम्।
७. चन्द्रालोके ५ मयूखे १८ तमः।
८. अलङ्काररत्नाकरे ३६ तमसूत्रे।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अतः सामान्यतया 'आरोपो रूपकम्' इति सूत्रितम्। अन्ते चोपसंहरति सङ्ग्रहश्लोकेन[1], तद्यथा—

सादृश्यसम्बन्धनिबन्धनाया अलङ्कृतित्वं यदि लक्षणायाः।

साम्येऽपि सर्वस्य परस्य हेतोः सम्बन्धभेदेऽपि तथैव युक्तम् ॥ इति।

[2]अच्युतरायोऽप्येवम्-'उपमेयतावच्छेदकपुरस्कारेणोपमेये शब्दावधृतमुपमानतादात्म्यं रूपकम्' इति लक्षयन् लक्षणानुकूल एव भाति।

अलङ्कारभाष्यकारेणापि[3] 'लक्षणापरमार्थं यावता रूपकम्' इति निगदताऽयमेव पक्षः समर्थित इति।

प्राचीनाचार्याणां मतम्[4]—गौणसारोपलक्षणोदाहरणे 'मुखं चन्द्रः' इत्यत्र प्राचीनाचार्या उपमानवाचकपदस्य 'चन्द्रः' इत्यस्य लक्षणया चन्द्रसदृशोऽर्थः, उपमेयवाचकस्य मुखशब्दस्याभिधया मुखत्वविशिष्टमुखरूपोऽर्थः। तत्र च चन्द्रसदृशस्याभेदसंसर्गेणान्वय इति चन्द्रसदृशाभिन्नं मुखमिति बोधमाहुः।

अत्र शङ्कते—ननु अलङ्कारभेदे चमत्कारभेदो निदानम्; चमत्कारभेदे चमत्कारिबोधभेदो मूलमिति नियमः। अत्र चन्द्रसदृशं मुखमित्युपमायां यथा बोधः, तथैव रूपकेऽपीति समानबोधेन समानचमत्कारे सति रूपकोपमयोः को भेदः ?

न च शाब्दबोधे एकपदार्थेऽपरपदार्थस्य संसर्गं आकाङ्क्षाभास्यो भवति, अतश्चन्द्रसदृशं मुखमित्युपमायां चन्द्रपदात्। चन्द्ररूपार्थोपस्थितिः, सदृशपदात् चन्द्रप्रतियोगिकसादृश्याश्रयरूपस्यार्थस्येति तयोर्भिन्नपदार्थत्वादभेदसंसर्गं आकाङ्क्षाभास्यः, तस्य च मुखपदार्थं मुखत्वावच्छिन्नेमुखेऽभेदेनान्वये चन्द्राभिन्नं यत् सदृशं तदभिन्नं मुखमिति बोधः।

'मुखं चन्द्रः' इति रूपके तु चन्द्रशब्दस्यैव लक्षणया चन्द्रसदृशोऽर्थः, अतश्चन्द्रतत्सदृशयोरेकपदार्थतया अभेदसंसर्गस्याप्रतीतेश्चन्द्रसदृशाभिन्नं मुखमित्येव बोधः। इत्थं बोधभेदसत्त्वादलङ्कारभेद इति वाच्यम्। ईदृशबोधभेदेनालङ्कारभेदस्वीकारे 'चन्द्रसदृशं मुखम्, 'चन्द्र इव मुखम्' इत्यनयोः सर्वसम्मतोपमावाक्ययोरपि शाब्दबोधे भेदसत्त्वेनालङ्कारभेदापत्तेः।

तथा हि 'चन्द्र इव मुखम्' इत्यस्य 'निपाता द्योतकाः' इति शाब्दिकनये चन्द्रपदस्यैव चन्द्रसदृशरूपोऽर्थः, अत एकपदार्थतया न तत्र संसर्गाभास इति 'मुखं चन्द्रः' इत्यत्रोक्त एव बोधः। 'उपसर्गातिरिक्ता निपाता वाचकाः' इति नैयायिकनये 'इवशब्दस्य सदृशो वाऽर्थः। सादृश्यार्थे स्वीकारे चन्द्रपदार्थस्य प्रतियोगित्वेन तत्रान्वये सादृश्यस्य च स्वरूपसम्बन्धेन सदृशेऽन्वय इति चन्द्रप्रतियोगिकसादृश्यवन्मुखमिति बोधः। सदृशोऽर्थ इति पक्षेऽपि स्वप्रतियोगि-

---

१. तत्रैव। २. साहित्यसारे उत्तरार्धे कौस्तुभरत्नाख्येऽष्टमप्रकरणे ९६ तमा कारिका वृत्तौ।

३. रसगङ्गाधरे द्वितीयानने रूपकशाब्दबोधनिरूपणावसरे प्राचीनमतेउ द्धृतम्।

४. रसगङ्गाधरे द्वितीयानने लक्षणानिरूपणे उद्धृतम्।

५

CC-0. Sampurnanand University Collection. Digitized by eGangotri

कस्य आश्रयत्वस्य च संसर्गविषया माने चन्द्रप्रतियोगिकसादृश्याश्रयत्ववन्मुखमिति बोधः। चन्द्रसदृशमिति वाक्यात् पूर्वोक्त एव बोधः। एवं शाब्दबोधमात्रभेदेनालङ्कारभेदस्वीकारे सर्वसम्मतोपमोदाहरणयोरलङ्कारभेदापत्तेः।

अतश्चमत्कारिबोधवैलक्षण्यादलङ्कारभेद इति स्वीकर्त्तव्यः। अत्र तदभावाद् रूपकोपमयोर्भेदे मूलमुपपादनीयमिति प्रश्नः।

अत्र प्रचीनाना त्रिविधं समाधानम्। तत्र प्रथमम्[1]—यद्यपि रूपक उपमायाश्चोभयत्र सादृश्यबोधे, शाब्दबोधे भेदाभावेऽपि रूपके सादृश्यबोधो लाक्षणिक इति। तत्र लक्षणाया फलं ताद्रूप्यप्रतीतिरपि व्यञ्जनया जायते। ताद्रूप्यप्रतीतिश्च उपमेये मुखे, उपमानताऽवच्छेदकस्य चन्द्रत्वस्य प्रतीतिः। उपमायां व्यञ्जनोत्थानाभावात् ताद्रूप्यं न प्रतीयते। रूपके तु चन्द्रपदस्यैव लक्षणया चन्द्रस्तत्सदृशश्चार्थः। अतस्तयोरर्थयोः ( श्लेषस्थल इव ) एकपदोपस्थाप्यत्वेन कारणेनोत्थिता व्यञ्जना ताद्रूप्यं प्रत्याययति। उपमायां तु पृथक्पदोपस्थाप्यत्वेन 'एकपदोपस्थाप्यत्वरूपव्यञ्जनोत्थापनकारणाभावात् ताद्रूप्यप्रत्यायिकाया व्यञ्जनाया अनुत्थितेर्न ताद्रूप्यप्रतीतिः।

अत्रान्यधर्मस्य ( चन्द्रवृत्तिधर्मस्य चन्द्रत्वस्य ) अन्यत्र ( मुखे ) कथं प्रतीतिः ? बाधनिश्चयस्य प्रतिबन्धकत्वादिति शङ्का नोदेति, व्यञ्जनाजन्यबोधे बाधनिश्चयस्य प्रतिबन्धकत्वाभावात्।

अथवा 'लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यानाहार्य्यशाब्दान्यबुद्धित्वावच्छिन्नं प्रतिबाधनिश्चयः प्रतिबन्धकः' इति प्रतिबध्यप्रतिबन्धकमात्रस्वीकारेऽत्राहार्य्यारोपे शाब्दे वा तदप्रवृत्तेः।

एवमपि व्यञ्जनयैकपदोपस्थाप्यार्थद्वये चन्द्रे तत्सदृशे च ताद्रूप्यप्रतीतिर्जायतां नाम। मुखत्वविशिष्टे मुखे तु कथं तस्य भिन्नपदोपस्थाप्यत्वात्। सहृदयानामनुभवश्च मुख एव ताद्रूप्यप्रतीतेः।

वक्त्रे चन्द्रमसि स्थिते 'किमपरः शीतांशुरुज्जृम्भते' इत्यादौ तथैव-( उपमेये उपमानताद्रूप्यस्यैव ) अनुभवात्, चन्द्रतत्सदृशयोस्ताद्रूप्यप्रतीतिसिद्धौ मुखेऽपि ताद्रूप्यप्रतीतिसिद्धेः। चन्द्रसदृशस्य मुखस्य चैक्यादिति।

द्वितीयम्[2]—चन्द्रपदाद् लक्षणया चन्द्रसदृशत्वेन रूपेणोपस्थितस्यापि मुखस्य मुखपदोपस्थापितमुखेन सह चन्द्रत्वेन रूपेणैवान्वयबोधः। अत्र 'यत्प्रकारिकोपस्थितिस्तत्प्रकारकः शाब्दबोधः' इति नियमस्य चन्द्रसदृशत्वप्रकारकोपस्थितिचन्द्रत्वप्रकारकशाब्दबोधस्वीकारे विरोधो नोद्भावनीयः। 'गङ्गायां घोषः' इत्यत्र गङ्गापदात् तटत्वप्रकारेणोपस्थितस्यापि तटस्य गङ्गात्वेन रूपेणान्वयबोधः, अत एव तटे गङ्गावृत्तिशैत्यपावनत्वादीनां सम्प्रत्ययः। अतोऽनुभवबलेन लक्षणास्थले उपस्थितिशाब्दबोधयोर्वैलक्षण्यस्वीकारे दोषाभावात्।

---

१. मतमिदं रसगङ्गाधरे 'केचित्तु' इत्यनेन लक्षणानिरूपणे ( द्वितीयानने ) उपात्तम्।
२. इदं मतम् 'अन्ये तु' इत्यनेन तत्रैवोपात्तम्।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

तथा चेत्थं कार्यकारणभावः—'तत्तत्पदशक्यताऽवच्छेदकप्रकारकलक्ष्यविशेष्यकशाब्दबुद्धित्वावच्छिन्नं प्रति तत्तत्पदलक्षणाज्ञानं कारणम्' इति ।

नहि मुखे चन्द्रत्वप्रतीतिमन्तरा चन्द्रसमवेताह्लादकत्ववर्तुलत्वकान्तिमत्त्वादिगुणवत्त्वज्ञानमुपपादयितुं शक्यम्, चन्द्रत्वसमनियतगुणवत्त्वज्ञानमेव ताद्रूप्यपदेनाभिधीयते । एवं रूपकस्योपमातः शाब्दबोधकृतः फलकृतश्च भेद इति ।

तृतीयम्[1]—सादृश्यं द्विविधम्—भेदघटितम्, भेदरहितं च । तत्र नैयायिकाभिमतं भेदघटितं सादृश्यमुपमानिर्वाहकम् । मीमांसकाभिमतं सादृश्यं भेदाघटितं पदार्थान्तरमखण्डम् । तद्रूपकालङ्कारस्य जीवातुभूतमिति तयोः स्फुटे भेदे रूपकस्योपमातः को भेद इति प्रश्न एव नोदेति । उपमायां चन्द्रभिन्नं चन्द्रसदृशमिति बोधः; रूपके चन्द्राभिन्नमिति भेदः ।

अस्मिन् पक्षे रूपके ताद्रूप्यप्रतीतिरुपमायां कथन्नेति प्रश्नोऽपि नोदेति, उपमायां भेदघटितसादृश्यस्यान्यत्र तद्रहितस्य सादृश्यस्य विवक्षणात् ।

मम्मटस्तु[2] गौणसारोपायां 'गौर्वाहीकः' इत्युदाहृत्य तत्र मतभेदेन त्रिविधं शाब्दबोधप्रकारमदिदृशत् । केषाञ्चिन्मते 'गौर्वाहीकः' इत्यत्र गोशब्दो लक्षणया स्वार्थसहचारित्वसम्बन्धेन गोत्वसहचारिजाडयमान्द्यतिष्ठन्मूत्रत्वादिगुणान् प्रतिपादयति । ततश्च तान् प्रवृत्तिनिमित्तीकृत्य वाहीकार्थमभिधया बोधयति । ततश्च जाडयमान्द्यादिवदभिन्नो वाहीक इति शक्तिलक्षणाभ्यां बोध इति ।

तदयुक्तम्, गोशब्दस्य वाहीके सङ्केताभावेनाभिधयाऽभिधातुं वाहीकार्थो न शक्यते वाच्यवृत्तेरेव प्रवृत्तिनिमित्तत्वाद् गोत्वसहचारिगुणानां वाहीकार्थवृत्तित्वाभावात् लक्ष्यत्वाच्च तान् वाहीकार्थाभिधाने प्रवृत्तिनिमित्तीकर्तुमशक्यत्वात् ।

तस्माद् गोत्वसहचारिगुणाभेदेन वाहीकार्थगता गुणा एव; न तु गुणी गोशब्देन लक्ष्यन्ते । तैश्च गुणैर्वाहीकार्थ आक्षिप्यते, न तु गोशब्देनाभिधीयते । तथा च गोगतजाडयमान्द्यसजातीयजाडयमान्द्यवदभिन्नो वाहीक इत्यन्ये मन्यन्ते, परं शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यते, आक्षेपलभ्यस्यार्थस्य शाब्दबोधे प्रवेशाभावात् । वाहीकार्थस्य गोशब्दाप्रतिपाद्यत्वे सामानाधिकरण्यानुपपत्तिश्चेत्यादिदोषजातान् मनसि निधाय सिद्धान्ती ( अपरः ) ब्रूते ।

गोशब्दः स्वार्थभूतगोवाहीकोभयानुगतजाडयमान्द्यादिगुणाश्रयत्वेन ( गोवृत्तिजाडयमान्द्यगुणसमानजाडयमान्द्यादिगुणाश्रयत्वरूपसम्बन्धेन ) वाहीकार्थं लक्षयतीति । ततश्च जडो वाहीक इति बोध इति । [3]विश्वनाथोऽप्येवमेव ब्रूते । तन्मतं विशेषाभावान्नानूद्यते ।

एवं सत्यपि निरूपणे महता संरम्भेणातीव निर्भीकतया सादरं प्राचीनमतं तिराकुर्वन् प्रौढ्या स्वसिद्धान्तमुपस्थापयत्यप्पयदीक्षित इत्यहो वैदुष्यमस्य विदुषः ।

---

१. मतमिदं रसगङ्गाधरे द्वि० आ० ल० नि० 'अपरे तु' इत्यनेनोपात्तम् ।
२. काव्यप्रकाशे द्वितीयोल्लासे १६ तमसूत्रवृत्तौ ।
३. साहित्यदर्पणे द्वितीयपरिच्छेदे गौणसारोपलक्षणोदाहरणे ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अप्पय्यदीक्षितो वृद्धैः पूर्वाचार्यैः क्वचित् क्वचिदस्फुटीकृतान् विशेषान् स्फुटीकर्तुं स्वोपज्ञं वृत्तिवार्त्तिकाभिदं ग्रन्थं निबध्नन् सारोपलक्षणायाम्—

नाथ त्वदीयमकलङ्कमिमं मुखेन्दुमापीय तृप्यति सदा वसुधा यतस्ते।
तेनैव किं न वसुधा रसगोचरोऽभूदिन्दुः कलङ्कमलिनीकृतमध्यभागः ॥[1]

इति पद्यघटकं मुखेन्दुपदमुदाहृत्येन्दुपदस्य मुखे लावण्यादिगुणसादृश्यात् तत्र गौण-सारोपलक्षणामुपपाद्याशशङ्के—

'मुखेन्दुः' इत्यादाविन्द्वादिपदस्य मुखादौ मुखत्वेन रूपेण लक्षणायां सत्यां मुखादि-पदस्यापि तत्रोपात्तत्वेन तेनापि मुखत्वप्रकारिकायामुपस्थितौ सत्यां पुनरुक्तिः स्यात्। इन्दुपदं स्वसमवेतलावण्यादिगुणं लक्षयित्वा तं च प्रवृत्तिनिमित्तीकृत्य मुखं बोधयेदित्यपि वक्तुं न शक्यते, अन्यगुणस्यान्यत्र प्रवृत्तिनिमित्तत्वाभावात्। मुखवृत्तिलावण्यादिगुणान् द्वारीकृत्येन्दुपदं मुखं लक्षयेदित्यपि न, मुख्यार्थसम्बन्धं विना गुणद्वारेण लक्षणाया अनौचित्यादिति।

मुखचन्द्रोभयानुगतलावण्यादिसाधारणधर्ममुखेन लक्षणास्वीकारेऽनन्तरोक्तदोषद्वयाभावात्। इदमेवाभिसन्धाय मीमांसकैः श्रीभट्टपादैरुक्तम्—

लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता[2]। इति।

एवं समाधाय प्रथमोपात्तपुनरुक्तिदोषस्यासमाधानादेतन्मतमपि निराचिकीर्षुः पुनरूचे—सारोपायामुपमानोपमेयोभयवृत्तिसाधारणधर्ममुखेन लक्षणास्वीकारेऽपि यत्र साधारणो धर्मः शब्दत उपात्तः, तत्र पुनरुक्तिदोषापत्तिरपरिहार्या स्यात्, यथा—

ताराभिरामपरिणाहलसत् सिताभ्रं तापिच्छमेचकमुरः शरदन्तरिक्षम्।
प्राप्यैव देव तव कौस्तुभपूर्णचन्द्रः पूर्णां बिभर्त्ति पुरुषोत्तम कान्तिरेखाम् ॥

इत्यादावुरसोऽन्तरिक्षस्य च परिणाहित्वमेचकत्वादिरूपसाधारणो धर्मः शब्दतः पृथगुपात्तः, अतोऽत्र पौनरुक्त्यदोषो दुर्वारः।

ईदृशस्थल उपात्तधर्मातिरिक्तधर्ममुखेन लक्षणास्वीकारोऽपि न युक्तः, मेचकत्वाद्यतिरिक्त-साधारणधर्मस्याप्रतीतावपि वाक्यार्थस्य पूर्णविश्रान्तेः।

किं च—

अङ्कितान्यक्षसङ्घातैः सरोगाणि सदैव हि।
शरीरिणां शरीराणि कमलानि न संशयः ॥[3]

इत्यादौ शब्दत उपात्तादक्षिसङ्घाताङ्कितत्व-सरोगत्वेत्येतद्वयातिरिक्तस्योपमानोपमेयवृत्ति-समानधर्मस्य सर्वथैवाप्रतीतेः कथमुपात्तधर्मातिरिक्तधर्ममुखेन लक्षणा कर्तुं युक्तेति।

उरः शरदन्तरिक्षमिवेति विग्रहेऽत्रोपमितसमासादुपमानरूपकमिति न शङ्क्यम्, साधारण-धर्मस्याप्रयोगे सत्येव "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" (पा० सू० २-१-५६) इति

---

१. वृत्तिवार्त्तिके द्वितीयपरिच्छेदे लक्षणानिरूपणे। २. तत्रैवोद्धृतम्।
३. रसगङ्गाधरे द्वितीयानने लक्षणानिरूपणे।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

पाणिनीयानुशासनेन समासविधानात्। अत्र च तत्प्रयोगात्। अतोऽत्र उर एव शरदन्तरिक्षमिति "मयूरव्यंसकादयश्च" ( पा० सू० २-१-७२ ) इति सूत्रेण समासे रूपकमेव। रूपके गौणसारोपलक्षणाऽपरिहार्य्या। सा चोपमानपदे। उपमानपदस्य चोपमेयतावच्छेदकरूपेण लक्षणायामुपमेयपदादपि तस्य प्रतीतौ पौनरुक्त्यम्। उपमानतावच्छेदकरूपेणास्वीकारेऽन्यधर्मस्यान्यत्राप्रतीतेरसम्भवदोषः। साधारणधर्ममुखेन स्वीकारे यत्र साधर्म्यं शब्दत उपात्तं तत्र पौनरुक्त्यम्, अतः सादृश्यमुखेन लक्षणा स्वीकार्या। अर्थादुपमानवाचकपदस्योपमानप्रतियोगिकसादृश्यविशिष्टोऽर्थः। सादृश्यवाचकस्य यथेवादेरत्राप्रयोगेन पौनरुक्त्याभावात्।

एवं सत्युपमानवाचकस्य शरदन्तरिक्षपदस्य लक्षणया स्वप्रतियोगिकसादृश्येऽर्थे सति सादृश्यस्य शब्दोपात्तत्वेनोपमाप्रसङ्गात्। उपमारूपकयोरेतदेवान्तरं यदुपमायामुपमानोपमेययोः सादृश्यप्रतीतिः। रूपके च तयोस्तादात्म्यप्रतीतिः। यद्यत्रापि सादृश्यमेव प्रतीयेत, तदोपमैव स्यात्, सारोपलक्षणायां रूपकमेव, नोपमेति विभागानुपपत्तेश्च।

सादृश्यस्य वाच्यत्वे एवोपमानलक्ष्यत्व इति वक्तुं न शक्यते, 'कमलसुहृन्मुखम्' इत्यादौ सुहृदादिपदस्य सादृश्ये लक्षणायामप्युपमायाः सर्वैः स्वीकारात्। एवं सादृश्यस्य वाच्यत्व एवोपमा, न लक्ष्यत्व इति पक्षोऽनुपपन्नः।

अपि च रूपकेऽपि सादृश्यविशिष्टे लक्षणायाम्—

'पादाम्बुजं भवतु नो विजयाय मञ्जुमञ्जीरशिञ्जितमनोहरमम्बिकायाः'।

इति पद्यघटकपादाम्बुजपदे उपमितसमासे उपमा, विशेषणसमासे रूपकमिति सर्वत्रैवमनवधारणे प्रसक्ते पादाम्बुजमित्यत्र निर्णयाय मञ्जुमञ्जीरशिञ्जितत्वयोगो निबद्धः। मञ्जुमञ्जीरशिञ्जितत्वस्य पादयोरेव योगसम्भवात्, कमले च तस्य सम्बन्धाभावादत्र पूर्वपदार्थप्रधानोपमितसमासे उपमा स्वीकार्या। प्रधानमेव पदार्थः स्वातन्त्र्येण पदार्थान्तरेणान्वेति। विशेषणसमासे कृतेऽम्बुजस्योत्तरपदस्य प्राधान्यं स्यात्, न तु पादयोः, अतो मञ्जुमञ्जीरशिञ्जितत्वानुपपत्तिरत्रोपमाया निर्णायिका।

एवं—

यस्यानिशं दिविषदश्चरणारविन्दमुत्तंसयन्त्यमितभक्तिभरावनम्राः।

इत्यादिपद्ये चरणारविन्दपदे रूपकस्य ( विशेषणसमासस्य ) निर्णायकमुत्तंसयन्तीति क्रियापदम्। यतो हि—अमितभक्तिभरावनम्रा देवा यस्य चरणारविन्दं निरन्तरं शिरोभूषणीकुर्वन्तीत्यर्थः। उत्तंसनं चारविन्दकार्यम्, अतोऽरविन्दस्यैवोत्तरपदस्य प्राधान्यादत्र मयूरव्यंसकादिसमासे रूपकं निर्णीयते सहृदयैः।

रूपकस्थलेऽरविन्दादिपदेऽरुणतादिसामान्यधर्मेण तन्निरूपितसादृश्यमुखेन वा लक्षणास्वीकारे कृतेऽपि मयूरव्यंसकादयश्चेत्यनेन विशेषणसमासे उत्तरपदस्यारविन्दशब्दस्यारविन्दनिरूपितसादृश्ये लक्ष्ये तस्य च गुणरूपत्वाद् गुणस्य च प्राधान्यासम्भवादुपमितसमास इव पूर्वपदार्थस्य चरणस्यैव (सादृश्यविशिष्टस्य) प्राधान्यापत्तेस्तस्य चोत्तंसनानुगुण्याभावः। गुणजात्योर्जातिः प्रधानमिति निश्चयात्। 'नीलमुत्पलम्' इत्यादौ नैल्यं गुणः, उत्पलत्वं जातिस्तयोर्जातेरेव प्राधान्यदर्शनात्।

तस्माद् रूपकस्थले साधारणधर्ममुखेन तन्निरूपितसादृश्यमुखेन वा लक्षणा व्यर्थैव। रूपके लक्षणायां ताद्रूप्यप्रतीतिः फलमित्यपि न युक्तम्, मुखेन्दुरित्यत्र साधर्म्येण लक्षणायां कान्तिमन्मुख-

CC-0. Sampurnanand University Collection. Digitized by eGangotri

मिति सादृश्यमुखेन लक्षणायां चन्द्रसदृशं मुखमिति चार्थे निष्पन्ने कथङ्कारं ताद्रूप्यप्रतीतिः ? लक्षणायां ताद्रूप्यप्रतीतौ कान्तिमन्मुखमिति चन्द्रसदृशं मुखमिति वाक्यादपि ताद्रूप्यप्रतीतिप्रसक्तेः।

लक्षणास्थले यथा 'गङ्गायां घोषः' इत्यत्र वाच्यार्थलक्ष्यार्थयोः स्रोतस्तीरयोरभेदाध्यवसायः, तथैव मुखचन्द्रयोरपि एकशब्दबोध्ययोः शब्दशक्तिमूलव्यञ्जनव्यापारेण ताद्रूप्याध्यवसायो भवति। वाच्यस्थले च भिन्नशब्दोपात्तत्वान्न भवतीत्यपि न युक्तम्। एवं स्वीकारेऽपि चन्द्रपदोपस्थाप्ययोश्चन्द्रकान्तिमतोश्चन्द्रतत्सदृशयोरेव वा ताद्रूप्यप्रतिपत्तिसम्भवेऽपि 'वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते' इत्यादावनुभवसाक्षिकस्य मुखचन्द्रयोस्ताद्रूप्यस्य प्रतीतेरसम्भवात्। यद्यपि चन्द्रसदृशं कान्तिमद् वा मुखमेव, तथापि मुखत्वविशिष्टे मुखे चन्द्रताद्रूप्याप्रत्ययादाक्षेपानुपपत्तेः।

एवं रूपकेषु समासरहितेषु 'मुखं कमलम्' इति वाक्येष्वपि सर्वत्र विषयविषयिवाचकपदयोः सामानाधिकरण्ये सति विषयिणः ( उपमानस्य ) स्वसदृशे स्ववृत्तिगुणवति वा लक्षणेत्युक्तम्, रूपकोपमयोर्भेदानिष्पत्तेः।

अपरं च—

विद्वन्मानसहंसवैरिकमलासङ्कोचदीप्तद्युते।
दुर्गामार्गणनीललोहितसमित्स्वीकार वैश्वानर !
सत्यप्रीतिविधानदक्ष ! विजयप्राग्भावभीमप्रभो !
साम्राज्यं वरवीर वत्सरशतं वैरञ्चमुच्चैः क्रियाः॥

विदुषां मानसं हृदयमेव मानसाख्यं सरस्तत्र हंस ! ( विहरणशीलेति यावत् ), वैरिणां कमलायाः=लक्ष्म्याः सङ्कोचो-विनाश एव, कमलानाम्=पद्मानाम्, असङ्कोचः विकासस्तत्र, दीप्तद्युते ! सूर्य ! दुर्गाणाम् अमार्गणमनन्वेषणमेव ( अमितपराक्रमशालितयाऽभिमुखयुद्धप्रियत्वात् ) दुर्गायाः पार्वत्याः=मार्गणमन्वेषणम्, तत्र नीललोहित ! शिव ! समितः=युद्धस्य स्वीकार एव, समिधाम्=काष्ठानां स्वीकारः, तत्र वैश्वानर ! अग्ने ! सत्ये प्रीतेः विधानमेव सत्यां शिवपत्न्याम् अप्रीतिविधानं तत्र दक्ष ! विजयस्य शत्रुपराजयस्य प्राग्भावः प्रथमसत्त्वैव विजयस्यार्जुनस्य प्राग्भावः प्रथमोपत्तिः, तत्र भीम ! प्रभो ! वरवीर ! त्वं वैरञ्च ब्रह्मसम्बन्धिवत्सरशतं शतं वर्षाणि यावत् साम्राज्यं उच्चैरुन्नतं क्रियाः विदध्याः—इत्यर्थः।

पद्येऽस्मिन् रूपकं सर्वसहृदयसम्मतम्, परमत्र लक्षणास्वीकारे हंसादिशब्दानां वर्णनीये राजनि मुखकमलयोरिव सादृश्यमप्रसिद्धम्, अतो लक्षणाप्रसाराय सादृश्यं कल्पनीयम्। सादृश्यं च साधर्म्यप्रयोज्यम्, अतः साधर्म्यनिष्पत्तये मानसपदे श्लेषः स्वीकार्यः, तेन मानसशब्दस्य मानसम् ( हृदयम् ) मानसं सरश्चार्थः, अनयोरेकपदोपस्थाप्यतयाऽभेदाऽध्यवसायः। एवं हंसभूपयोर्मानसवासित्वरूपसाधर्म्यसिद्धौ सत्यां हंसादिशब्दानां तत्सदृशे लक्षणा। श्लेषोत्थापकं चात्र रूपकम्। रूपके च लक्षणाऽपेक्षिता। एवं लक्षणा सादृश्यसापेक्षा, सादृश्यं च श्लेषसापेक्षम्, श्लेषश्च रूपकसापेक्षम्, रूपकं च लक्षणासापेक्षमिति चक्रकापत्तिः। अतो लक्षणावसरे सादृश्यानिष्पत्तेः कथमत्र लक्षणा ?

न च रूपकात् प्रागेव श्लेषेणार्थद्वयोपस्थितौ तयोरेकपदोपस्थाप्यत्वप्रयुक्ताभेदाध्यवसायेन साधर्म्यसिद्धौ लक्षणासम्भव इति शङ्क्यम्। अत्र मानसपदस्यार्थद्वयं कवेर्विवक्षितमित्यत्र रूपकमेव

CC-0. Sampurnanand University Collection. Digitized by eGangotri

गमकम्, रूपकं विनाऽर्थद्वये गमकाभावेन श्लेषोत्थानाभावात् । इत्थं रूपकं श्लेषसापेक्षम्, श्लेषश्च—रूपकसापेक्षमित्यन्योन्याश्रयदोषः ।

अपि च नानार्थस्थले प्राचीनाः ( मम्मटादयः ) प्रकरणेनाभिधा नियन्त्रिता भवतीति मन्वते, अतो रूपकात् प्राक् प्रकरणसम्बन्धं विना मानसशब्दस्य सरोरुपार्थाभिधानं श्लेषेणायुक्तम् ।

पूर्वतः सिद्धं रूपकं यदि श्लेषं ज्ञापयति, तदा रूपकम्, अन्यथा श्लेष इति रूपकश्लेषयो-र्विभागव्यवस्थाकृतवता चक्रवर्तिनाऽप्युक्तम्—

रूपकं पूर्वसंसिद्धं श्लेषं तज्ज्ञापयेद् यदि ।
तदा रूपकमेव स्यादन्यथा श्लेष इष्यते ॥[1] इति ।

अतो रूपकात् पूर्वमत्र श्लेषादर्थद्वयप्रतिपादनमसम्भवमेव ।

इत्थं दीक्षितः स्वाभिप्रायं प्रकटयन्नूचे यत्—'विद्वन्मानसहंस' इत्यादौ हंसादिपदानां राजनि लक्षणा नाङ्गीकार्या, सामानाधिकरण्येन वाक्यार्थविधयैवाभेदप्रतीतेः । 'विद्वन्मानसहंस' इति वाक्यमेव यदा भूपहंसयोरभेदं प्रतिपादयति, तदा को नाम तमभेदं निवारयितुमिष्टे । अत्यन्ता-सतोऽप्यर्थस्य शब्दः प्रतीतिं कारयत्येव । न च बाधनिश्चयः प्रतिबन्धकः स्यात्, तस्याशाब्द-स्थले प्रवृत्तेः ।

अत्र विषयविषयिणोः सामानाधिकरण्यबलेनाभेदप्रतीतावप्यालङ्कारिकसम्मततताद्रूप्य-प्रतीतिर्लक्षणां विना कथं स्यादिति विचिकित्सा न कर्त्तव्या, तयोः सर्वत्र ताद्रूप्यप्रत्यये माना-भावात् । अन्यथा ऊर्ध्वं विरञ्चिभवनात् तव नाभिपद्मात्'[2] इत्यादौ ताद्रूप्यप्रतीतावभेदप्रतीति-भङ्गापत्तेः । तत्रैवकारसाक्षात्पदाभ्यां प्रयुक्ताभ्यामभेदस्यैव स्फुटप्रतिपत्तेः ।

न चैवं 'विद्वन्मानसहंस' इत्यादौ विषयविषयिणोरभेदस्वीकारेऽतिशयोक्तिः स्यात्, विषय-विषयिणोस्ताद्रूप्यप्रतीतौ रूपकम् तयोरभेदप्रतिपत्तावतिशयोक्तिरिति विभागव्यवस्थितेः, व्यवस्थाया अस्या अनङ्गीकारात् । अन्यथा—

हृत्पङ्कजानि भजतां प्रतिबोधयन्ती संसारसागरमपि प्रविशोषयन्ती ।
ज्योत्स्ना त्वदङ्घ्रिनखचन्द्रसमुद्गतेयमन्यादृशीमभयद प्रकृतिं बिभर्त्ति ॥

अर्थात्, हे अभयद ! भक्तानां हृदयरूपं कमलं विकासयन्ती संसारसागरं शोषयन्ती त्वच्चरणनखसमुद्गता ज्योत्स्ना प्रसिद्धज्योत्स्नातो विलक्षणां प्रकृतिं धारयतीति ।

---

१. वृत्तिवार्त्तिके द्वितीयपरिच्छेदे लक्षणानिरूपणे उद्धृतम् ।
२. ऊर्ध्वं विरञ्चिभवनात् तव नाभिपद्माद्
　　रोमावलीपदजुषस्तमसः परस्तात् ।
　मुक्तौघमण्डितमुरःस्थलमुन्मयूखं
　　पश्यामि देव परमं पदमेव साक्षात् ॥
इति वृत्तिवार्त्तिके प्रथमपरिच्छेदे योगशक्तेरुदाहरणप्रसङ्गे उद्धृतं सम्पूर्णं पद्यम् ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

पद्येऽस्मिन् ज्योत्स्नेति विषयिपदमात्रस्य निर्देशः, तेन विषयो नखकान्तिरूपो निगीर्णः, तथाप्यत्र प्रसिद्धज्योत्स्नायास्ताद्रूप्यमात्रस्य प्रतीतिः, नाभेदस्य। यतो हि प्रसिद्धा ज्योत्स्ना कुमुदानि विकासयति, न पङ्कजानि, न वा जलं शोषयति। नखसमुत्थज्योत्स्ना तूभयं करोतीत्यतोऽभेदो न विवक्षितः, ताद्रूप्यमेव विवक्षितम्। परमत्रातिशयोक्तिरेव, न रूपकम्।

अतो विषयविषयिपदसामानाधिकरण्ये रूपकम्, विषयिपदमात्रनिर्देशेऽतिशयोक्तिरिति नियम आदरणीयः। न तु ताद्रूप्ये रूपकमभेदेऽतिशयोक्तिरिति नियमः। एवं 'विद्वन्मानसहंस' इत्यादावभेदप्रतिपत्तौ सत्यामपि रूपकं सम्भवतीति न काचन क्षतिः।

परं रूपकातिशयोक्त्योरेवं भेदस्वीकारे शब्दवैचित्र्यमात्रकृतो भेदो निष्पन्नः। एवमनयोरर्थालङ्कारत्वं न स्यात्, अतस्ताद्रूप्ये रूपकम् अभेदेऽतिशयोक्तिरित्येव नियमः स्वीकार्य इत्युच्यते प्राचीनैः, तदा 'विद्वन्मानसहंस' इत्यत्राभेदप्रतीतेरतिशयोक्तिर्विषयविषयिसामानाधिकरण्येऽपि स्वीकार्या। "ज्योत्स्ना त्वदङ्घ्रिनखचन्द्रसमुद्गतेयम्" इत्यादौ विषयिमात्रनिर्देशेऽपि प्राचीनामभिमतामतिशयोक्तिमपहाय रूपकमेव स्वीकर्तव्यम्, न च स्वीक्रियते। तस्मान्मदुक्तनियम एवादर्तव्यः।

एतादृशस्थले समभिव्याहारादेवाभेदप्रतीतिः, लक्षणाप्रयासस्तदर्थं व्यर्थः।

परमेवं सर्वत्र विषयविषयिवाचकपदसामानाधिकरण्यस्थले समभिव्याहारादेवाभेदप्रतीतौ सारोपलक्षणाया विषयापहारः स्यादिति शङ्कायां निःशङ्कं दीक्षितो[1] वदति, भवतु विषयापहारः, न काप्यनुपपत्तिः, प्रत्युतेष्टापत्तिरिति।

एवमेव चित्रमीमांसायामपि रूपकप्रकरणे रूपके लक्षणां निषेधति। तथा हि—'रूपके विषयविषयिणोः स्वस्ववाचकाभिहितयोरभेदप्रतिपत्तिः संसर्गमर्यादयैव सम्भवतीति किमर्थं तत्र लक्षणेत्यादिना लक्षणस्यासम्भवोऽपि दोषः' इत्यन्तेन। कुवलयानन्दे च रूपकं लक्षयन् प्राचीनसिद्धान्तस्य स्वकीयस्य च विभिन्नस्थले विनियोगं दर्शयन् विषयिणोऽभेदं ताद्रूप्यं चोपमेये निरूपयति 'विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यद्' इत्यादीति।

पण्डितेन्द्रो [2]जगन्नाथोऽप्पयदीक्षितस्यैतन्मतं 'नव्यास्तु' इत्यनेन सम्यगुपपाद्य निराचक्रे, तद्यथा—"यदुच्यते विषयविषयिणोः सामानाधिकरण्येन समभिव्याहारबलान् नामार्थयोरभेदेनैवाभेदोपपत्तौ रूपके लक्षणा व्यर्थेति, तत्रोच्यते—यत् साधारणधर्मानवभासदशायां यथोपमा न निष्पद्यते, तथैव रूपकमपीति सकलसहृदयसिद्धम्।

अत एव 'भारतं नाकमण्डलम्' 'नगरं विधुमण्डलम्' इति वाक्यश्रवणानन्तरं नामार्थयोरभेदान्वयबोधे सत्यपि रूपकालङ्कारस्तावन्न स्फुरति सहृदयहृदये यावत् 'सुपर्वाऽङ्कृतम्' 'सकलकलम्' इति साधर्म्यबोधकपदे क्रमशः पूर्वोक्ते वाक्ये न श्रूयेते। प्रसिद्धरूपकोदाहरणे 'मुखं चन्द्रः' इत्यादावपि साधर्म्यापेक्षा वर्तते, परं तत्र प्रसिद्धतया साधारणो धर्मः स्ववाचकपदश्रुतिं नियमतो

१. वृत्तिवार्त्तिके द्वितीयपरिच्छेदे लक्षणानिरूपणे।
२. रसगङ्गाधरे द्वितीयानने लक्षणानिरूपणे।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

नापेक्षते । अप्रसिद्धस्थले तु रूपकनिष्पत्तये साधर्म्यं नियमतोऽपेक्षते । अतः साधारणधर्मवत्त्वरूप-सादृश्यं यदि लक्षणया न ज्ञातं स्यात्, तदा तत्र रूपकमपि पर्यवसितं न स्यात् । चमत्कारोऽपि न स्यात् । अतस्तत्र प्राचीनैरुक्ता लक्षणा युक्तैव ।

पदार्थयोराहार्यभेदज्ञाने तज्जन्यचमत्कारे वा साधारणधर्मज्ञानप्रयोजकम्, अतः साधारणधर्माभाने आहार्यभेदबुद्धिरपि न स्यादिति वक्तुं न शक्यते । तथा हि—

> यद्यनुष्णो भवेद् वह्निर्यद्यशीतं भवेज्जलम् ।
> मन्ये दृढव्रतो रामस्तदा स्यादप्यसत्यवाक्[1] ॥

अस्यार्थः—यद्यनुष्णाभिन्नो वह्निः स्यात्, अशैत्याभिन्नं जलं स्यात्, तदा सम्भाव्यते यद् दृढव्रतो रामोऽप्यसत्यवाक् स्यादिति ।

अर्थाद् यथा वह्नेरनुष्णता जलस्य चाशीतताऽसम्भविन्यौ, तथा सत्यसन्धस्य रामस्या-सत्यवक्तृता असम्भविनीति ।

अत्र समानधर्मस्याभावेऽपि अनुष्णवह्न्योरशीतलजलयोरभेदप्रतीतिस्वीकारात् ।

( अत्र वह्न्यादावनुष्णाद्यभेदप्रतीतेरित्यर्थं इति समुचितामपि नागेशटीकामनाकलयन् स्वकीयमज्ञानमजानन् नागेशंश्चापलपन् कश्चन टीकाकारो नापत्रपते । अत्र नागेशोक्तं न प्रतीयत इति कोऽप्यनुन्मत्तो वक्तुं न क्षम इति ) ।

उपमानोपमेयभावस्थले एवाहार्यभेदबुद्धौ समानधर्मज्ञानं प्रयोजकम्, नान्यत्रेत्यपि कल्पनया न निस्तारः, अस्यां कल्पनायां मानाभावात् । मुखं यदि चन्द्रः स्यात्, तदा भूम्यवस्थितं न स्यादित्युपमानोपमेयवाक्ये साधारणधर्माभावेऽप्यभेदप्रतीतेः ।

न च प्राचोनरीत्या रूपके यद्युपमानवाचकपदस्य स्वसदृशे लक्षणा स्वीक्रियते, तदा 'सिंहेन सदृशो नायं किन्तु सिंहो नराधिपः' इत्यत्र द्वितीयसिंहशब्दस्य लक्षणया सिंहसदृश एवार्थः । एवं पूर्ववाक्येन सिंहसादृश्यं निषिध्यापरवाक्येन पुनस्तस्यैव प्रतिपादनमसङ्गतं स्यादिति रूपकस्थले लक्षणास्वीकारे दोषः । मदीयरीत्या तु पूर्ववाक्येन सादृश्यं निषिध्योत्तरवाक्येना-भेदः प्रतिपाद्यत इति नासङ्गतिरिति वाच्यम्, रूपके ताद्रूप्यप्रतिपत्तेः स्वीकारात् ।

अत्र प्राचां मतेऽप्यसङ्गतेरभावः, यतो हि सादृश्यं द्विविधम्—नैयायिकाभिमतं मीमां-सकाभिमतञ्च । तत्र नैयायिकाभिमतं भेदघटितम्, मीमांसकाभिमतं भेदाघटितम् । रूपके भेदा-घटितं सादृश्यं विवक्षितम् । एवमत्र सिंहेन सदृशो नायमित्यनेन भेदघटितसादृश्यस्य निषेधः । 'सिंहो नराधिप' इति रूपके सिंहशब्दस्य तत्सदृशे लक्षणायामपि भेदाघटितं सादृश्यं विधेयमिति नासङ्गतिः ।

यत्तु दीक्षितेनोक्तं यद् रूपके लक्षणां विनैवाहार्य्यभेदप्रतीतिः, अत एव 'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम्' इत्यत्र राजा नारायण इवेति विग्रहे उपमितसमासे पूर्वपदार्थस्य राज्ञ उपमेयस्य प्राधान्याद्रमायाः प्रतीतौ लक्ष्मीकर्तृकं राजकर्मकमालिङ्गनं विरुद्धं स्यात्, न

---

१. रसगङ्गाधरे ।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

हि काचन कुलीनाऽङ्गना स्वपतिसदृशमन्यमालिङ्गति । राजा नारायण एवेति विग्रहे विशेषण-( मयूरव्यंसकादयश्चेत्यनेन ) समासे उत्तरपदार्थस्य प्राधान्येऽपि यदि नारायणशब्दस्य नारायण-सदृशे लक्षणा, तदापि स एव दोषः, अतोऽत्र लक्षणां विनैवाभेदप्रतिपत्तिर्युक्ता ।

एवम् 'पादाम्बुजं भवतु नो विजयाय मञ्जुमञ्जीरशिञ्जितमनोहरमम्बिकायाः' इत्यत्र पादयोरम्बुजाभेदप्रतिपत्तौ मञ्जुमञ्जीरशिञ्जितमनोहरत्वोपपादनमनुपपन्नं स्यात् । न ह्यम्बुजे मञ्जुमञ्जीरसिञ्जनयोगः । अतोऽत्रोपमितसमासे पूर्वपदार्थस्य प्राधान्यात् पादयोर्मञ्जीर-सिञ्जनसम्बन्धोपपत्तेर्हेतुरुपमेव युक्ता । प्राचीनानां मम्मटभट्टादीनामप्ययमेवाभिप्राय इति । तत्तु न समीचीनम्, यतो हि—'राजनारायणम्' इत्यत्र विशेषणसमासे नारायणस्योत्तरपदार्थस्य प्राधान्याद् नारायण सदृशे लक्षणया भानेऽपि नारायणसदृशस्य राज्ञो नारायणत्वेनैव प्रतीतौ लक्ष्मीकर्तृकमालिङ्गनमुपपन्नम् ।

एवं 'पादाम्बुजम्' इत्यत्र रूपकस्वीकारे प्रधानीभूतोत्तरपदार्थस्याम्बुजस्य तत्सदृशे लक्षणयाऽम्बुजसदृशस्याप्यम्बुजत्वेनैव प्रतीतेर्मञ्जीरसिञ्जनमनुपपन्नम्, अतस्तत्रोपमितसमास इति न कापि क्षतिः ।

न च 'पादाम्बुजम्' इत्यत्रोपमितसमासेऽप्यम्बुजपदस्य लक्षणयाऽम्बुजसदृशेऽर्थेऽम्बुजा-म्बुजसदृशयोरेकपदेनोपस्थाप्यत्वादभेदाध्यवसानेन ( एकपदोपस्थाप्यार्थद्वयेऽभेदाध्यवसानमिति नियमः ) ताद्रूप्येऽम्बुजताद्रूप्यवति सदृशपदार्थे पादेऽप्यम्बुजत्वमेव प्रतीयते, न पादत्वम् । यथा वक्त्रे चन्द्रमसि स्थिते 'किमपरः शीतांशुरुज्जृम्भते' इत्यत्र वक्त्रे चन्द्रत्वप्रतिपत्तिरुपपादितेति शङ्क्यम्, उपमितसमासे भेदघटितसादृश्यस्यालङ्कारिकैः स्वीकारात्, 'सादृश्यमुपमाभेदे' इति मम्मटाचार्योक्तेः[1] ।

'मुखं चन्द्रः' इत्यत्र चन्द्रशब्दस्य चन्द्रसदृशे लक्षणया सादृश्यमत्र शब्दत उपात्तम्, अतोऽत्रोपमा स्यादिति न शङ्क्यम्, भेदाघटितसादृश्यस्य रूपकालङ्कारविषयत्वात् । भेदघटित-सादृश्यं प्रतिपादयितुम् 'मुखं चन्द्रः' इति शब्दस्य प्रयोगो विरुद्धः ।

ताद्रूप्यप्रतिपादनेच्छयैवात्र लाक्षणिकशब्दप्रयोगः । रूढिव्यतिरिक्तस्थले प्रयोजनमभि-सन्धायैव लाक्षणिकशब्दप्रयोगः । प्रयोजनं चात्र ताद्रूप्यप्रतिपत्तिः । अतो भेदघटितसादृश्य-प्रतिपादनाय लक्षणया शब्दप्रयोगो नेष्टः । भेदताद्रूप्ययोर्मिथो विरोधात् समकालमेव बुद्धिपथा-नारोहाच्च ।

अथ भेदघटितसादृश्यप्रतिपादनाय लक्षणया प्रयोगो नेष्टश्चेत्, एवमपि पुरुषव्याघ्र इत्यु-पमितसमासे व्याघ्रशब्दस्य व्याघ्रसदृशे लक्षणा सर्वैः स्वीक्रियते ऋते वैयाकरणात् । अन्यथा सदृशवाचकशब्दाभावात् समासे सादृश्यप्रतीतिर्न स्यात् । पुरुषो व्याघ्र इवेति विग्रहवाक्ये इव-शब्दसत्त्वेऽपि समासे तस्य सम्बन्धाभावात् । समासे 'इव' शब्दस्य सम्बन्धस्वीकारे समासेऽपीव-शब्दस्य श्रवणं प्रसज्जेत । न च समासे इवशब्दः श्रूयते । अतो विग्रहवाक्ये एवेवशब्दस्य सम्बन्धः, तत्रैवेवशब्दः सादृश्यं बोधयेत्, न तु समासे । समासे सादृश्यप्रतीतिर्नास्तीति वक्तुं न शक्यते,

---

१. का० प्र० द० उ० ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

पुरुषव्याघ्र इत्यस्य पुरुषो व्याघ्र इवेत्यनेन वाक्येन विवरणानुपपत्तेः। विग्रीयमाणवाक्यघटक-शब्दबोध्यार्थस्यैव विवरणं भवति। अतोऽत्रोत्तरपदस्य स्वार्थसदृशे लक्षणास्वीकर्तव्या। लक्षणा च ताद्रूप्यप्रतिपादनायैवेति भवता स्वीक्रियते। एवं ताद्रूप्यप्रतिपत्तौ कथमत्रोपमा, कथं वा द्विलुप्तेयमुपमेति प्राचीनैरुक्ता सङ्गच्छते ?

अर्थाद् व्याघ्रशब्दस्य लक्षणया व्याघ्रसदृशोऽर्थ इति व्याघ्रशब्दसत्त्वे कथं वाचकलुप्ता ? लक्षणाफलं ताद्रूप्यप्रतिपत्तिः (ताद्रूप्यं च स्ववृत्तिशौर्यादिगुणसमानगुणवत्ता) इति धर्मबोधकोऽपि व्याघ्रशब्द एवेति तत्सत्त्वे कथं वा धर्मलुप्तेति द्विलुप्तोपपादनं प्राचीनैः कृतमसङ्गत-मित्यभिप्रायः।

नागेश एवमेव विवृणुते, तदभिप्रायमजानन् कश्चन साम्प्रतिको टीकाकारोऽन्यथा व्याख्याय नागेशं निराकुर्वन् मुधैव विनेयान् भ्रामयति।

समाधानम्—वैयाकरणानां मते 'समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्' इति रीत्या समासे पूर्वपदस्योत्तरपदस्य वा न कोऽप्यर्थः, अपि तु समुदायशक्त्यैवार्थः प्रतीयत इति 'पुरुष-व्याघ्रः' इत्यस्य व्याघ्रनिरूपितभेदघटितसादृश्यविशिष्टः पुरुष इत्यर्थः समासशक्त्या प्रतीयते। नात्रोत्तरपदस्य व्याघ्रशब्दस्यैव सदृशे लक्षणेत्युपमायां ताद्रूप्याप्रतीतेः।

नैयायिकाः समासे पृथक् ( समुदाय )शक्तिस्वीकारे गौरवमागूरयन्त्यतस्तेऽत्रोत्तर-पदस्य लक्षणामङ्गीकुर्वन्ति। एवं तेषां मते व्याघ्रपदस्य भेदघटितसादृश्यविशिष्टे लक्षणा भवति, परं सा रूढिः, न प्रयोजनवती। प्रयोजनवत्यामेव ताद्रूप्यप्रतीतिरिति बहुश उपपादितः। एवं ताद्रूप्यप्रतीतेरभावादत्र न रूपकम्, अपि तूपमैवेति। अत्रोपमानवाचकपदस्यैव सादृश्यबोधकत्वा-दुपमानाद्यमिश्रितसादृश्यस्य तद्विशिष्टस्य वा प्रतिपादकशब्दाभावाद् वाचकलुप्तात्वम्, ताद्रूप्याप्रतीते-र्धर्मलुप्तात्वञ्च वर्तेत इति द्विलुप्तोपपादनमपि सङ्गतम्। यच्च 'विद्वन्मानसहंस' इत्यत्रान्योन्या-श्रयदोष उद्भावितः, सोऽप्ययुक्त एव; यतो हि लोकशास्त्रविलक्षणे काव्ये सर्वेऽर्थाः कल्पनाप्रसूताः सन्ति। कल्पना च कविप्रतिभाप्रसूता। अन्योऽन्योन्याश्रयादिदोषा लोके शास्त्रे च भवन्तु, काव्ये तु कल्पनया सर्वं युगपदेव सम्पाद्यत इति न दोषः। लोकेऽपि शिल्पिनः परस्पराश्रितशिलेष्ट-कादिभिर्गृहादीनि निर्मान्त्येव। कर्मफलयोर्बीजवृक्षयोः परस्पराश्रितत्वेऽपि दोषाभावाच्च।

यदप्युक्तं रूपके सदृशलक्षणायाः फलं ताद्रूप्यप्रतीतिर्न युक्ता, तत्सदृश इति शब्दजन्य-बोधानन्तरमपि ताद्रूप्यप्रत्ययापत्तेरिति, तदपि न युक्तम्; तत् सदृश इति वाचकशब्दाज्जायमानबोधे लक्षणाया अभावेन ताद्रूप्यप्रतीतेरभावात्। ताद्रूप्यप्रतीतिर्लक्षणाया फलमिति प्राचीनसिद्धान्तात्। महाभाष्येऽपि "पुंयोगादाख्यायाम्" ( पा० ४-१-४८ ) इति सूत्रे 'कथं पुनरतस्मिन् स इत्येतद् भवतीत्याशङ्क्य चतुर्भिः प्रकारैरारोप्यते ताद्रूप्यम्, न तु मुख्यमिति ताद्रूप्यसम्प्रत्यय उपपादितः। नव्यमते सर्वमिद माकुलीभूतं स्यादिति'।

राजचूडामणिदीक्षितोऽपि[1] सारोपा, गौणी, शुद्धेति भेदतो द्विविधेति व्याख्याय 'मुखेन्दु-र्नयनानन्दस्तन्व्या विजयतेतराम्' इत्यादिनोदाहृत्याप्यप्पयदीक्षितस्य मतमनूद्य निरास्थत। तस्यायं भावः—

---

१. काव्यदर्पणे द्वितीयोल्लासे ६५–६७ पृष्ठं यावद् वृत्तौ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

यद्यपि 'मुखं चन्द्रः' इत्यत्र चन्द्रपदात् चन्द्रसदृशस्यैव लक्षणया बोधः, तथाप्युपमातो रूपकस्याऽयं भेदो यद् रूपके उपमानवाचकपदेनैव सादृश्यप्रतिपादनम्, उपमायां चोपमानवाचक-पदादन्येन पदेनेवादिना सादृश्यं प्रतिपाद्यत इति शङ्का—भवतोच्यते । उपमायामुपमानवाचक-पदादन्येन पदेनेवादिना सादृश्यं प्रतिपाद्यते, परं पद्माक्षीत्यादौ लुप्तोपमोदाहरणे तूपमानवाचक-पदेनैव लक्षणया सादृश्यं प्रतिपाद्यते, न त्वन्येनेति कथं तत्र लुप्तोपमेति ।

समाधिः—'दधि पश्य' इत्यत्र यथा लुप्ताम् विभक्तिरेव कर्मत्वप्रत्यायिका, तथा सप्त-म्युपमानपूर्वपदस्येत्यादिसमासशास्त्रबलेन लुप्तस्येवादेरेव सादृश्यप्रत्यायकत्वमिति नोपमान-वाचकपद्मादिपदात् तत्र सादृश्यप्रतीतिरिति ।

शङ्का—यत्किञ्चिद्भेदमादायालङ्कारभेदोपपादनमयुक्तम् ।

समाधिः—प्रस्तुताप्रस्तुतयोरेकधर्मान्वये दीपकालङ्कारः । प्रस्तुतयोरेवैकधर्मान्वये तुल्य-योगितास्वीकारेण यत् किञ्चिद्भेदमादायाप्यलङ्कारभेदोपपादनं युक्तमेव । अपि च 'चन्द्र इव मुखम्, मुखमिव चन्द्रः' इत्यत्र तृतीयसदृशव्यवच्छेदरूपं फलभेदमनुसन्धायोपमेयोपमालङ्कारः पृथक् स्वीक्रियते सहृदयैः, न तूपमाप्रतीपयोः संसृष्टिः । तथैवार्थप्रतिपादनाय मुख्यं शब्दं विहाय लाक्षणिकप्रयोगः किमर्थ इति शङ्का निरासाय सदृशलक्षणायास्ताद्रूप्यप्रतिपत्तिः फलं स्वीक्रियते । एवं फलभेदसत्त्वादलङ्कारभेदे न विरोधः ।

चरणारविन्दमुत्तंसयन्तीत्यत्र यो दोष उपपादितः, सोऽपि न सम्यक्, यतो हि चरणेऽपि सादृश्यलक्षणयाऽरविन्दताद्रूप्यप्रतीत्योत्तंसनरूपकार्यसिद्धेः, रूपकव्यवस्थोपपत्तेः ।

यदप्युक्तमप्पयदीक्षितेन 'विद्वन्मानसहंसस्त्वं विजयस्व विशांपते !' इत्यत्र भूपहंसयोः प्रसिद्धसाधर्म्याभावात् तत्र सादृश्यलक्षणा न युक्ता । विदुषां मानसम्=हृदयमेव मानसाख्यं सर इति हृदयमानससरसोरभेदाध्यवसायेन मानसवासित्वरूपसमानधर्ममूलकं सादृश्यं तत्रास्तीति न शङ्क्यम् । मानसपदे साधर्म्यबोधकस्य श्लेषस्योत्थापकं रूपकमेव । रूपकं च लक्षणामूलमेवं लक्ष्यार्थप्रतीतेः प्राक् श्लेषस्यानाकलनात् । प्रथममेव रूपकात् श्लेषोत्थानं कथं नेति चेद्, रूपकं विना मानसशब्दतो हृदयसरोरूपार्थद्वयप्रतीतिः कवेर्विवक्षितेत्यत्र गमकाभावेन श्लेषानुत्थानात् ।

अपि च प्रकरणेन नियन्त्रिताऽभिधा रूपकपरिज्ञानात् प्रागप्राकरणिकं सरोरूपमर्थं मानसपदान्नाभिधास्यति । एवं 'मुखं चन्द्रः' 'राजा हंसः' इत्यादौ प्रायः क्वापि लक्षणानाङ्गी-कर्तव्या । सर्वत्र मुखादिवृत्तिचन्द्रादिताद्रूप्यस्य सामानाधिकरण्यबलेन वाक्यार्थविधयैव प्रतीते-र्लक्षणां विनैव ताद्रूप्यप्रतिपत्तौ लक्षणाऽफलैवेति ।

अत्रोच्यते—नहि प्रसिद्धसादृश्यमत्र लक्ष्यम्, किन्तु सादृश्यमात्रं लक्ष्यम् । सहृदयः श्रोता 'विद्वन्मानसहंस' इत्यादिवाक्यं श्रुत्वा आप्तेन वक्त्रा भूपहंसयोः सामानाधिकरण्येन प्रयोगः सादृश्यविवक्षयैव कृत इति प्रथमं निश्चिनोति । पश्चादत्र वक्त्रा विवक्षितं सादृश्यमन्विष्यमाणः श्लेषाभिव्यक्तमानसमानससरसोरभेदाध्यवसानेन मानसवासित्वरूपं सादृश्यम् ( साधर्म्यम् ) निश्चिनोति । इत्थं विचारणायां न काप्यनुपपत्तिः । 'मुखं चन्द्रः' इत्यादिवाक्यं वक्त्रा सादृश्य-विवक्षयैव प्रयुक्तम्, अतश्चन्द्रसादृश्यं वक्तृतात्पर्यीभूतं लक्षणां विना कथं प्रतीतिपथमवतरे-दित्यवश्यं लक्षणोपास्येति ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

वस्तुतस्तु 'मुखं चन्द्रः' इत्यत्र मुखे चन्द्रताद्रूप्यप्रतीतिः सकलसहृदयानुभवसिद्धा, अतश्चन्द्रपदस्य चन्द्रताद्रूप्ये एव लक्षणा स्वीकर्तव्या। सादृश्यप्रतीतिस्तु तस्याः फलम्। अत एव रूपकादावुपमाव्यङ्ग्यरूपेणावस्थितेति साम्प्रदायिका निगदन्ति।

अस्मिन् पक्षेऽन्यवृत्तिधर्मस्यान्यस्मिन्नभावात् चन्द्रताद्रूप्यस्यापि मुखगतत्वाभावेन चन्द्रताद्रूप्यं प्रवृत्तिनिमित्तीकृत्य चन्द्रपदस्य मुखे प्रवृत्तिरयुक्तेति चेत्, सत्यम्; चन्द्रपदस्य लक्षणया चन्द्रताद्रूप्ये लक्षिते सामानाधिकरण्यबलात्, मुखे तत्ताद्रूप्यस्य प्रतीतावविरोधात्।

लक्षणां विनैव सामानाधिकरण्यबलात् ताद्रूप्यप्रतीतिर्न शङ्क्या, अनुभवसिद्धायाश्चन्द्रताद्रूप्यप्रकारिकायाः प्रतीतेर्लक्षणां विनाऽनिर्वाहात्। 'नीलमुत्पलम्' इत्यादौ सामानाधिकरण्येनाभेदप्रतीतावपि ताद्रूप्यप्रतीतेरभावात्।

विषयविषयिणोः सामानाधिकरण्येन निर्देशे सर्वत्र ताद्रूप्यमेव विवक्षितम्। अभेदप्रतीतिस्तु विषयिवाचकमात्रपदोपादानादेव सिद्धा। यथाऽतिशयोक्तौ। अभेदप्रत्ययार्थं विषयविषयिणोर्द्वयोरुपादानं व्यर्थं स्यात्, केवलाद् विषयिणः प्रत्यायनात्।

यद्यपि 'साक्षाच्चन्द्र एवेदं मुखम्' इत्यत्र विषयविषयिवाचकपदद्वयोपादानेऽप्येवकारसाक्षात्पदाभ्यां चन्द्राभेदस्यैव प्रतीतिर्भवति, तथापि एवंविधस्थले ( यत्र साक्षात्पदमेव पदमुपात्तं तत्र ) अभेदप्रतीतावपि सामान्यतः पदद्वयोपादाने ताद्रूप्यप्रतीतेरेवानुभवसिद्धत्वादिति।

समीक्षा—वस्तुतः 'मुखं चन्द्रः' इति वाक्यमाकर्ण्य सहृदयानां कीदृशी प्रतीतिर्जायत इति विवेचनीयम्। किम् 'नीलो घटः' इति वाक्याद् यथा नीलपदार्थघटपदार्थयोरैक्यादभेदप्रतीतिः, तथा मुखपदार्थचन्द्रपदार्थयोरैक्यादभेदः; उत रज्जौ सर्पप्रतीतिरिव मुखे चन्द्रप्रतीतिः, अर्थाद् यथा सर्पेणावच्छादिताया एव रज्ज्वाः प्रतीतिः सर्पप्रतीतिकाले रज्ज्वाः प्रतीतिर्न जायते, रज्ज्वाः प्रतीतिसमये सर्पप्रतीतिर्निवृत्ता भवति, तथैव चन्द्रेणावच्छादितस्यैव मुखस्यापीति। अथवा एकस्मिन् चन्द्रे द्विचन्द्रप्रतीतिरिव बाध्यमाना मुखे चन्द्रप्रतीतिरिति।

तत्र न प्रथमः, मुखादतिरिक्तस्य चन्द्रपदार्थस्य सत्त्वात्।

न द्वितीयः, पृथगुपात्तस्य मुखस्य मुखत्वेनैवावभासात्।

न तृतीयः, तथाप्रतीतेरबाधात् ( 'मुखम्, न चन्द्रः' इत्याकारकबाधनिश्चयशतेनाप्यबाधात् )।

तस्मादत्र मुखे चन्द्रत्वप्रतिपत्त्यर्थः ( चन्द्रवृत्तिगुणवत्त्वप्रतीतये ) सामानाधिकरण्येन निर्देशः। इत्थं भेदाभेदरूपताद्रूप्यमत्र विवक्षितम्।

अपि च सामानाधिकरण्यबलेन याऽभेदप्रतीतिः सा न चमत्कारिणी; चमत्कारिण्याः प्रतीतेरेवालङ्कारबीजत्वात्। अत्र चमत्कारिणीप्रतीतिः कथं स्यादिति चिन्तनीयम्, 'नीलमुत्पलम्' 'राजा पुरुषः' इत्यादौ सामानाधिकरण्यबलेनाभेदप्रत्ययेऽपि न तत्र रूपकम्, चमत्कारिप्रतीतेरभावात्। अतो यत्रोपमानोपमेयभावस्तत्रैव रूपकम्। उपमानोपमेयभावश्च सदृशयोरेव, न कार्यकारणजन्यजनकभावादिकयोः। अतः सादृश्यस्य वाचकपदाभावात् तत्रोपमानपदस्य स्वप्रतियोगिकसादृश्ये लक्षणा भवति। लक्षणा चात्र प्रयोजनमभिसन्धाय क्रियते। तस्याश्च ताद्रूप्यप्रतीतिः प्रयोजनम्।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

तादृूप्यं च यद्यपि मुखादौ चन्द्रत्वसमनियतगुणवत्त्वज्ञानमेव, तथापि आह्लादकत्व-वर्तुलत्व-कान्तिमत्त्व-गौरत्वादिगुणानां सहृदयहृदयानुरञ्जकानामेव मुखे प्रतीत्या चमत्कारो जायते, न तु जाड्यत्व-उपचयापचयत्व-कलङ्कित्वादीनामहृद्यानामिति हृद्यगुणानामेव मुखे प्रतीतिः स्यात्, नत्वहृद्यानामेतत् प्रयोजनसम्पत्त्यर्थमेवात्र लक्षणामूलव्यञ्जनोदेति। तया चोक्त्यन्तरा-शक्यचारुत्वप्रतीतिर्जायते।

सामानाधिकरण्यबलेन 'निपातातिरिक्तनामार्थयोरभेदातिरिक्तसम्बन्धेनान्वयोऽव्युत्पन्नः' इति नियमादभेदप्रतिपत्तौ तु हृद्याहृद्यसकलगुणानां चन्द्रवृत्तीनां मुखे प्रतीतिः स्यादिष्यते तु हृद्यानामेवेति लक्षणोपास्यैव। सदृशलक्षणानन्तरं नामार्थयोरभेदसंसर्गप्रतिपत्तौ न दोष इति।

उपमानशब्दानां स्वप्रतियोगिकसादृश्ये लक्षणायां भट्टोजिदीक्षितोऽप्यनुकूलः। यद्यपि महावैयाकरणो भट्टोजिदीक्षितः समासे समुदायशक्त्यैव बोधमभ्युपैति, तथापि मीमांसकनैया-यिकानां समासे पृथक् शक्तिस्वीकारे गौरवमागूरयतां मते लक्षणां निरूपयति। तथाहि "उप-मानानि सामान्यवचनैः" (पा० २-१-५५) इति सूत्रस्य घन इव श्यामो घनश्याम इत्युदाहरणं प्रदर्श्य वदति यत् 'इह पूर्वपदं तत्सदृशे लाक्षणिकम्' इति सूचयितुं लौकिकप्रयोगे इवशब्दः प्रयुज्यते[1] इति।

एवम् 'पुरुषो व्याघ्र इव पुरुषव्याघ्रः' 'ना सोम इव नृसोमः' इत्यादावप्युत्तरपदस्य लाक्षणिकत्वसूचनाय विग्रहे इवशब्दस्य प्रयोगः कृतः। एवमुपमानपदानां स्वप्रतियोगिकसादृश्ये तदाश्रये वा लक्षणेति सर्वेषामविवादः।

अन्यच्च—साधर्म्यप्रतीतिमन्तरा रूपकं न स्फुरति। अत एव महाभाष्यप्रदीपमुपक्रम-माणस्य स्वाभिमानं परिहरतः कैयटस्य—

> भाष्याब्धिः क्वाति गम्भीरः क्वाहं मन्दमतिस्ततः।
> छात्राणामुपहास्यत्वं यास्यामि पिशुनात्मनाम्[2]॥

इत्युक्तौ भाष्यमब्धिरिवेत्यत्रोपमितसमासो न स्यात्, अतिगम्भीर इति साधर्म्यस्याप्युपादानात्। अत्रोपात्तधर्मातिरिक्तधर्मस्यैव विस्तृतत्वातिगहनत्वदुरवगाहत्वादेः समानधर्मस्य विवक्षितत्वात् तस्य चाप्रयोगादिति समाहितं भट्टोजिदीक्षितेन[3]। परं केचन प्रमाद एवाऽयमित्याहुः। नागेशस्तु[4]—उपात्तधर्मसत्त्वे तेनैव साम्यप्रतीतेरनुभवात् 'सकलकलः पुरचन्द्रो राजते' इत्यादा-वुपात्तधर्मातिरिक्तधर्मस्य साम्यप्रयोजकस्याभावाच्च दीक्षितसमाधानं चिन्त्यमुपपाद्य भाष्याब्धि-रित्यत्र मयूरव्यंसकादित्वात् समासं मेने। अन्यत्र[5] च अतिगम्भीरेति साधर्म्योपादानात् 'मयूर-व्यंसकादिसमासो रूपकं च' इत्यूचे।

---

१. सि० कौ० तत्पुरुषसमासे।
२. महाभाष्यप्रदीपारम्भे म० प० ६।
३. मनोरमायाम् "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" २-१-५६ सूत्रे।
४. शब्देन्दुशेखरे त० प्र० प्र०।
५. प्रदीपोद्द्योते।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

एवं यत्रैकपदार्थे विशेषणविशेष्यवाचकपदयोः प्रयोगः, यथा 'नीलो घटः, नीलमुत्पलम्, राजा पुरुषः' इत्यादौ, तत्र सामानाधिकरणबलादभेदसंसर्गो भासते। यत्रोपमानोपमेययोः सामानाधिकरण्येन प्रयोगः, तत्रोपमानपदस्य लक्षणया स्वसदृशबोधानन्तरं वाच्यार्थलक्ष्यार्थयोरभेदसंसर्गो भासत इत्यविवादः। नैयायिकादीनां मते यद्यपि 'नीलो घटः, नीलमुत्पलम्' इत्यादौ नीलपदस्य नीलगुणवर्तिलक्षणा वर्तते, तथापि निरूढा सा। निरूढायां प्रयोजनवत्तानियमाभावात्—

अपि च—'अस्या मुखेन्दुना लब्धे नेत्रानन्दे किमिन्दुना' इति रूपकोदाहरणे मुखेन्दोर्नाभेदप्रतीतिः, अपि तु मुखे इन्दुताद्रूप्यस्यैव (चन्द्रकार्यकारित्वस्यैव) प्रतीतिः, अत एव 'किमिन्दुना' इत्यनेन इन्दोः निष्प्रयोजनत्वं प्रतिपाद्यते। अर्थाद् मुखचन्द्रसत्त्वे प्रसिद्धेन्दुः निष्प्रयोजनमेव। अत्र प्रसिद्धचन्द्रान्मुखचन्द्रस्य भेदो विवक्षितः। अतोऽत्र ताद्रूप्यरूपकम्। ताद्रूप्यं च लक्षणायाः फलम्।

एवम्—

किं चन्द्रस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किं
वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम्।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते
दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे[1]॥

इति पद्ये 'वक्त्रेन्दौ सति यदपरः शीतांशुरुज्जृम्भते' इति प्रतिपादनात् प्रसिद्धचन्द्रस्याभेदो मुखे न प्रतीयते। अतः 'वक्त्रेन्दौ' इत्यत्र इन्दुशब्दस्य तत्सदृशे लक्षणाऽवश्यं कल्पनीया, तत्फलीभूतचन्द्रत्वसमनियतगुणवत्वरूपताद्रूप्यप्रतिपत्तये।

अत एव भोजराजेन—

यदोपमानशब्दानां गौणवृत्तिव्यपाश्रयात्।
उपमेये भवेद् वृत्तिस्तदा तद्रूपकं विदुः[2]॥

इति रूपकलक्षणमुक्तम्। लक्षणमिदं—

वापी कापि स्फुरति गगने तत्परं सूक्ष्मपद्या,
सोपानालीमधिगतवती काञ्चनीमैन्द्रनीली।
अग्रे शैलौ सुकृतिसुगमौ चन्दनच्छन्नदेशौ
तत्रत्यानां सुलभममृतं सन्निधानात् सुधांशोः[3]।

इत्याद्यतिशयोक्तावतिव्याप्तम्।

अत्र मध्यात् प्रभृतिमुखपर्यन्तानां नायिकाया अङ्गानां वर्णनम्। अत्र गगन-वापी-सूक्ष्मपद्या-सोपानाली-शैल-अमृत-सुधांशुभिरुपमानवाचकैः शब्दैः क्रमशः मध्य-नाभि-रोमावली-

---

१. कुवलयानन्दे रूपकाल०।
२. सरस्वतीकण्ठाभरणे।
३. कुवलयानन्देऽतिशयोक्तौ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

त्रिवली-कुच-अधररस-वदनप्रभृतय उपमेया निगीर्णाः सन्ति । अतोऽत्र गौणसाध्यवसानलक्षणा तन्मूला चातिशयोक्तिः । अत्राप्युपमानशब्दानां गौणवृत्त्योपमेये वृत्तेरिति न शङ्क्यम् । लक्षणे उपमानोपमेयोभयशब्दोपात्तत्वादुपमानोपमेययोर्द्वयोः शब्दतः पृथगुपात्तत्वे सति यत्र गौणवृत्त्योपमानशब्दस्योपमेये वृत्तिस्तत्र रूपकमिति तत्तात्पर्यात् । अतिशयोक्तौ चोपमेयानां निगीर्णात् ।

एवम् 'द्वौ चन्द्रौ जगतो राजन् स दिवि त्वं महीतले'[1] इत्यत्रापि राज्ञः प्रसिद्धचन्द्राभेदप्रतिपत्तिर्नैव सम्भवतीति चन्द्रपदस्य लक्षणा स्वीकार्यैव ।

यद्यपि—

चन्द्रज्योत्स्नाविशदपुलिने सैकतेऽस्मिन् सरय्वा
वादद्यूतं चिरतरमभूत् सिद्धयूनोः कयोश्चित् ।
एको वक्ति प्रथमनिहतं कैटभं कंसमन्य-
स्तत्त्वं स त्वं कथय भगवन् को हतस्तत्र पूर्वम्[2] ॥

इत्यत्र स त्वमित्युक्त्या वर्णनीये राजनि कंसकैटभयोर्हन्तुर्नारायणस्याभेदः प्रतीयते । तस्य चाभेदस्य संसर्गविधयैव प्रतिपत्तेर्लक्षणाया अनावश्यकत्वमुपपादयितुं शक्यते, तथापि ताद्रूप्यरूपके 'वक्त्रेन्दौ तव सत्ययं यदपरः' इत्यादौ लक्षणां विनाऽनिर्वाहात् विषयविषयिणोस्ताद्रूप्यप्रतिपत्तावेव रूपकम्, नाभेदप्रतिपत्ताविति वक्तुं न शक्यते, लक्ष्यपर्यालोचनयोभयविधरूपकोपलम्भात् । अत एव पण्डितराजः, आरोपपदार्थं निर्दिशन् 'विषयविषयिणोः पृथङ्निर्दिष्टयोरभेद आरोपः[3]' इत्याह । गौणसारोपलक्षणैव रूपकालङ्कारस्य बीजमिति रूपके नाभेदप्रतीतिरिति वक्तुं न शक्यते ।

दीक्षितोऽपि 'विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत्' इति लक्षयाञ्चक्रे । एवमुपमानतावच्छेदकरूपेणाभेदमाने एवाभेदरूपकम्, कार्यकारित्वादिरूपेणाभेदभाने तु ताद्रूप्यरूपकमिति स्वीकारात् ।

एवं प्राचीनानां मते रूपके सारोपलक्षणैव मूलम् । नव्यानां मते ताद्रूप्यरूपके लक्षणा । अभेदरूपके संसर्गमर्यादयैवाभेदप्रतिपत्तिः । परमेकत्र लक्षणास्वीकारेऽभेदरूपकेऽपि स्वीकर्तव्येति प्राचीनसरणिः ।

यत्—ताद्रूप्यरूपके लक्षणा अप्पय्यदीक्षितस्याभिप्रायोऽयं भाति स्यान्नाम । परमभेदरूपके तु वाक्यार्थ( संसर्ग )विधयैवाभेदप्रतिपत्तिः । अभेदस्य संसर्गविधया भाने नीलो घट इतिवत् चमत्काराभावान्न रूपकमिति न शङ्क्यम् । नीलो घट इत्यादौ नीलपदार्थस्य घटपदार्थस्य चैक्याद्वस्तुतोऽभेदोऽतश्चमत्काराभावः । परं पृथगुपात्तयोरुपमानोपमेययोर्वस्तुतो भिन्नपदार्थयोरधिकगुणस्योपमानस्योपमेये आहार्यभेद आरोप्यते । बाधकालिकमिच्छाजन्यं ज्ञानमाहार्यपदार्थः । सा चेच्छा चमत्कारिणि विषये एव जायते, नाचमत्कारिणीति तत्र चमत्कार-

---

१. चित्रमीमांसायां रूपकाल० ।
२. कु० न० रू० अ० ।
३. र० ग० द्वि० आ० ल० नि० ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

प्रतीतेः रूपकसिद्धौ बाधकाभावात् । प्रत्यक्षजन्यमेव ज्ञानमाहार्यं न शाब्दमिति नियमस्यास्वीकारात् । अतिशयोक्त्यादिष्वलङ्कारेषु आहार्याभेदस्य बोधस्यानुभवात् । साधर्म्यप्रयोज्याहार्याभेदबोधायैव वक्त्रा सामानाधिकरण्येन प्रयोगः कृतः । 'यद्यनुष्णो भवेद् वह्निः' इत्यादावपि यथा वह्नेरनुष्णत्वम्, जलस्य चाशीतत्वमसम्भविनी, तथा सत्यसन्धस्य रामस्यासत्यवक्तृत्वमप्यसम्भवि' इति असम्भवत्वरूपसाधर्म्यप्रयोज्याभेदारोपस्तत्रेति । 'मुखं यदि चन्द्रः स्यात्तदा भूम्यवस्थितं न स्याद्' इत्यादौ भूम्यवस्थितत्वस्य मुखे सत्त्वात् चन्द्रतदभावात् साधर्म्याभावेऽपि प्रसिद्धतयानुपात्तमेव मनोज्ञत्वादिसाधर्म्यं पुरस्कृत्याभेदप्रतिपादनात् ।

वस्तुतः पण्डितराजस्याप्यस्मिन् विषये दीक्षितमतखण्डने न तात्पर्यम् । केवलं स्वप्रखरप्रतिभया स दीक्षितेन कवलीकृतं प्राचीनमतं समर्थयन्निव लक्ष्यते ।

अत एव यथाऽन्यत्र दीक्षितमतं खण्डयन् 'अप्पयदीक्षितस्तु' 'द्रविणपुङ्गवः' 'कस्यचिद् दीर्घश्रवसो द्रविणस्य' इत्यादिशब्दान् स प्रयुङ्क्ते न तथाऽत्र । प्रत्युत सबहुमानं 'नव्यास्तु' इति बहुवचनान्तं पदं प्रयुङ्क्ते । एतावता तत्र स्वाभिमतमपि सूचयति ।

अत एव रूपकालङ्कारस्य शाब्दबोधनिरूपणे प्राचीनाभिमतं शाब्दबोधं प्रदर्श्य पुनर्नव्यास्त्वित्यनेन[1] दीक्षितानुमतमपि शाब्दबोधप्रकारं निरूपयामास । आह स्म च मुखे चन्द्राभिन्नत्वज्ञानस्य फलं चन्द्रत्वप्रतिपत्तिरिति ।

अत एव—

> कृपया सुधया सिञ्च हरे मां तापमूर्च्छितम् ।
> जगज्जीवन तेनाऽहं जीविष्यामि न संशयः[2] ॥

इत्यत्र संसर्गमर्यादयाऽभेदस्य भाने कृपायाः सुधाऽभिन्नत्वेन बोधात् कृपाकरणकसेक उपपद्यते । स च जीवने हेतुरित्यवोचदिति ।

अग्रे चाह स्म-तदिदं रूपकं विषयविषयिणोः सामानाधिकरण्ये अपदार्थतया संसर्गः । यथा 'बुद्धिर्दीपकला'[3] इत्यादाविति ।

इत्थं दीक्षितमतमपि प्रौढ्या समर्थयामास पण्डितेन्द्रो जगन्नाथः । राजचूडामणिदीक्षितस्तु[4] दीक्षितमतं खण्डयन् पलायमान इव प्रतिभाति । तथा हि 'मुखं चन्द्रः' इत्यत्र चन्द्रपदस्य चन्द्रसदृशे लक्षणायां सादृश्यस्य शब्दोपात्तत्वेनात्रोपमा स्यादित्याक्षिप्य 'उपमानवाचकपदादन्येन पदेन सादृश्यप्रतिपादन एवोपमाङ्गीकारात्' इत्याह ।

परमप्पयदीक्षितेनाक्षिप्ते 'पादाम्बुजम्' इत्यत्र कः समाधिः, अत्र तूपमानवाचकपदेनैव सादृश्यप्रतिपादनम्, अत्र कथमुपमेति शङ्कां तत्समाधानञ्च दूरतः परिहृत्य पद्माक्षीत्यत्र[5] बहुव्रीहिस्थले पद्मे इव अक्षिणी यस्या सेति विग्रहे 'सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च' इति वार्त्तिकेन समासे इवेत्यस्य लोपे च लुप्तस्येवादेः सादृश्यप्रत्यायकत्वम्, नोपमानवाचकपदस्येति समादधे ।

---

१. रसगङ्गाधरे द्वि० आ० ।  २. तत्रैव ।  ३. तत्रैव ।
४. का० द० द्वि० उ० ६५ तमे पृ० ।  ५. तत्रैव ।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

एवं साक्षाच्चन्द्र एवेदं मुखमित्यत्र[1] साक्षादेवकारपदयोरुपादानेऽपि ताद्रूप्यप्रतीतिमेव मेने, नाभेदप्रतिपत्तिमिति तत् प्रौढिवादितामात्रम् । तथाहि—

'तत्त्वं स त्वं कथय भगवन् को हृतस्तत्र पूर्वम्'

इत्यत्र राजनि नारायणाभेदप्रतिपत्तिमन्तरा 'स त्वं तत्त्वं कथय'इत्युक्तेः का उपपत्तिरुपजायते ?

अतो रूपके ताद्रूप्यमेवातिशयोक्तावभेद एवेति दुराग्रहो न कर्तव्य इति । अन्यथा— 'हृत्पङ्कजानि भजतां [2]प्रतिबोधयन्ति' इत्यादौ प्रसिद्धज्योत्स्नातो नखचन्द्रज्योत्स्नाया वैलक्षण्यादभेदप्रतिपत्त्यभावेऽतिशयोक्तिर्न स्यादिति ।

एवं यथा यथा विविच्यतेऽत्र दीक्षितमतं समीचीनमेव प्रतिभाति, तथापि निर्दुष्टमुपपत्तिमत् प्राचीनमतमपि नोपेक्ष्यमिति शम् ।

---

१. का० द० ६७ तमे पृष्ठे ( का० द० वाणीविलास प्रेस ) ।
२. वृत्तिवार्त्तिके द्वि० प० ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# आदिकवेराद्यपद्यस्यार्थविषयकं गवेषणम्

श्रीशशिधरशर्मा, वाचस्पतिः

प्राध्यापकः, पञ्जाबविश्वविद्यालये

अकर्दमप्रसन्नतमसलिलधारिण्याः कलिकरालसन्तमसहारिण्यास्तमसायास्तीरे विचरन्नभ्यास एव स्वैरं विहरतः क्रौञ्चमिथुनस्य मध्यात् पुंक्रौञ्चं निषूदयति निषादे भगवतो वाल्मीकेः कारुण्यं वाण्यात्मना प्रावर्तिष्ट किल--

मा निषाद प्रतिष्ठां त्वमगमः शाश्वती समा ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्[1] ॥

तथा चैतदवतरणिकायां स एव तत्रभवान्--

तस्मात्तु मिथुनादेकं पुमांसं पापनिश्चयः ।
जघान वैरनिलयो निषादस्तस्य पश्यतः[2] ॥
तथा तु तं द्विजं दृष्ट्वा निषादेन निपातितम् ।
ऋषेर्धर्मात्मनस्तस्य कारुण्यं समपद्यत[3] ॥
ततः करुणवेदित्वादधर्मोऽयमिति द्विजः ।
निशाम्य रुदतीं क्रौञ्चीमिदं वचनमब्रवीत्[4] ॥ इति ।

एतत् ( मा निषादेत्यादि ) पद्यं व्याचक्षाणः शताब्द्यां मण्डितभरतभूमण्डलः श्रीमान् महेश्वरतीर्थो व्याजहार—क्रौञ्चहन्तृप्रत्यक्षदृश्यमानशापरूपोऽर्थस्तु स्पष्ट एव—मा लक्ष्मीर्निषीदत्यस्मिन्निति मा निषादः, तत्सम्बोधनम् । हे मानिषादविष्णो ! परमाद्धेतोः क्रौञ्चमिथुनात् = रावणमन्दोदरीमिथुनाद् एकं काममोहितं रावणम् अवधीः, हतवानसि । तस्मात्—शाश्वतीः समाः, अनेकसंवत्सरान् । अत्यन्तसंयोगे द्वितीया । प्रतिष्ठाम्=अखण्डितैश्वर्यानन्दावाप्तिम्, अगमः--प्राप्नुहि ।

अनेनात्र "अर्थतः शब्दतो वापि मनाक्काव्यार्थसूचनम्" इत्युक्ते रामकृतरावणवधरूपः काव्यार्थः । काव्यादाववश्यकर्तव्याशीर्वादश्च सूचित इत्यवगन्तव्यम्[5] ।

गोविन्दराजस्य रामायणभूषणाख्यायाः व्याख्याया स्वीयमेव महत्त्वम् । व्याख्याकारः स्वयमेतदीयान् विशेषानशेषं समाजहार—

वैयर्थ्यं पुनरुक्ततामनुचितारम्भं विरोधं मिथोऽ-
साधुत्वञ्च पदप्रबन्धरचनावाक्येषु निःशेषयन् ।
स्वारस्यं च पदे पदे प्रकटयन् रामायणस्य स्वयं
व्याख्यामेष तनोति सज्जनमुदे गोविन्दराजाह्वयः[6] ॥

---

१. श्रीमद्वाल्मीकिरामायणं सटिप्पणं व्याख्याचतुष्कम्, वेङ्कटेश्वरमुद्रणालयप्रकाशितम् १।२।१५, संवत् १९९२, पृ० ७० ।
२. तदेव १-२-१० ।
३. तदेव १-२-१२ ।
४. उक्तमेव १-२-१४ ।
५. वाल्मीकिरामायणे गोविन्दराजीया, उक्तसंस्करणे, पृ० ७८ ।
६. उपक्रमश्लोकः ४ ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अपि च--

क्वचित् पदार्थं क्वचिदन्वयार्थं क्वचित् पदच्छेदसमर्थनानि ।
क्वचित् क्वचिद् गाढनिगूढभावं वक्ष्ये यथापेक्षमपेक्षणीयम्[1] ।।

स चेत्थमत्राऽटीकिष्ट--

चतुर्मुखप्रसादेन वाल्मीकिमुखात् प्रथमोदितोऽयं श्लोकः केवलं शापपरो न भवितुमर्हतीति भगवन्मङ्गलानुशासनपरतया मङ्गलाचरणपरोऽयं श्लोक इति पूर्वाचार्या वर्णयन्ति इत्यादिना महेश्वरतीर्थमेवानुजगाम ।

क्रौञ्चमिथुनादित्यादे राक्षसमिथुनाद् रावणमन्दोदरीरूपात् कामेन मन्मथेन मोहितं सीतापहर्तारमेकं रावणमवधीरिति तदीया व्याख्या । अग्रे च--

"एवमनेन श्लोकेनेष्टदेवतास्मरणरूपं मङ्गलमाचरितम्, काव्यार्थसूचनं कैश्चिन्नान्यामेव निरूप्यते" इति वचनादस्मिन्नेव श्लोके वक्ष्यमाणकाव्यार्थः संक्षेपेण दर्शितः । तथा हि--'मा निषाद' इत्यनेन सीतापरिणयपर्यवसायिनी बालकाण्डकथोद्भाविता । 'प्रतिष्ठामगमः' इत्यनेन पितृवचनपरिपालनप्रतिष्ठाभिधायिन्ययोध्याकाण्डकथा विदिता । 'शाश्वतीः समाः' इत्यनेन ऋषिगणविषयकप्रतिज्ञानिर्वहणेन रामस्य प्रतिष्ठानुवृत्तिमभिदधत्यारण्यकाण्डकथा सूचिता । 'क्रुञ्चगतिकौटिल्याल्पीभावयोः' इत्यस्माद्धातोः क्रुञ्चेव क्रौञ्चः, तथा च--क्रौञ्चयोः कुटिलयोः तिरश्चोस्ताराबलिनोर्मिथुनादेकं बालिनमवधीरिति किष्किन्धाकाण्डकथाभिहिता । क्रौञ्चौ अल्पीभूतौ कृशाविति यावत् । तयोरन्योन्यविरहक्लेशकृशीयसोः सीतारामयोरेकमवयवं सीतारूपमवधीः, भृशं पीडितवानसीति सीताविरहदुःखातिशयवर्णनपरा सुन्दरकाण्डकथा बोधिता ।

क्रौञ्चौ कुटिलौ राक्षसौ, तन्मिथुनादेकं काममोहितं रावणरूपमवधीरिति युद्धकाण्डकथा सूचिता । दण्डकारण्यवासिऋषिपत्नीदर्शनाभिलापमोहितं सीतापीडाभिघातेन उत्तरकाण्डार्थोऽपि सूचित इति दिशा कृत्स्नं रामायणार्थं पद्येऽस्मिन्नेवाभान्त्सीत्[2] ।

कतककृत्तु "नितरां सदेवर्षिगणं त्रैलोक्यं सादयति पीडयति इति निषादः, तस्य सम्बुद्धौ हे निषाद ! रावण, यद्यस्मात् क्रौञ्चमिथुनात्, अल्पीभावार्थकक्रुञ्चेः पचाद्यच् क्रुञ्चम्, ततः स्वार्थिकोऽण् क्रौञ्चम् । राज्यवनवासादिदुःखेनाल्पीभूतं परमकार्श्यं गतं यन्मिथुनम्, सीतारामरूपं यस्मादवधीः=दुःखाभ्यधिकपीडां प्रापितवानसि, तस्मात् त्वं प्रतिष्ठां या लङ्कापुरे पुत्रपौत्रभृत्यगणवैशिष्ट्येन ब्रह्मणः प्रतिष्ठा दत्ता, तामतः परं मागम इति काव्यार्थसूचनम् । त्रैलोक्यस्य परममङ्गलरूपं चेदं सत्यं सरस्वत्या पुरस्तादाविर्भावितमित्याह" इत्याह ।[3]

व्याख्याकारश्च--शापार्थोल्लेखपुरस्सरम् ( मा गमः ) अत्र भूते लङ् । यद्वा हे निषाद ! त्वं शाश्वतीः समाः प्रतिष्ठां मागमः, न गतोऽसि इति काकुः । भार्यासहित एकत्र निवासे स्थित्वा सांसारिकसुखं नानुभूतवानित्यर्थः । यद्यस्मात् क्रौञ्चमिथुनादेकं काममोहितमवधीः । एवं

---

१. उपक्रमश्लोकः ७ । २. उक्तसंस्करणे, पृ० ७८ ।

२. वाल्मीकीये रामायणे वेङ्कटेश्वरीयसंस्करणे, पृ० ७८–८० ।

४. गुजरातीप्रिन्टिंगप्रेससमुद्रिते वाल्मीकिरामायणे पृ० ५३ ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

दुःसहजीवनादपि स्वहननमेव श्रेय इति गात्रः। अयं वाल्मीकिबुद्धिपूर्वकवाक्यार्थः, ईश्वरानुग्रह-प्रवृत्तश्लोकार्थस्तु व्यङ्ग्यः। मानिषाद, लक्ष्मीनिवास! शाश्वतीः समाः, अनन्तकालं प्रतिष्ठामगमः, विजयीभवेत्यर्थः।

यद्यस्मात् क्रौञ्चमिथुनात्। यद्यपि खगगमनद्वीपेषु क्रौञ्चशब्दो वर्तते, तथापि 'काममोहित' पदसमभिव्याहारबलप्राप्तेन काममोहितत्वगुणेन 'क्रुञ्चगतिकौटिल्याल्पीभावयोः' इति कुटिलगतिवाचकत्वेन केनचिद् गुणयोगेन राक्षसपरः। एकं पुमांसम् 'रावणमवधीः' इति। एतेन वक्ष्यमाणशास्त्रप्रतिपाद्यप्रधानार्थाक्षेपः।[1]

अथ कथमीदृशविलक्षणार्थलाभः, कथञ्च सम्भव इत्यत्र स एवाह—'काव्यं रामायणं कृत्स्नम्' इति कृत्स्नप्रबन्धस्य व्यङ्ग्यप्रधानत्वात्। प्रतिपाद्यानां नानाविधव्यङ्ग्यार्थानां काव्यार्थ-बीजभूते श्लोके सूच्यत्वात्। मा निषादेति शब्दशक्त्युद्भवध्वनिः। मा निषादेति परिवृत्य सोऽयं शब्दो न निषादेति निषाद मेति वा प्रयोगे व्यङ्ग्यस्याप्रतीतेः।

> अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
> संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ॥

इति लक्षणात्। काममोहितमिति रावणस्य कामनाप्रतीतेरर्थशक्त्युद्भवध्वनिः। क्रौञ्चपदेन कुटिलगतित्वसम्बन्धेन रावणलक्षणतया तस्य मायावादित्वदुर्जयत्वादिप्रयोजन-प्रतीतेर्लक्षणामूलव्यङ्ग्यभेदः। शब्दार्थोभयानतिरेकादुभयशक्त्युद्भवध्वनिश्च सूचितः। अर्थ-द्वयवत्तया श्लेषालङ्कारः। तेन वस्त्वलङ्कारध्वनिरूपानेकध्वनिभेदाः।

संलक्ष्यक्रमव्यङ्ग्यभेदास्तु सूच्यन्ते—मा निषादेति-नायकनायिकाप्रतीतेः शृङ्गाररसः। काममोहितमिति परनारीविषयतया रसाभासध्वनिः। शोकरूपप्रबन्धव्यङ्ग्यतया करुणरसः। अवधीरिति वीररौद्रभयानकाः। कान्ताश्लिष्टक्रौञ्चहिंसादर्शनरूपेण बीभत्साद्भुतहास्यरसाः। ऋषेर्निर्वेदप्रतीतिरपि[2] इति।

अथ तिलककृदपि निषादपदं श्रीरामं क्रौञ्चपदञ्च रावणं वक्तुं प्रवृत्तमभिप्रैति। नारदात् स्वगुणश्रवणानन्तरं मुनेः स्ववर्णनेच्छां ज्ञात्वा स्वचारित्र्यस्य च करुणारसमयत्वेन तत्प्रधानकाव्येऽति-करुणचित्तस्यैवाधिकाराद् ऋषेः करुणचित्तत्वजिज्ञासयैव पूर्वं भृगुदत्तशापस्य पुनरुक्तत्वकरणेन दार्ढ्यसम्पादनाय मुनेरीक्षणाय च भगवान् राम एव निषादरूपेण पश्यतो मुनेः पुरतस्तमनाहत्य क्रौञ्चं रक्षोविशेषरूपं जघान। ततस्तदिच्छावशादन्तर्यामितया तथा प्रेरणाच्च महानधर्मोऽय-मनेन कृत इति रुषा पापमते निषाद, यत्त्वं काममोहितं क्रौञ्चमिथुनान्मिथुनीभूतात् क्रौञ्चयुगाद् विभक्तमेकमवधीः, तत्त्वमपि शाश्वतीः समाः आयुःशेषभूतानि बहूनि वर्षाणि प्रतिष्ठां स्वस्त्री-साहित्येन स्थितिमिह लोके मा गमो मा प्राप्नुहि, किन्त्वत्यल्पकालमेव तथावास एकमिथुनीभाव-पर्यन्तमिति शप्तवान् मुनिः।

तस्य रक्षोरूपत्वं त्वेतदुत्तरम्—ब्रह्मणः सकाशात् सकलरामवृत्तान्तज्ञानवरलाभोत्तरकाल-वृत्ते तस्मात् तु मिथुनादेकमिति श्लोके वैरनिलय इति विशेषणेन सूचितम्। रक्षःस्वेव तस्य

---

१. वेङ्कटेश्वरीयोक्तसंस्करणे पृ० ८०।

२. श्रीमद्वाल्मीकिरामायणस्य वेङ्कटेश्वरीय उक्तसंस्करणे पृ० ८०।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

लोकदृष्ट्या वैरनिलयत्वप्रसिद्धेः। निषादस्यापि प्राणीषु न वैरम्, किन्त्वाहारार्थमेव तद्धननमिति प्रसिद्धेश्च'[1] इति। ततः स सीतावियोगप्रयोजकशापकदम्बकं पुराणगणादुद्धरति।[2]

रामायणशिरोमणिकारस्तु त्वगम इत्यत्र त्वमः गमः इति पदे विच्छिद्यत्वेन=आत्मभिन्नेन रागादिना मः बन्धनं यस्य, इति निषादविशेषणतया व्याचक्षाणः काण्डसप्तकार्थसार्धं पद्यादस्मात् ससंरम्भं वर्णयति स्म। तत्र विस्तरभयात् काण्डद्वयार्थ एवात्र प्रदर्श्यते, तथाहि—तत्रत्यहिंसानिवृत्तिफलकयत्नस्यार्थमुक्त्वा हिंसावलोकनजन्यशोकनिर्वतकप्रतिपिपादयिषितकाण्डसप्तकस्वाभिप्रेतसंक्षिप्तार्थ उच्यते। हे मानिषाद! मानिनां गर्वविशिष्टानां सः श्रेयः परशुरामः, तमासमन्ताद् भावेन द्यति खण्डयति वैष्णवधनुः सज्जीकरणादिना तद्गर्वं निवर्तयतीति मानिषादः, तत्सम्बोधने हे मानिषाद! परशुरामाभिमाननिवर्तक! त्वं शाश्वतीसमाः प्रतिष्ठामगमः प्राप्स्यसि। यद्यस्मात् क्रौञ्चवन्मिथुनीभूताः क्रौञ्चमिथुना जनकधनुर्यागसमागता अविवेकिनो भूपाः, तेषु अतति व्याप्नोतीति क्रौञ्चमिथुनात्।

तमेकं काममोहितमविवेकीभूय काममोहितत्वम्, अवधीः न्यवर्तयः। 'पः कीर्तितो बुधैः श्रेष्ठे तथा गम्भीरलोचने' इत्येकाक्षरकोशात् पशब्दः श्रेष्ठपरः। 'आशंसायां भूतवच्च' (३।३।१३२) इति सूत्रविहितोऽत्र लुङ्। काममोहितमिति भावनिष्ठान्तरम्। इति बालकाण्डकथा सूचिता[3]। यद्वा हे षाद? षं परोक्षत्वमिन्द्रियागोचरत्वमासमन्ताद् द्यति खण्डयति इति षादः, तत्सम्बोधनं हे षादेति। स्वावाङ्मनसगोचरत्वं परित्यज्य मम दृष्टिपथं गतेत्यर्थः। किञ्च, पः श्रेष्ठ आदौ ग्रहणकर्ता यस्य स एव स इति कर्मधारयः। तत्सम्बोधने हे षाद! ग्रहणकर्तृश्रेष्ठ! स्वीकृता परित्यागधर्मविशिष्टेत्यर्थः। यद्यस्मात्क्रौञ्चं सीताहरणहेतोः परस्परं कुटिलतां प्राप्तं यन्मिथुनं मन्दोदरीरावणयुग्मं तस्माद् विभज्य एकं रक्षःप्रधानम्, काममोहितं रघुनाथेच्छया मोहितम्। अयं मम स्वामीति विवेकराहित्यविशिष्टं रावणं त्वमवधीः। मादेव सम्पत्तिः त्वया आनि=आजीवि प्राप्तेत्यर्थः। अत एव शाश्वतोः समाः प्रतिष्ठामिह लोकेऽपि महाराजरूपत्वं परममाहात्म्यमगमः प्राप्स्यसि। "उपसर्गे परोक्षे च पकारः परिकीर्तितः। पः कीर्तितो बुधैः श्रेष्ठे" इति कोशैः। इति युद्धकाण्डकथासूचनम्[4] इति।

एषु टीकाकृत्सु सुकृतिषु महेश्वरतीर्थः सप्तदश्यां ख्रैस्तव्यां शताब्द्यां भुवस्तलमलञ्चकार। तिरुपतिवासिनो वेङ्कटेश्वरोपासिनः श्रीमद्गोविन्दराजस्य कालः किलाष्टादश्याः प्रारम्भः। तदनु जातः कतकक्रन्माधवयोगी। तस्याः पूर्वार्ध एव महावैयाकरणनागेशभापिततया प्रसिद्धस्यापि तिलकस्य कर्ता शृङ्गवेरपुरेश्वरो रामवर्मा। सोऽष्टादस्या उत्तरार्धेऽजायत। १८६५ तमक्रैस्तवाब्दे च कलितो रामायणशिरोमणिविद्वन्मौलिमणिभ्यां वंशीधरशिवसहायाभ्यामित्येष एषां कालक्रमः।[5]

---

१. रामायणस्य वेङ्कटेश्वरीयसंस्करणे पृ० ५५।
२. संस्कृत साहित्य का इतिहास, काव्यखण्ड—बलदेवोपाध्यायः (१९७३, स०, पृ० २७-२८)
३. वाल्मीकिरामायणे गुजरातीप्रिण्टिगप्रेसप्रकाशिते पृ० ५४।
४. तत्रैव पृष्ठम् ५५।
५. संस्कृत साहित्य का इतिहास, काव्यखण्ड, बलदेवोपाध्यायः ( १९७३। पृ० २७-२८ )।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

तत्र सर्ववेद्ये प्रसिद्धे शापार्थे मा निषादेति भिन्ने पदे, मा इति प्रतिषेधेऽव्ययम्। निषादेति च निहन्तुः सम्बोधनवचनम्। 'मा निषाद' इत्यस्य समासेनैकपद्यम्। क्रौञ्चपदस्य च राक्षसपरत्वं लक्ष्यमाणगुणयोगादिति तु सर्वेषामेव टीकाकाराणां व्याहारः।

इदमत्र कम्रहृदयेषु नम्रं विनिवेद्यं यत् सर्वे व्याख्यातृवरा एते निषादशब्दस्य निवासमर्थं कल्पयन्त्यधिकरणात्, तच्चायुक्तम्, तत्र तस्यासामर्थ्यात्। इत्थं हि—तदीयान् यावतोऽर्थान् सङ्गृह्णाति कोशकारः—

निषादः स्वरभेदेऽपि चाण्डाले धीवरान्तरे[1]।

निषीदत्यस्मिन् मन इति स्वरार्थेऽर्थान्तरयोश्च निषीदत्यस्मिन् पापमिति व्युत्पत्या 'षद्लृ विशरणगत्यवसादनेषु' इति धातोः [2]हलश्चेति घञि [3]सदिरप्रतेरिति षः। सङ्गीतशास्त्रवर्जं चाण्डालार्थकत्वस्यैव भूयसा प्रसिद्धिः। यदाहामरः—

चाण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमाः।
निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः[4]॥ इति।

वेदे चाऽमुमेवार्थमनुमन्यते तत्रभवान् भगवान् यास्कः—'निषादः कस्मात्, निषण्णमस्मिन् पापकमिति नैरुक्ताः'[5]। एवञ्चोक्तव्याख्याने न केवलमनुशासनविरोधः, अवाचकत्वमेव वा दोषः, एकपदत्वस्याश्रयणे मायां चाण्डाल इत्यर्थप्रतीतेरपि दुर्वारतया जुगुप्सारूपाश्लीलस्य सुतरां परिहर्तव्यस्याप्यापत्तेः।

क्रौञ्चपदस्यापि—'क्रौञ्चो द्वीपप्रभेदे स्यात् पक्षिपर्वतभेदयोः'[6]। इत्येतानर्थानाह कोशकारः। 'न च क्रौञ्चगतिकौटिल्याल्पीभावयोः' इति धात्वर्थानुगमाद् राक्षसेऽर्थेऽत्रपदस्यास्य प्रयोग इति वाच्यम्, अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तम्, योगात् रूढिर्बलीयसीति च तथाऽसम्भवात्।

क्रौञ्चानां गतेः कौटिल्यञ्च वक्रोड्डयनशीलता। एकान्तभिन्ना सा रक्षसां गतेः कौटिल्याद्व्यवहृतिवक्रिमात्मनः। तेन लक्ष्यमाणगुणयोगोऽपि न 'सिंहो माणवकः' इत्युक्ते हि यथा शौर्यक्रौर्यादिकस्य सिंहगतस्य सदृशः शौर्यक्रौर्यादिर्माणवकेऽवगम्यते, न तथा प्रकृते रक्षसि क्रौञ्चगतवक्रगतेर्योगः। एवञ्च लक्षणाश्रयणं न क्षोदक्षमम्।

क्रौञ्चमिथुनादित्यस्य राक्षसमिथुनाद् रावणमन्दोदरीरूपादित्यभिप्रायं वदतां कामेन मन्मथेन मोहितं सीतापहर्तारमेकं रावणमवधीरिति शिष्टानां पदानां व्याख्यानम्। तत्र कामपारवश्यात् क्रौञ्च्या सह विहरणपरायणस्य क्रौञ्चस्य तामेवावस्थामुपास्थापयत्—काममोहितमितिपदेनादिकविः। तत एव यद्यपि मृगखगादिवधेन शास्त्रे दोषदृष्टिः, यथाहि—कविकुलालङ्कारः सर्वतन्त्रस्वतन्त्रः श्रीहर्षः—

---

१. मेदिनी।
२. पाणिनिमुनेरष्टाध्यायी ३।३।१२१।
३. सैव ८।३।६६।
४. अमरकोशे मनुष्यवर्गः।
५. निरुक्ते नैघण्टुककाण्डम् ३।८।१।
६. मेदिनी।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अवल स्वकुलाशिनो झषान् निजनीडद्रुमपीडिनः खगान् ।
अनवद्यतृणार्दिनो मृगान् मृगयाऽघाय न भूभुजां घ्नताम्[1] ॥

तथापि रतिपरवशतादशायां तु तेषामपि वधोऽघावहः। तथा च तत्रभवान् गोविन्दराज एव सपूर्वोत्तरपक्षं पक्षमिमं प्रत्यष्ठापयत्—

ननु मृगपक्ष्यादिवधस्य व्याधकुलधर्मत्वात् कथमनपराधिनमेनम् ( निषादम् ) मुनिः शप्तुमर्हति ? वक्ष्यति राम एव बालिवधप्रस्तावे—

प्रमत्तानप्रमत्तान् वा नरा मांसार्थिनो भृशम् ।
वध्यन्ति विमुखांश्चापि न च दोषोऽत्र विद्यते ॥ इति ।

सत्यम्, तथापि रतिपरवशतादशायां तद्वधो दोष एवेति मुनेराशयः। सूचयति हि रतिपरवशतां काममोहितमिति पदेन । अत एव भारते पाण्डुं प्रति मुनिः—

अस्वर्ग्यमयशस्यं त्वमनुतिष्ठति भारत ।
को हि विद्वान् मृगं हन्यात् चरन्तं मैथुनं वने[2] ॥ इति ।

एवञ्च रतिपरवशस्य क्रौञ्चस्य विशसिता निषादः स्थाने आदिकवेः शापपात्रतां प्रापत् । यत्क्रौञ्चमिथुनादित्यत्र यदिति पूर्वार्धोपात्तार्थे हेतुवचनम् । काममोहितमिति वधानर्हतोपनयः। स चोद्धृतस्मृतिवचनानुगतः । काममोहितमित्यस्य सीताविषयककाममोहितत्वार्थकत्वे सीताविषयकत्वार्थं आक्षेपेणैव लभ्यः स्यात्, स चायुक्त एव । तदा च क्रौञ्चमात्रस्यैवोल्लेख्यता वधार्हतया भवेदित्यवतरणिकायाम्—

तस्मात्तु मिथुनादेकं पुमांसं पापनिश्चयः ।
जघान वैरनिलयो निषादस्तस्य पश्यतः[3] ॥

इत्यत्र निषादस्य पापनिश्चय इति वैरनिलय इति च विशेषणे सम्यगुपपद्येते । नहि भगवति निषादरूपेणास्थीयमाने विशेषणयोरनयोरुपपत्तिः । 'यातु गोविन्दराजस्य······' पापनिश्चयो निश्चितरावणपापः, वैरनिलयो हिरण्यकशिपुरावणशिशुपालरूपजन्मत्रयानुसारित्वात् सहजशात्रवः । निषीदन्त्यत्र सर्वाणि जगन्तीति निषादो विष्णुः पुमांसं रावणं जघानेति सन्दर्भयोजना[4], न सा हृदयङ्गमा, पापनिश्चयः, वैरनिलय इत्यनयोः पदयोर्निषादपरत्वेन सूपपद्यमानरूपमिति आक्षेपमृते निश्चितरावणपापः, हिरण्यकशिपुरावणशिशुपालरूपजन्मत्रयानुसारित्वात् सहजशात्रव, इत्यस्यार्थस्यासम्भवात् । न च पापनिश्चय इत्यस्य निश्चितरावणपाप इत्येषोऽर्थोऽञ्जसा सम्भवत्यपि । अत एव पूर्वत्रावतरणिकाव्याख्यायां स्वयं गोविन्दराज एव पापनिश्चयः, रतिसमयेऽपि हननकरणात् क्रूरनिश्चयः, वैरनिलयः सर्वजन्तुविषयसहजशात्रवयुक्तो निषाद इत्यर्थमाह[5] । अयं च सुतरां स्वारसिकः ।

---

१. नैषधचरितम् २–३ । २. वैङ्कटेश्वरीये संस्करणे पृ० ७८–७९ ।
३. वाल्मीकिरामायणम् १ । २ । १० । ४. तदेव गुजरातीप्रिण्टिङ्गप्रेसमुद्रिते पृष्ठाङ्काः ५६ ।
५. तदेव पृ० ५२ ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

यत्तु वैरनिलयपदस्वारस्येन प्रसिद्धनिषादेतरपरत्वं तिलककृतोक्तम्, तदपि नास्मदुक्ते-र्बाधकम्। रक्षःस्वेव तस्य लोकदृष्ट्या वैरनिलयत्वप्रसिद्धेरिति हि तत्र दत्ता युक्तिः परस्परा-श्रयग्रस्ता सति क्रौञ्चपदस्य रक्षःपरत्वे वैरनिलय इति रामं बोधयेत्। अनेन रामबोधने च क्रौञ्चपदं रक्षःपरमाश्रीयेतेति। न च भगवतोऽपि रक्षःसु वैरम् द्वेषदूषितत्वापत्तेः। लोकदृष्ट्या तयोक्तिरिति चेत् कथं निषादेऽपि तद्वारणम्। स्वयमेव तेन पापनिश्चयस्तद् हननरूप-पापनिश्चयः। अतएव वैरनिलयो निजानपकारिष्वपि प्राणिष्वकारणवैराश्रयः, इति पूर्वं व्याख्यानात्।[1]

प्राचस्कन्द पुराणयोगवाशिष्ठादौ समाने प्रसङ्गे रामस्य निषादत्वरूपणा सा खल्वेषां टीकाकृतां प्रभावादेवेति नव्या सरणिरितिहासविदाम्।

प्राचीनपद्धत्यापि च प्रकृते पद्ये निषादक्रौञ्चपदाभ्यां रामरावणयोर्ग्रहणाऽसम्भवात् मा पदैकपद्ये पूर्वोक्तरीत्याऽश्लीलदोषाश्लेषात्। तत एव च क्रौञ्चपदेन रावणग्रहणस्यापि दुर्वार-णात्। मिथुनपदसमभिव्याहारादपि तथा। मन्दोदरीसहितं रावणं हि मिथुनपदं गमयेत्—न च मन्दोदर्याः सङ्केतेनाऽत्र प्रयोजनं किमपि। न च मिथुनमध्ये काममोहितत्वात् पुंक्रौञ्चस्यैव हननं कृतं रावणरूपस्य न नारी क्रौञ्चस्य मन्दोदरीरूपस्येति विशेषो वाच्यः। मन्दोदर्याः काममोहितत्वा-भावाऽसिद्धेः। प्रत्युत तस्या विशिष्य काममोहितत्वम्। यत एवानुदशाननमरणविभीषणवरणं तदीयम्। सीताविषयकत्वं तु न काममोहितपदेन शक्यमुपादातुं प्रकरणा। सङ्गतेः—परिहरणी-याक्षेपकल्पनापत्तेश्चेत्युक्तपूर्वम्।

अतश्च शापपरक एवार्थोऽत्र स्वारसिकः, अर्थान्तराणि तु इष्टकल्पनामात्रमिति सिद्धम्। अत एव प्रकृतपद्ये स्वकृतार्थसमर्थनाय वैरनिलयः पापनिश्चय इत्यनयोः पदयोरर्थान्तरं वितन्वति परतः—

पापात्मना कृतं कष्टं वैरग्रहणबुद्धिना।
यस्तादृशं चारुरवं क्रौञ्चं हन्यादकारणात्[2]॥

इत्यत्र "वैरग्रहणबुद्धिना वैरेण क्रौञ्चग्रहणबुद्धिना पापात्मना पापस्वरूपेण व्याधेन कष्टं कुत्सितं कर्मकृतम्, कथमित्याह—य इति यो व्याधः तादृशं रतिलालसमित्यग्राह्यत्वोक्तिः। चारुरवं रम्यकूजितम्"—क्रौञ्चम्, अकारणम्-निष्कारणम्, हन्यात्-हन्तुं शक्नुयात् शकि लिङ् इत्येवं व्याचष्ट गोविन्दराजः। वैरं गृह्णाति सा चासौ बुद्धिस्तद्वता। कर्तरि ल्युट् बाहुलकात् निषादेति शेषः। कष्टं कृतं क्रौञ्चवधरूपं तपोनाशसम्पादकशापनिःसारणेन कष्टं कृतम्, मयेति शेषः। इति तिलकः। अत्रत्यो रामायणशिरोमणिस्तु न प्रसङ्गसङ्गतः। पापात्मना पापान्वेषणमनस्केन वैरग्रहणबुद्धिना वैरग्रहणे वैरकर्मसम्पादने बुद्धिर्यस्य तेन मया कष्टम् अकर्तव्यमित्यर्थः कृतं सम्पादितमिति वदन्[3]। पूर्वरीत्या पदयोर्द्वयोर्व्याधविशेषणत्व एवोपपत्तेः। ऋषिविशेषणत्वे

१. तत्रैव। २. वाल्मीकिरामायणम्—वेङ्कटेश्वरीये पृ० ८५। २।१।२८।

३. तदेव गुजरातीप्रिन्टिंगप्रेस मुद्रिते पृ० ५९।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

एतदीयोत्तरार्धानुपपत्तेश्च-भवतु । सर्वथापि भगवत्परत्वं पदयोस्तयोः केनापि नोररीकृतं व्याख्यात्रेति पूर्वत्रापि तस्यानुररीकर्तव्यतैवावसीयते । एक एवाऽत्र सर्वत्र प्रसङ्गो वितायमान इति निपुणमिदं निरूपणीयमभिरूपरूपैः । शापभिन्नार्थानाश्रयतां व्याख्याकृतां परस्परविरोधश्च ।

तथाहि—मानिषादेत्येकपदीकृत्य तस्य लक्ष्मीनिवासनार्थं क्रौञ्चमिथुनपदस्य च रावणमन्दोदरीरूपमर्थं गोविन्दराजः । कतककृत्तु सर्वत्रैव विपरीतं निषादपदस्य रावणमर्थं क्रौञ्चमिथुनपदाय च सीतारामरूपमर्थं प्राह । न केवलं परस्परविरोधः, स्ववचनविरोधोऽपि··· ···सप्तकाण्डीकथा सत्त्वप्रतिज्ञौ हि प्राज्ञौ शिरोमणिकारौ, मा निषादेत्यस्य परशुराममाननिवर्तकेत्यर्थं कृत्वा क्रौञ्चवन्मिथुनीभूताः क्रौञ्चमिथुनाजनकधनुर्यागसमागता अविवेकिनो भूपास्तेष्वतिव्याप्नोतीति व्याचक्षाणौ बालकाण्डपरतया, पाद स्वीकृताऽपरित्यागधर्मविशिष्टेत्यर्थः । यद्यस्मात् सीताहरणहेतोः परस्परं कुटिलतां प्राप्तं यन्मिथुनं मन्दोदरीरावणयुग्मं तस्माद्विभज्येत्याद्यर्थं युद्धकाण्डपरतयाऽऽविश्चक्रतुः[१] । गोविन्दराजश्च तदैव क्रौञ्चमिथुनादित्यस्य ववचन रावणमन्दोदर्योः मिथुनादिति परत्र च सीतारामयोः मिथुनादित्यर्थं विदधौ[२] । वस्तुतः शापातिरिक्तार्थो नादिकवेः पद्येऽस्मिन् शक्यो वक्तुं विवक्षित एतदव्यवहितोत्तरमेव—

तस्येत्थं ब्रुवतश्चिन्ता बभूव हृदि धीमतः ।<br>
शोकार्तेनास्य शकुनः किमिदं व्याहृतं मया[३] ॥

इत्युक्तेः । यदि च यथेमे तत्र भवन्तो भणन्ति टीकाकृतस्तथा रामायणसप्तकाण्डीपदार्थसूचनमत्रादिकविना कृतं तदाऽस्य शकुनेः शोकार्तेन व्याहृतमित्येतेषां पदानां का सङ्गतिः ? एतेनैतत्पद्यव्याख्यानेऽपि 'मया मुनिना शान्तेन तपस्विना शकुनिशोकपीडितेनेदमीदृशं क्रूरं तपोनाशकरं किं व्याहृतमिति वीक्षतोऽन्तर्यामिप्रेरणया निषादे सर्वतो महत्त्वसम्भावनया दृश्यमानक्रौञ्चे तद् वैपरीत्यसम्भावनयातिनिन्द्यमयशस्करं महापातकेभ्योऽप्यधिकं पापं वृत्तमिति चिन्ता बभूवेति[४] तिलकस्य प्रयत्नोऽप्यस्थाने एवेति स्पष्टं क्लिष्टकल्पनाविशिष्टम् । अन्यैर्व्याख्यातृभिरर्थान्तरचर्चाऽत्र व्यक्तप्रायैवेति वेद्यम् ।

किमः कुत्सार्थमवलम्ब्य कुत्सितमेतदुच्चारितम् । कुत्सितत्वं च ब्राह्मणानुचितव्याधनिःसारणसूचनत्वेनेति बोध्यमिति शिरोमणिः[५] अधिकपापं वृत्तमिति[६] तिलकश्च न रुच्यौ, पूर्वापरविरोधात् । एतदग्रे हि पठ्यते—

चिन्तयन् स महाप्राज्ञश्चकार मतिमान् मतिम् ।<br>
शिष्यं चैवाब्रवीद् वाक्यमिदं स मुनिपुङ्गवः ॥<br>
पादबद्धोऽक्षरबद्धस्तन्त्रीलयसमन्वितः ।<br>
शोकार्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा[७] ॥

---

१. वाल्मीकिरामायणम्, गुजरातीप्रिन्टिंगप्रेस प्रकाशिते ।१।२।१५। पृ० ५४।५५ ।<br>
२. तदेव पृ० ५५ । ३. वाल्मीकिरामायणम् २।२।१६ ।<br>
४. तदेव उक्त संस्करणे पृ० । ५६ । ५. तदेव । ६. तदेव ।<br>
७. वाल्मीकिरामायणम् २।१।१७-१८ ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

निषादकर्तृकक्रौञ्चवधोद्भूतात् शोकात् प्राचेतसस्य सहसा स्फुरिता या वाक् तस्या स्वरूपविषयिका उपपद्यतेतरां तदीया चिन्ता, तथा च तस्य वाल्मीकेर्हृदि अस्य शकुनेरेतत्पक्षिनिमित्तं शोकार्तेन मया व्याहृतमिदं वाक्यं किं किंरूपमिति चिन्ता बभूवेति गोविन्दराजस्य स्वारसिकी व्याख्या[१]। तस्याश्च वाचः पादाक्षरबन्धलक्षणतन्त्रीलयसमन्वितत्वाच्च। श्लोके भवतु श्लोकलक्षणलक्षितत्वात् श्लोकशब्दवाच्यो भवतु नान्यथा श्लोकादन्यः केवलपदसन्दोहो न भवतु इति मतिं चकारेति पूर्वेणान्वय इति सैव[२]। अत्र श्लोको यशोरूपो भवतु, अन्यथा श्लोको यशोरूपो माभूदिति तिलकस्तु न सङ्गतो भाति। पादबद्धोऽक्षरबद्ध इत्यादिलिङ्गैः श्लोकशब्दस्य पद्यार्थं एव व्यवस्थापयत्। अग्रे च ---

> श्लोक एवास्त्वयं बद्धो नात्र कार्या विचारणा।
> मच्छन्दादेव ते ब्रह्मन् प्रवृत्तेयं सरस्वती[३]॥ इति।

श्लोकस्य बन्ध इति प्रयुञ्जते वाक्यविदः, न तु यशोबन्ध इति। प्रवृत्तेयं सरस्वतीति च लिङ्गान्तरम्। कथं पद्यार्थकत्वं प्रसिद्धतमं परिहाय यशोऽर्थकत्वग्रहे न्यायः।

> पापात्मना कृतं कष्टं वैरग्रहणबुद्धिना।
> यत्ताद्दशं चारुरवं क्रौञ्चं हन्यादकारणात्[४]॥

इत्यत्र 'चारुरवम्' इति क्रौञ्चं विशिशेष विशेषविदादिकविः। विशेषणेनानेन रतिकूजितपूजितावस्था क्रौञ्चस्योपनीयते। क्रौञ्चपदेन रावणमुपादित्सतां सतां का नामैतस्य विशेषणस्य गतिः? का च तद्विशेषणकुक्षिगतस्य 'चारु' पदस्य। अर्हायां हि तस्य प्रयोगः। न गर्हायाम्।

> सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्।
> कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम्[५]॥

इति कोशात्। तत्पदस्य रक्षःपरत्वे पदस्याऽस्य प्रसिद्धिविरोधः। अनुचितार्थता च क्रूरत्वं हि रक्षस उचितम्, न चारुत्वम्। क्रौञ्चपदेन भगवन्तं जानकीजानिं जिघृतान्च कृत्स्नमेवेदं पद्यमवद्यं विवृणोत्येव।

'ताद्दशम्', इति च रतिलालसतां क्रौञ्चस्य व्यञ्जयत् सुश्लिष्टं घटते। प्रक्रान्तत्वात्। रामरावणपरत्वे पुनरस्यानुपपत्तिरेव तत्कथायास्तदानीं प्रक्रान्तत्वाभावात्। भगवत्कमलासनानुशासनेन पश्चादेव तस्या उपक्रमणात्। एतेनैव प्रसिद्धार्थत्वानुभूतत्वार्थकत्वाश्रयणमपि तदाऽत्र निरस्तमवसेयम्, रामायणकथानिबन्धनात्पूर्वं तत्त्वाऽसिद्धेः। पूर्वप्राप्तस्य प्रक्रान्तार्थस्य परित्यागे हेत्वभावाच्च। प्रक्रान्तप्रसिद्धानुभूतार्थकस्तच्छब्द इति च प्रामाणिकानां समयः।[६]

---

१ तदेव—गुजरातीप्रिन्टिगप्रेस मुद्रिते सं० पृ० ५६।
२. तत्रैव पृ० ५७।　३. वाल्मीकिरामायणम्—२।१।२९-३०।
४. वाल्मीकिरामायणम् २।१।२८।　५. अमरकोषे विशेष्यनिघ्नवर्गे ५२।
६. काव्यप्रकाशे सप्तमोल्लासे।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

त्यदादिषु दृशोऽनालोचने कञ्च ( चात् क्विन् )—इत्यनुशासनाच्च तादृगिति तादृश इति च सिद्ध्यति ।[1]

किञ्च, पूर्वार्धे पापात्मनेति यदुक्तम्, य इत्यादिनोत्तरार्धेन तस्य समर्थनं कृतम् । रतिलालसस्य सुरतकूजितपूजितस्य क्रौञ्चस्य अकारणं हननात् पापात्मना साधिष्ठं साधिता भवति । निषादपदेन राघवेन्द्रं गृह्णतामिदं विगृह्णाति । तेऽत्र पापात्मनेति वाल्मीकिमुपेयिवद्भिः परस्परविरोधश्च ।

अपि च, तादृशस्य चारुरवस्य क्रौञ्चस्याकारणं हननात् पापात्मतासिद्धिः । निषादपदेन रामचन्द्रं क्रौञ्चपदेन रावणमभिप्रयन्तस्तु—

"क्रौञ्चमिथुनात् रावणमन्दोदरीरूपादेकं काममोहितं सीतापहारिणं रावणमवधीरिति व्याचक्षते । हनने काममोहितत्वं हेतुरिति काव्यलिङ्गम्" इति वदन्तः । क्रौञ्चस्य हनने काममोहितत्वं कारणीकुर्वतामेषां शेमुषीजुषां प्रकृतपद्ये पठितेन भगवद्वाल्मीकेरकारणक्रौञ्चहनन हेतुकपापात्मतावचनेन चापि दुर्वार एव विरोधः । 'पापात्मना···कृतं कष्टं····यस्तादृशं······ क्रौञ्चं हन्यादकारणात्'—इतीमानि मौलाक्षराणि । अत्र—

'तपोनाशसम्पादकशापनिःसारणेन कष्टं कृतम्, मयेति शेषः'—इति वदँस्तिलकस्तानि बलादिव त्रोटयति । विनैवाऽध्याहारं साधूपपद्यमाने वाक्यार्थे का ननु तस्याऽपेक्षा, 'वैरग्रहणबुद्धिना"—इत्यत्र च निषादेनेति शेष इति सः । एवमेकस्मिन्नेव पद्ये मुहुरध्याहारधुरां वहन् स न्यूनपदत्वे दोषं प्रसह्य समासजन् मधुमयभणितीनां मार्गदर्शिनं महर्षि बालेभ्योऽपि न्यूनपदं कविकर्मणि तमजानान एव साधयति । बत ! बत !

एनं प्रसङ्गञ्च ध्वनिमार्गस्य परमोवेधा सकलसहृदयानन्दवर्धन आनन्दवर्धनोऽपि सस्मार—

काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा ।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः[2] ।। इति

कविकुलगुरुश्च—

तामभ्यगच्छद्रुदितानुसारी मुनिः कुशेध्माहरणाय यातः ।
निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः[3] ।। इति

अनयोराद्यस्य व्याख्यायां भट्टा महेश्वरा अभिनवगुप्तश्रीपादा आहुः—क्रौञ्चस्य द्वन्द्ववियोगेन सहचरिहननोद्भूतेन साहचर्यध्वंसनेनोत्थितो यः शोकः स्थायिभावो निरपेक्षभावत्वाद् विप्रलम्भशृङ्गारोचितरतिस्थायिभावादन्य एव स एव तथाभूतविभावतदुत्था क्रन्दाद्यनुभावचर्वणया हृदयसंवादतन्मयीभवनक्रमादास्वाद्यमानतां प्रतिपन्नः । करुणरसरूपतां लौकिकशोकव्यतिरिक्तां स्वचित्तद्रुचिसमासाद्यसारां प्रतिपन्नो रसपूर्णकुम्भोच्चलनवच्चित्तवृत्तिनिःस्यन्द-

१. अष्टाध्यायी । ३।२।६० ।
२. ध्वन्यालोक १।५ ।
३. रघुवंश १४।६ ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

स्वभाववाग्विलासादिवच्च समयानपेक्षत्वेऽपि चित्तवृत्तिव्यञ्जकत्वादिति नयेन समुचितशब्दछन्दोवृत्तादिनियन्त्रितश्लोकरूपता प्राप्ता । मा निषादेति पद्यस्य व्याख्यायां काव्यव्याख्यातृसम्राट् मल्लिनाथश्च—

'शोकः श्लोकत्वमागतः—श्लोकरूपेणावोचदित्यर्थः ।'[1] स च श्लोकः पठ्यते मा निषाद······ मोहितमिति[2] ।

तस्मात्प्रमाणपरिहीणः श्लोकशब्दस्य यशोऽर्थकत्वं कथयन्नत्र तिलकः, अथ किमिदं व्याहृतं मयेत्यत्र—न च किमिदमित्यस्य पद्यं गद्यं वेत्यर्थः, तदप्येष श्लोकोऽभिगीतः 'मरुत्तः परिवेष्टारो मरुत्तस्यावसन्गृहे' इत्यादि बहुशः श्रुतिपूपलभ्यमानत्वेन ईदृशाक्षरसन्निवेशस्य श्लोकत्वेन मुनेरज्ञानमित्यस्यात्यन्तमनुचितत्वादिति तिलकोक्तिस्तु विरुद्धैव । तत एव तस्य तादृशचिन्तोद्गतेरौचित्यात् कारुण्यपरिभूतस्याऽबुद्धिपूर्वकयुक्तवचसः कथमिव पादाक्षरबन्धतन्त्रीलयात्मककाव्यताप्राप्तिरिति । यच्च 'पादबद्धः' इत्यादि पद्ये 'श्लोको भवतु' इत्यस्य शकुनिविषयकशोकविशिष्टस्य मे प्रवृत्तिः ।

अयं श्लोकः अन्यथा कथञ्चिदप्यन्यपरः न भवतु प्रत्युत—रघुनाथकथानिवर्तनप्रतिबन्धकीभूतव्याधनिवर्तनसूचकमपि रघुनाथकथासूचकमेवेदं पद्यं भवत्विति फलितोऽर्थ इति शिरोमणिश्च न रमयणीयः । रघुनाथकथाप्रवर्तनं हि प्राचेतसस्य परतः पद्मयोनिना भगवता कृतम्—

रामस्य चरितं कृत्स्नं कुरु त्वमृषि सत्तम ।

धर्मात्मनो भगवतो लोके रामस्य धीमतः[3] ॥

ततः पूर्वं तु काव्यं कर्तुमपि न चिन्तितम्, तेन दूरे रामकथामयम्, नारदं प्रति तस्य प्रश्नोऽपि न काव्यचिकीर्षोः । अत एव वैधसस्य—

वृत्तं कथय धीरस्य यथा ते नारदाच्छ्रुतम्[4] ।

कुरु रामकथां पुण्यां श्लोकबद्धां मनोरमाम्[5] ॥

इत्यादिवचननिचयस्य चोपपत्तिः । तथा चैतद् विरोधादेव तत्र शापातिरिक्तार्थानां सुतरामश्रद्धेयता । यश्चोक्तार्थानां व्यङ्ग्यत्वसाधनाय वाग्विस्तरः सोऽप्यस्थाने एव । यत्र हि शब्दार्थौ स्वार्थमुपसर्जनीकृत्य प्रतीयमानं व्यङ्क्तः, तत्रैव व्यङ्ग्यता, यत्र तु नोपसर्जनीभावस्तत्र न सम्भवति ध्वनिः । इत्येष हि निर्णयः साहित्यार्णवकर्मधाराणां श्रीमदानन्दवर्धनानाम्—

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।

व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः[6] ॥

---

१. ध्वन्यालोके सलोचनादौ चौखंभीये १९४० संस्करणे पृ० ८ ।

२. रघुवंशे सञ्जीवनी, निर्णयसागरीये १९३२, संस्करणे पृ० २१ ।

३. वाल्मीकिरामायणम् १।२।३२।

४. तदेव—१।२।३३।

५. तदेव—१।२।३६।

६. ध्वन्यालोक।—१।१३।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

प्रकृता व्याख्याकृतो यानेव निजाधारतया सङ्केतयन्ति—तेषां परमं प्रमाणीकृता आनन्दवर्धना भगवन्तः। न च मा निषादेत्यादिपद्यगतानामभिधानाभिधेयानामर्थं उपसर्जनताम् उररीकुरुतः स्वप्रधानत्वात्। तदवधारणार्थश्चेदमाकलनीयम्, यत्—क्रौञ्चद्वन्द्वबियोगोत्थशोके मा निषादेत्यादिश्लोकरूपतां गते महर्षेश्चिन्तोदयः, शिष्येणोक्तस्य श्लोकतया प्रतिग्रहणम्, कृततमसाभिषेकस्याश्रममागतस्य ध्यानस्थितस्य तस्य पार्श्वे कमलयोनेः शुभागमनम्। तत्पुरस्तादपि तथैवावद्धध्यानस्य क्रौञ्चीं शोचत—

अयमेव श्लोकमुपगायतः पूर्ववच्चिन्ताचान्तस्य भगवता ब्रह्मणा प्रोक्तस्य मा निषादेत्यादेः श्लोकरूपतां निश्चित्य प्रतिलब्धकाव्यनिर्माणशक्तिकाय तस्मै रामचरितं काव्यीकर्तुमादेशदानम्। ततश्च तदीयस्तथाकर्तुंसङ्कल्प इत्यस्ति तच्छ्लोकादारभ्य यावत् सर्गान्तं कथाक्रमस्य संक्षेपः। तृतीयसर्गारम्भे च ब्रह्मादेशमनुपालयितुं नारदमुखाच्छ्रुतस्य रामचरितस्य यथा साक्षात्कारविषयता भवति तथा तदीयोद्योगो दरीदृश्यते—

श्रुत्वा वस्तु समग्रं तद् धर्मार्थसहितं हितम्।
व्यक्तमन्वेषते भूयो यद् वृत्तं तस्य धीमतः[1]॥

इत्यादिना।

ततश्चादिकविकर्तृकराघवेन्द्रचरितकथारम्भणे क्रौञ्चवधोद्भूतशोकप्रवाहाद् मा निषादेत्यादिपद्यप्रादुर्भावघटना मूलयिता। तत एव हि तदीयां काव्यशक्तिं निश्चित्य प्रजापतिना सीतापतेश्चरितवर्णनादेशदानम्। मा निषादेत्यादेरभिधानाभिधेयानामुपसर्जनीकृतार्थत्वे तु कुतः प्राचेतसस्य शोकः? उक्तपद्यस्य रामपरत्वे हर्ष एव प्रत्युत स्यात्, कुतस्तदीया चिन्ता? कुतश्च तां निन्दता पद्मयोनिनाऽग्रे कृत्स्नरामचरितनिर्माणादेशनेत्यादीनि सर्वमाकुलीकृतं स्यात्। उपसर्जनीकृताभिधानाभिधेयत्वे च कुतोऽस्मात् पद्यात् करुणरसस्य चर्वणा आनन्दवर्धनाभिनवगुप्तादिनिरूपिता? ध्वनिकृतो लोचनकृतश्च—परमं प्रमाणं काव्यतत्त्वविदां परिषदि। उपसर्जनीकृतस्वार्थौ, इत्येत् स्फुटीकुर्वता चांशेप्यमाणि तत्र भवता ध्वनिकृतैव—

तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रतिस्थितौ।
ध्वने स एव विषयो मन्तव्यः सङ्करोज्झितः[2]॥

अपि च—

यत्र प्रतीयमानोऽर्थः प्रश्लिष्टत्वेन भाषते।
वाच्यस्याङ्गतया वापि नास्याऽसौ गोचरो ध्वनेः[3]॥

तत् किं नास्ति मङ्गलरूपत्वमस्य श्लोकस्य? अस्ति नूनम्। मङ्गलतमत्वं वयमातिष्ठामह एतदीयम्, मङ्गलं हि भगवान् राघवेन्द्रः, मङ्गलतरश्चाद्यन्तं लोकोपकारिसारं तस्य चरितम्। मङ्गलतमः पुनरयं श्लोकः—तच्चरितकथालताया आधाररामायणत्वात्—एवम्—

---

१. वाल्मीकिरामायणम् १।२।३१। अत्र गोविन्दराजः—त्वया बद्धो मानिषादेत्यादिः श्लोक एव। अत्र श्लोकविषये विचारणा चिन्ता न कार्येति।

२. ध्वन्यालोके १।१४। कारिकार्थसंक्षेपस्यान्त्यं पद्यम्।

३. ध्वन्यालोकः २।३१।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अर्थतः शब्दतो वाऽपि मनाक् काव्यार्थसूचनम्[1] ॥

इत्यस्याप्यविरोध एव। काव्यार्थो हि करुणो रस एव। यथाह ध्वनिकृतः-तथा चादिकवेर्वाल्मीकिनिहितसहचरविरहकातरक्रौञ्च्याक्रन्दजनितः शोक एव श्लोकतया परिणतः। शोको हि–करुणस्थायिभाव[2] इति रामायणे हि करुणो रसः, इत्यादि कविना सूचितः शोकः श्लोकत्वमागत इत्येवं वादिना। निर्व्यूढश्च स एव सीतात्यन्तवियोगपर्यन्तमेव स्वप्रबन्धमुपरचयता[3] इति च। एवञ्च करुणरसस्य रामायणप्रतिपाद्यत्वम् तस्य च मा निषादेत्यादि पद्ये सामग्र्येण ध्वननम्। अत्र पतिविरहकातरा क्रौञ्ची व्याधविद्धशोणितपरीताङ्गो भूतलेचेष्टमानः क्रौञ्चश्चालम्बनविभावो व्याधकर्तृकं निहननमुद्दीपनविभावः, क्रौञ्चीक्रन्दितमनुभावः। तथा च—विभावानुभावाभ्यामविभज्यमानश्चिन्ताविषाददैन्यमोहादिभिः सञ्चारिभिः सञ्चर्यमाणः शोकारूपस्थायिभावोऽत्र करुणरसरूपतामुपेतश्चेतसो विषयतामापनीपद्यते। तथा चोपपन्नं पद्येऽस्मिन् काव्यार्थसूचनम्। किञ्च करुणो रसः। करुण एव तु रस इति भवभूतिः। रसश्च-परमात्मेव। रसो [4]वैसः। इति श्रुतेरिति रीत्यापि भगवत्परतोपपद्यतेतराम्—

आदिकाव्यस्य कल्याणकारिणि भवतारिणि।
मग्नोऽहं निर्वृतिम्प्राप पुण्यमारिणि वारिणि[5] ॥

---

१. महेश्वरतीर्थेनोद्यतम्। २. ध्वन्यालोकः १।५। ३. स एव—४–५।
४. तैत्तिरीयोपनिषद् २।६। ५. कुमारसम्भवस्य १०।३६ तमः श्लोकः परिवृत्य पठितः।

● ● ●

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# गणपाठेष्वनालोचिता निपाताः

डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

निबन्धेऽस्मिन् केचनैतादृशा निपाता विमर्शकोटिमवतरिष्यन्ति, येषां परिसङ्ख्यानं पाठो वा तत्तच्चादिगणेष्वसन्निविष्टो दृश्यते। चादीनाम् इयत्तानिर्धारणसङ्कल्पितमानसैः शाब्दिकशिरोमणिभिः पदे पदेऽघोषि यत्—'शेषा ज्ञेयाः प्रयोगतः' इति[1]। आचार्यहर्षकीर्तिनापि निरदेशि यत्—

उपसर्गस्य संयोगाद् भिन्नभिन्नार्थवाचिता।
धातूनां याऽभवत् सा तु विज्ञेया कविरूढितः[2]॥

अर्थात् कविरूढितः = महाकविप्रयोगानाधारीकृत्यैव निपातसङ्ख्याया निपातार्थानाञ्चेयत्ता प्रमातव्येति। तत्तद् गणपाठास्त्वौपलाक्षणिका एव। अत एवापभ्रंशकाव्यत्रयीप्रणेत्रोक्तं यत्—

वाचस्पतेरपि मतिर्न प्रभवति दिव्ययुगसहस्रेण।
देशेषु ये प्रसिद्धास्तान् शब्दान् सर्वतः समुच्चेतुम्[3]॥

महाभाष्यकर्तुः—"तत्रोपलब्धौ यत्नः क्रियताम् – महान् शब्दस्य प्रयोगविषयः। सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः, साङ्गाः, सरहस्या बहुधा भिन्नाः, एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधाऽथर्वणो वेदः, वाकोवाक्यम्, इतिहासः, पुराणम्, वैद्यकमित्येतावाञ्छब्दस्य प्रयोगविषयः[4]" इत्युक्तिः सङ्केतयति तत्तद् वर्गीयाणां शब्दानामनैयत्यमथ चानन्त्यम्।

निपातानामपि पाठे, व्याख्यायाञ्चावलोक्यते भूयान् स्वैराचारः। अत एव शन्तुनाऽभ्यधायि—

पाठा व्याख्या निपातानां दृश्यन्ते च स्वैरिणः।
प्रयोग एव भगवांस्तानवस्थापयत्यपि[5]॥

वस्तुतः शाब्दिकाः कोषकाराश्च शब्दवर्गनिर्धारणप्रसङ्गे कृतभूरिश्रमा अपि न कृतकार्या भवन्ति। यतो हि तैः शब्दोदधौऽङ्गुलिनिर्देशमात्रमकारि। तथ्यमिदमेव मनसि निधाय माधवाचार्येणोद्घोषितं यत्—

१. उपसर्गवृत्तिः–६—भरतमल्लिककृता।
२. सारस्वतीयो धातुपाठः—हर्षकीर्तिविरचितः।
३. अपभ्रंशकाव्यत्रयी—भूमिका—पृ० ९४।
४. महाभाष्यम्—पस्पशाह्निकम्—पृ० ५४।
५. दुर्गासप्तसती—८।४५—शन्तनुव्याख्या।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

शाकल्यः पाणिनिर्यास्क इत्यृगर्थपरास्त्रयः ।
यथाशक्त्यनुधावन्ति न सर्वं कथयन्त्यमी[1] ॥

इत्थं स्वतःप्रमाणभूतानाम्–शाकल्य-यास्क-पाणिनिसदृशानामपि प्रयासो यद्यनुधावन-मात्रमेव, तर्हि का कथाऽन्येषां शाब्दिकानाम् ?

निपातानां सङ्ख्यावबोधे कृत्स्ने श्रुतिस्मृतिवाङ्मये नावलोक्यते काचिद् विसंवादरहिता तत्त्वदृष्टिः । निर्वचनकारैः शाब्दिकैश्च पदे पदे किलोद्घोषितं यद् निपाता अपरिमिता इति । तथा चाह शौनकः—

इयन्त इति सङ्ख्यानं निपातानां न विद्यते ।
प्रयोजनवशा ह्येते निपात्यन्ते पदे पदे[2] ॥

निरुक्तव्याख्याने दुर्गाचार्येणापि संश्लोकितं यद् अपरिमिता निपाता भवन्तीति—"अपरिमिताश्च निपाता इति[3]" । तीर्थदर्शिना गुरुणा त्वन्यत्र सिद्धान्तितं यद् निपातादीनां सङ्ख्यानिर्धारणं तु किलासम्भवप्रायमेव—"को हि नाम समर्थो धातुप्रातिपदिकप्रत्ययनिपाता-नामर्थानादेष्टुम्[4]" इति ।

अमीभिः सिद्धान्तैः खलु स्थिरीक्रियते यद् निखिला अपि गणपाठा ( चादिपाठाश्चापि ) औपलाक्षणिका एव । ते हि खलु वाङ्मयार्णवेऽङ्गुलिनिर्देशमात्रं कुर्वन्ति । अत एव भोजव्याक-रणकर्त्रा साधूक्तं यद् निपातगणे परिसङ्ख्यातेभ्योऽन्येऽपि निपाता ऊह्याः—

निपातगणतो ग्राह्या निपाता अपरेऽपि च ।
अव्ययान्यपराण्येव ग्राह्याण्यव्ययकामतः[5] ॥ इति ।

वस्तुतस्तु गणमुखेन पदसङ्ख्यानिर्धारणं दुष्करम् । पक्षमिममुररीकृत्यैव वोपदेव-गोस्वामिना पदस्रोतभूतानि चत्वारि स्थानानि समाम्नातानि—

कविकल्पद्रुमो नाम पद्यैर्निष्पाद्यतेऽत्र च ।
धातवः पठिताः पाठसूत्रलोकागमस्थिताः[6] ॥

कविकल्पद्रुमव्याख्यात्रा दुर्गादासेन साधु व्याकृतोऽयं श्लोकः—"अत्र ग्रन्थे पाठसूत्र-लोकागमेषु स्थिताश्चतुर्विधा धातवः पठिताः = पठितुमारब्धा इत्यर्थः ।

[क] पाठस्थिताः = पूर्वाचार्याणां धातुपाठेषु स्थिताः—भवति, पचतीत्यादयः । [ख] सूत्र-स्थिताः = धातुपाठेषु न दृष्टाः—स्तभ्नोति, स्कभ्नोतीत्यादयः । [ग] लोकस्थिताः = धातुपाठेषु

---

१. ऋग्वेदानुक्रमणी—८।१।१७ ।
२. बृहद्देवता—२।९५ ।
३. निरुक्तम्—१।१—दुर्गव्याख्या ।
४. महाभाष्यम्—२।१।१ ।
५. भोजव्याकरणम्—निपातप्रकरणम्—५ ।
६. कविकल्पद्रुमः—श्लोकः—४—दुर्गादासव्याख्या ।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

सूत्रेषु च न दृष्टा। महाकविप्रयोगेषु दृष्टाः—प्रेङ्खोलयति, आन्दोलयतीत्यादयः। [घ] आगमस्थिताः=भाषाविषयेषु धातुपाठसूत्रलोकेषु न दृष्टाः, वेदेष्वेव प्रयुक्ताः—जगाति, चिकेतीत्यादयः इति। एतेन दुर्गादासव्याख्यानेन सिद्धयति यत् पार्यवसानिको निर्णयस्तु भवति धातूपसर्गनिपातानां स्रोतसो लोकागमाभ्याम्, अर्थाद् लोकवेदाभ्याम्।

अत एव प्रयोगैकशरणेन माधवभट्टेन[1] व्यवस्थापितं यत्—

ऋचां निरीक्षणादेते निपाताः शतमुद्धृताः।
त्रिंशच्च सूक्ष्मेक्षिकया समुद्धार्यास्तथापरे॥
ग्रन्थेऽस्ति पदसङ्ख्येति यत्नो न भवतोस्ततः।
पदसङ्ख्या च भवतोर्वाच्या ग्रन्थं निरीक्ष्य तम्॥

एवं महाकविव्याहारेषु लोकमानसनिवहेषु च संरक्षिताः सम्पोषिताश्च बहवो नाम-आख्यात-उपसर्ग-निपाता लोकवेदनिरीक्षणादेवावगन्तुं क्षमा भवन्तीति। साधूक्तं श्रीकृष्णाचार्येण प्रक्रियाकौमुद्यां यत्—"प्रयोगवशाद् इत्यनेनापठिता अपि—सुदि, वदि, रोदसी, चिराय—इत्यादयो लोके प्रयुज्यमाना निपातत्वेन ज्ञेयाः"[2] इति। अर्थाद् ग्रन्थेष्वनुपात्ता लोकमानसैः पुरस्कृताश्चापि शब्दा लोकनिरीक्षणाधीनाः। अस्मादेव महाभाष्यकारो हि नामोदाजहार—"त्रयो लोकाः"[3] इति।

वस्तुतः शब्दागमस्य स्रोतस्तु चतुर्मुखंप्र वहति—पाठ-सूत्र-लोक-आगमरूपेण। अर्थात् पाठस्थिताः, सूत्रस्थिताः, लोकस्थिताः, आगमस्थिताश्चापि।

१—पाठस्थितास्तावत्—पूर्वाचार्याणां गणपाठेषु स्थिताः—च, वा, ह, नु, प्रभृतयः।

२—सूत्रस्थिताः—गणपाठेष्वननुपात्ताः, केवलं सूत्रेष्वेव पठिताः—भोस्, भगोस्, अघोस् प्रभृतयः।

३—लोकस्थिताः—गणपाठेषु सूत्रेषु चाननुपात्ताः, महाकविप्रयोगेष्वेवोपात्ताः : यथा—वव, आष्, ममत् प्रभृतयः।

४—आगमस्थिताः—भाषाविषयेषु=गणधातुपाठसूत्रलोकेषु न दृष्टाः, वेदेष्वेव प्रयुक्ताः। यथा—विश्वाहा, चिश्वा, आवत् प्रभृतयः।

इत्थं विपर्यस्तायां शब्दस्रोतोवहायां पदरत्नान्यन्वेष्टव्यानि भवन्ति। अस्मिन्नेवानुषङ्गे शन्तनोः श्लोकस्य स्वारस्यं प्रतिभाति—"प्रयोग एव भगवांस्तानवस्थापयत्यपि[4]" इति।

एवमत्रावस्तात् केचनैतादृशा निपाता विमर्शभाजो भविष्यन्ति, ये गणपाठेष्वसन्निविष्टाः सन्तः सूत्र-लोक-आगमेषु लब्धप्रतिष्ठा राजन्ते।

---

१. ऋग्वेदानुक्रमणी—३।१।१२; ८।४।१४।
२. प्रक्रियाकौमुदी—भूमिका—पृ० ३१।
३. महाभाष्यम्—पस्पशाह्निकम्—पृ० ५४।
४. दुर्गाशप्तसती—४५—शन्तनुव्याख्या।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

### (१) : अद्य [=अधुनार्थे]

'अद्य' इति निपातो वर्तमानकालार्थे व्यवहृतो दृश्यत ऋग्वेदसंहितायाम् । तथा हि मन्त्रः—"अद्या देवा उदिता सूर्यस्य निरंहसः[१]" इति । व्याक्रियते च मन्त्रोऽयं सायणाचार्येण—'अद्य=अस्मिन् काले । 'अद्य' 'निपातस्य च' इति संहितायां दीर्घत्वम्' इति ।

'अद्य' इति निपातस्य व्यवहारस्तु निपातत्वेन पाणिनिमनु नावलोक्यते । हेमचन्द्राचार्यस्तु[२] 'द्य' इति निपातं हिंसाप्रातिलोम्ययोरित्यर्थे पठति स्म । माधवभट्टेन तु 'अद्य—अथ' इति निपातौ पर्यायत्वेन पठितौ—

> अथाद्येति समानार्थौ तौ पठन्ति च बह्वृचा ।
> अवघातेन महता तौ यथा स्तः पृथक् पृथक्[३] ॥

### (२) : अन [=नानार्थे]

'अन' इति नानार्थको निपातः सङ्ख्यात्वत्राचकत्वेनापि परामृश्यते । तथा च—अन+एकः>अनेकः, इति । विविधेषु गणपाठेष्वयं निपातकुक्षो न पठितः । तैत्तिरीयारण्यकेऽयं निपातत्वेन व्याख्यातः । तद्यथा—"अनवर्णे इमे भूमी । इयं चासौ च रोदसी[४]" इति । उपवृंहयति च भट्टभास्करः—'अनवर्णे=अनेकरूपे, इयं वै रजता, असौ हरिणी इति दर्शनात् । अन इति निपातोऽनेकवचनः' इति ।

आधुनिकभाषास्वप्ययं निपातो निर्विशेषरूपेणैव प्रयोगभाग् भवति । सर्वानन्दस्तु[५] 'अन' इति निपातं कुत्सार्थे व्याख्यातवान् ।

### (३) : अन्तिके [ = समीपे ]

'अन्तिकम्' इति समीपार्थकस्य निपातस्य विकासस्तु मौलिकाद् 'अन्तर्' इति निपातात् सञ्जातः । तथा हि मन्त्रः—"सर्वं राजभ्यः परमाचिदन्ति[६]" इति । व्याख्यातश्च मन्त्रोऽयं सायणाचार्येण—'अन्ति=अन्तिके, समीपे वर्तते इति शेषः' इति । माधवस्तु[७] 'अन्तिकम्' इति शब्दग्रामं निपातत्वेनाङ्गीकृतम् ।

ग्रीक-लैटिनभाषयोर्निपातेनास्य सगोत्रीयः संवादोऽवलोक्यते[८]—तस्मिन्नेवार्थे । तद्यथा—सं० अन्ति > ग्री० अन्ति > अन्ते > लै० अन्ते—इति ।

---

१. ऋ० सं०—१।११५।६—सायणभाष्यम् ।
२. सिद्धहेमशब्दानुशासनम्—१।१।३१—स्वोपज्ञवृत्तिः ।
३. ऋग्वेदानुक्रमणी—३।६।१ ।
४. तै० आ०—१।८।२८ ।
५. नामलिङ्गानुशासनम्—१।६।२१—सर्वानन्दव्याख्या ।
६. ऋ० सं० २।२७।३, १०।११।४—सायणभाष्यम् ।
७. ऋग्वेदानुक्रमणी—३।१।५ ।
८. मोनियरविलियम्स-संस्कृत-इंग्लि० डिक्शनरी, पृ० ४४ ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

## (४) : अन्यतरस्याम् [ = विकल्पे ]

'अन्यतरस्याम्' इति सप्तम्यन्तो निपातः 'अन्यः' इति सर्वनामशब्दादेव लब्धास्पदम् । अन्यः + त्र > अन्यत्र, अन्यः + था > अन्यथा, अन्यः + तर > अन्यतरः प्रभृतयो निपाताः 'अन्यः' इति सर्वनामशब्दसमूहिभूताः । 'अन्यतरस्याम्' इति निपातस्तु काममर्वाक्कालिकः । तथा चाह कैयटः[1]—'अनेकार्थत्वान्निपातानां समुच्चयेऽन्यतरस्याम् शब्दः' इति । [2]हरदत्तमिश्रस्याप्ययमेवाभिप्रायः—'अनेकार्थत्वान्निपातानामन्यतरस्यां ग्रहणमिह समुच्चयार्थम्, न विकल्पार्थम्' इति ।

[3]प्राचीनभारोपीयभाषानिपातेनाप्ययं संवदति—सं० अन्यः > अवे० अन्य > ग्री० अर्लोस् > लैं० अलिउस् > गाथि० अलिजस् > जर्मन-ऐल इति ।

## (५) : अन्येद्युः [ =परदिने ]

'अन्येद्युः' इति निपातस्यापि विकासः 'अन्यः' इति सर्वनामशब्दादेवोपपन्नः । ऋग्वेदसंहितायां त्वयमानुपूर्वीरूपेण नोपलभ्यते । अथर्ववेदेऽयं प्रथमतया दृष्टिपथमायाति । तथा हि मन्त्रः- [4]'अन्येद्युरुभयेद्युरेति' इति । मन्त्रोऽयं व्याचक्षाणेनोक्तं सायणाचार्येण—'अन्येद्युः = अन्यस्मिन् परदिने । उभयद्युः = उभयस्मिन् द्वितीयेऽहनि । 'सद्यः परुत्परारि' ( पा० ५।३।२२ ) इत्यादिना 'अन्येद्युः—उभयद्युः इति शब्दौ निपातितौ । 'उभयद्युः' इत्यत्र एत्वाभावश्छान्दसः' इति । [5]भल्लिनाथस्याप्ययमेव समयः ।

[6]ह्विट्नीमहोदयेनापि शब्दोऽयं निपातत्वेनैव व्याकृतः । तेनोक्तं यत्—'उभयेद्युः', 'पूर्वेद्युः' प्रभृतयो निपाता अप्येवमेव निष्पन्नाः' ।

अत्रेदं ध्यातव्यं भवति यत् 'अन्यः' 'उभयः' 'परः' प्रभृतिसर्वनामशब्दा एव निपातकुक्षाववतीर्णाः । इत्थमत्र दृश्यते निपातसर्वनाम्नोरन्योन्यं साङ्कर्यम् ।

## (६) : अपु [ = पूतीकरणे ]

'अपुः' इति निपातः केवलं तैत्तिरीयसंहितायामेव प्रयुक्तोऽवलोक्यते । तथा हि मन्त्रः— "एवास्यापुवायते यन्मीयते तदेवास्यैतेनाप्याययत्यातुभ्यमिन्द्रः[7]" इति । व्याख्याति च मन्त्रममुं भट्टभास्करः—'एतेन चाप्यायनेन यदस्य सोमस्यापुवायते = पूतीभवतीति । अपशब्दस्य छान्दसो

---

१. प्रदीपः—५।२।९७ ।

२. पदमञ्जरी—५।३।१०९ ।

३. मोनियरविलियम्स सं० इं० डिक्श० पृ० ४५ ।

४. अथर्ववेदः—१।२६।४, सायणभाष्यम् ।

५. रघुवंशम्—२।२६—मल्लिनाथव्याख्या ।

६. संस्कृत-ग्रामर-पृ० ४९३ ।

७. तै० सं० ६।२।२—भट्टभास्करभाष्यम् ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

वर्णविकारः। उकारान्तो वा उपसर्गसधर्मा शब्दः। तत्पूर्वकश्च सकर्मको वातिः। वातेः कर्मणि कर्त्तरि वा लकारः "अचः कर्तृयकि" इत्यस्य पाक्षिकत्वाद् यक्स्वरः' इति।

अत्रावधातव्यमस्ति यत् 'अपुवायते' इति पदस्याख्यातपदसदृशोऽत्र व्यवहारः। दृश्यते हि निपातानामपि नामधातुवत् परामर्शः। यथा—'स्वधामहे', "स्वधयति', इत्यादयः। अत एवाह [2]महाभाष्यकारः—'धातूपसर्गविभक्तिप्रत्ययस्वरप्रतिरूपकाश्च निपाता भवन्तीति'।

## (७) : अभितः [ = आभिमुख्ये ]

'अभितः' इति निपातो विभक्तिप्रतिरूपकः। तथा चोक्तं [3]न्यासकारेण—'उपसर्गविभक्तिसर्वनामस्वरप्रतिरूपकाश्च निपाता भवन्तीति'। चादिगणपाठेऽव्ययम्—अभि + तस् > अभितः—इति निपातो नावलोक्यते।

ऋग्वेदे तु 'अभि' इत्युपसर्गस्यावयवविभूतौ 'अभितः' 'अभीके' इति द्वौ निपातौ दृश्येते। अर्थस्तु समान एव। तथा च मन्त्रः—"उदस्तभ्नाः पृथिवीं द्यामभीके भ्रातुः पुत्रान् मघवन्तित्विषाणः[4]" इति। निरुवाच मन्त्रममुं सायणः—'अभीके = अन्तिकनामैतत्। तत्र समीप एव' इति।

परिवर्तिवाङ्मये तु 'अभितः' इत्येक एव निपातः कुत्रचिद् अव्ययत्वेन, कुत्रचिच्च निपातत्वेन शाब्दिकैर्व्याख्यातः। उपश्लोकयति च कैयटः—'आभिमुख्यवृत्तिरपि विभक्तिप्रतिरूपको निपातोऽभितः शब्दोऽस्ति'[5] इति। हरदत्तमिश्रस्याप्ययमेवाभिनिवेशः[6]।

## (८) : अमा [ = सहभावे ]

'अमा' इति निपातो निपात-सर्वनाम—आ + मा > अमा—समूहिभूतः। 'अमा' घटकः 'मा' इति सर्वनामशब्दः सप्तम्यर्थकः—मा = मयीत्यर्थः। अमावास्यापदनिरुक्तिप्रसङ्गे किलोवाच सायणाचार्यः[7]—'अहमेव अमावास्या = अमावास्याभिमानिनी देवता अस्मि। न केवलं शब्दतः, अपितु अर्थतोऽपि एतन्नामिका भवामि। तद् दर्शयत पादत्रयेण—सुकृतः सुकर्माणो देवा माम् = मयि, आ वसन्ति, यष्टव्यत्वेन अवतिष्ठन्ते। 'उपान्वध्याङ्वसः[8]' इति आङ्पूर्ववसिप्रयोगे 'माम्' इत्यस्य कर्मता। आ + मा + √वस > अमावास्या = आ—मा = मयि वसन्ति देवा इति 'अमावास्या' शब्दनिरुक्तिः।

---

१. भागवतम्—५।८।२५—श्रीधरव्याख्या।
२. महाभाष्यम्—३।२।४२।
३. न्यासव्याख्या—( पा० २।२।२४ )।
४. ऋ० सं० १०।५५।१—सायणभाष्यम्।
५. प्रदीपः २।३।२।
६. पदमञ्जरी—२।३।२।
७. अथर्ववेदः—७।७९।२—सायणभाष्यम्।
८. अष्टाध्यायी—१।४।४८।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

आङ्-वसत्योर्मध्ये 'मा' इति अस्मदो द्वितीयैकवचनस्य प्रयोगः। आङ् उपसर्गस्य ह्रस्वत्वम्। इति 'अमावास्या' शब्दनिष्पत्तिः प्रदर्शिता। प्रत्ययस्तु पूर्वमेव उक्तः। 'माम्' इति द्वितीयार्थमेव विवृणोति—मयीमे इति। इमे देवाः मयि निवसन्ति इति आवासपदस्य अर्थकथनद्वारेणापि 'अमावास्या, शब्दो निरुच्यते। अमा सह वसुरूप इन्द्रो वसति अस्यां तिथौ इति 'अमावास्या' शब्दनिरुक्तिरिति तैत्तिरीये श्रूयते—"अमा वै नो अद्य वस्तु वसतीति। इन्द्रो हि देवानां वसु। तद् अमावास्याया अमावास्यत्वम्[1]" इति।

एवं हि निपात–आ + माम्–सर्वनाम्नोरास्कन्दनेनैको नूतनो निपातप्रत्यय उदितः सन् पुनः सः √वस[ = निवासे ] इति धातुनोपश्लिष्यन् संज्ञापदम्–आ + मा√वस>अमावास्या—निर्मापयति अत्र। 'अमा' इति निपातार्थस्य व्यक्तिस्तु आधिकरणबोधकेन 'मयि' इति सर्वनामपदेनैव स्फोटयते।

## (९) : अहम् [ = अवलेपे ]

'अहम्' इति विभक्तिप्रतिरूपको निपातः। निपातोऽयं तत्तत् चादिपाठेषु न दृश्यते। 'अहमहमिका' इति पदग्रामो व्याचक्षाणेनाह क्षीरस्वामिना—'अहंशक्तोऽहं शक्त इत्यस्त्यस्यामहमहमिका। ठन्। अहम् शब्दो निपातः[2]' इति। सर्वानन्दस्याप्ययमे[3]व राद्धान्तः। निपातोऽयम् √कृ [ = करणे ] इति धातुनाऽपि युज्यते—अहङ्करोति[4] < अहम् + √कृ > अहङ्करोति—इति।

दृश्यते हि खल्वत्रापि सर्वनामपदस्य निपातकुक्षाववतारः। एतेन भोजव्याकरणकर्तुरयं सिद्धान्तः साधूपपद्यते—"निपातगणतो[5] ग्राह्या निपाता अपरेऽपि च" इति।

## (१०) : आके [ = समीपे ]

'आके' इति सप्तम्यन्तो विभक्तिप्रतिरूपको निपातः केवलम् ऋग्वेदस्य द्वयोर्मन्त्रयोः अन्तिकार्थे प्रयुक्तोऽवलोक्यते। पठितं च तत्र—"त्वमग्न[6] ऋभुराके नमस्यस्त्वं वाजस्य क्षुमतो राय ईशिषे" इति। विशदयति च मन्त्रममुं सायणाचार्यः—'हे अग्ने, त्वम् आके = अन्तिके सन्निधावेव नमस्यः = नमस्कार्यः' इति। परवर्तिवाङ्मये निपातस्यास्य व्यवहारः कृत्स्नतया स्थगितः।

## (११) : आत् [ = अनन्तरार्थे ]

'आत्' इति पञ्चम्यन्तो विभक्तिप्रतिरूपको वैदिको निपातः 'अनन्तरार्थे' विनियुक्तो दृश्यते। आचार्ययास्कमन्वस्य प्रसरोऽवरुद्धप्राय एव।

---

१. तै० ब्रा० २।५।३।६।
२. नामलिङ्गानुशासनम्–२।८।१०१।
३. तत्रैव।
४. महाभारतम्—अनुशा० प० २८।१३।
५. भोजव्याकरणम्—निपातप्रकरणम्–५।
६. ऋ० सं०२।१।१०—सायणभाष्यम्।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

एवं कुत्रचिदयं निपातः तदाशब्दार्थे[1] प्रयुक्तो दृश्यते, कुत्रचिदपि शब्दार्थे[2] कुत्रचिच्च पदपूरणार्थे[3] । मन्ये यद् भोजराजेन[4] स्वीयचादिगणे पठितः 'आदह < आत्+अह > आदह'– इति उपक्रमार्थीयो निपातः 'आत्' इति निपातसमूहिभूतः ।

अवेस्ताभाषानिपातेनाप्यस्य[5] संवादो दृष्टचरः––आत् > आअत् इति ।

## (१२) : आरात् [ =दूरार्थे ]

'आरात्' इति पञ्चम्यन्तो विभक्तिप्रतिरूपको निपातः सम्पूर्णे संस्कृतसाहित्ये येन केन प्रकारेण लब्धप्रसरः । वैदिकवाङ्मयेऽस्य भूयान् परामर्शो दृष्टचरः । लौकिके तु कार्पण्यं गतमस्य व्यवहारः ।

'आरात्' इति निपातस्य प्रयोगः सप्तम्यन्तत्वेन––'आरे[6]' इति रूपेणापि समुपलभ्यते । 'आरे[7]' इति सप्तम्यन्तो व्यवहारस्तु किलार्वाक्कालिकसाहित्येऽलब्धावकाशः । पाणिनिमनु केवलम् 'आरात्' इति पञ्चम्यन्तनिपातस्यैवानुपदं प्रयोगः सुलभः ।

## (१३) : आवह [ =प्रापणार्थे ]

'आवह' इति तिङ्प्रतिरूपको निपातः प्रापणार्थे विनियोजितः । व्याख्याति च कैयटः[8]–– 'केचित्तु आवहशब्दोऽपि निपात इत्याहुः' इति । मन्ये यद् धातु––आ+√वह > आवह–– निपातयोः समाहारभूतोऽयं निपातः ।

## (१४) : उवे [ =स्त्रीणामाह्वाने ]

'उवे' इति निपातः स्त्रीणामाह्वाने प्रयुक्तो दृष्टिपथमायाति ऋग्वेदे । यथोक्तम्–– "उवे अम्ब सुलाभिके यथेवाङ्ग भविष्यति[9]" इति । व्याकृतवान् मन्त्रममुं मुद्गलाचार्यः–– 'उवे इति निपात आभिमुख्यकृत् स्त्रीणाम्' इति । सायणाचार्योऽप्येवमेव व्याख्याति स्म । लौकिक-वाङ्मयेऽस्य व्यवहारो दुर्लभः ।

## (१५) : उच्चा [ =उपर्यर्थे ]

'उच्चा' इति विभक्तिप्रतिरूपको निपात उपर्यर्थे प्रयुक्तो दृश्यते श्रुतिवाङ्मये । अयमेव तृतीयाबहुवचने 'उच्चैः' इति रूपमाप । 'उच्चैः' इति बहुवचनान्तो निपातो वैदिक-लौकिको-

---

१. ऋ० सं० १।५१।४;८।३२।११––स्कन्दभाष्यम् ।
२. तत्रैव––१।६८।३ ।
३. तत्रैव––६।६७।१ ।
४. सरस्वतीकण्ठाभरणम्––१।१।१२५ ।
५. अवेस्ता–पृ० ४१।
६. ऋ० सं० १।१७२।२ ।
७. ह्विट्नी––सं० ग्रामर–पृ० ७६ ।
८. प्रदीपः––८।२।९१ ।
९. ऋ० सं० १०।८६।७–मुद्गलीया वृत्तिः ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

मयभाषयोर्निर्विशेषतया प्रयुज्यमानोऽवलोक्यते, किन्तु 'उच्चा' इति निपातस्य व्यवहारस्तु श्रुतिवाङ्मयमेवानुधावति।

तथा च तत्र परामर्शः—"वाजेवोच्चा वयसा घर्म्येष्ठा मेषो वेषा सपर्या पुरीषा"[1] इति। उपबृंहितवान् च मन्त्रममुं सायणः—'उच्चा=उच्चैर्वर्तमानः पुष्टावित्यर्थः। उच्चा–उच्चैः शब्दात् सुपो डादेशः। डित्वात् टिलोपः' इति। यद्यपि सायणाचार्येण 'उच्चा' इति निपातः 'उच्चैः' इत्यस्य प्रतिरूपत्वेन व्याख्यातः; किन्तु तृतीयैकवचनान्तोऽयं निपातः 'उच्चा' इति।

## (१६) : ऋधक् [ =पृथगर्थे ]

'ऋधक्' इति निपातः पृथगर्थको वैदिकसंहितासु। प्रायेणास्य परामर्श उपसर्गवत् कृतो वर्तते तत्र। मन्ये यद् वैदिकोऽयं निपात इति। तथा चोपन्यासस्तत्र—"यन्मा सावो मनुष आह निर्णिज ऋधक्कृषे दासं कृत्व्यं हव्यैः[2]" इति। समाजयति च प्रतिपादनमिदं सायणाचार्यः—'ऋधक्कृषे=पृथक्करोमि। ऋधगित्ययं पृथगर्थे निपातः' इति।

प्रायेणास्योपसर्गवत् संश्लेषः—√कृ, √जुष, √मज-प्रभृतिभिर्धातुभिः समाम्नातः। दुर्गाचार्यस्याप्ययमेव[3] राद्धान्तः।

## (१७) : कर्हि [ =कदाशब्दार्थे ]

'कर्हि' इति निपातो वैदिकसाहित्य एव लब्धावसरः। प्रायेणायं 'कदा' 'कस्मिन्' इत्यनयोरर्थयोः समुपलभ्यते। सभाजितं च सायणाचार्येण—"कर्हि=कस्मिन्नपि देशे काले वा इति। कर्हि इति निपातः[4]"।

'तर्हि', 'यर्हि', 'कर्हि' प्रभृतयो निपाताः 'र्हि' प्रत्ययान्ताः सर्वनामप्रतिरूपकाश्चापि। 'तर्हि' इति निपातस्तु लोक-वेदसामान्यः। 'यर्हि-कर्हि' इतीमौ तु वैदिकसाहित्ये समाम्नातौ। एषां किल प्रतिमोपचयस्तु मन्ये तत्, यत्, कत्–प्रभृतिसर्वनामपदेभ्य एवाजनि।

## (१८) : कीज [ =आश्चर्ये ]

'कीज' इति निपातोऽद्भुतेऽर्थे पठितो दृश्यते ऋक्संहितायाम्। तथा च श्रुतिः—"यः शक्रो मृक्षो अश्व्यो यो वा कीजो हिरण्ययः[5]" इति। पदमिदं सायणाचार्येणैवं व्याख्यातम्—'कीज इत्यद्भुतमाह। किमस्य कथं जात इति'। ऋग्वेदमन्वस्य व्यवहारः सर्वथा स्थगितः।

मन्ये यत् परवर्तिसाहित्ये विकसितः 'कीस' इति निपातः 'कीज' इति निपातस्यैव वर्णविकारमापन्नं रूपम्।

---

१. ऋ०सं० १०।१०६।५—सायणभाष्यम्।
२. तत्रैव—१०।४९।७।
३. निरुक्तम्—४।४—दुर्गवृत्तिः।
४. ऋ० सं०–८।७३।५—सायणभाष्यम्।
५. तत्रैव–८।६६।३।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

(१९) : कुह [ =क्वशब्दार्थे ]

'कुह' इति निपातो वैदिकवाङ्मये प्रायेण कुत्रार्थे[१] पठितः सन् दृष्टिपथमायाति। लौकिकसाहित्येऽस्य परामर्शोऽकिञ्चित्करः। एतदाभाति यद् 'कुह' इति निपातो निपातद्वय—कु+ह>कुह—समाहारभूतः।

अनुपाणिनिम् 'त्र' प्रत्ययान्तस्यैव 'कु' इति निपातस्य प्रयोगः कविभिः शाब्दिकैश्चाम्नातः।

(२०) : घ [ =एवार्थे ]

'घ' इति तनुतरो निपातो वैदिकभाषायां प्रायेण पादपूरणाय[२] व्यवहृतोऽवलोक्यते। एवार्थेऽप्यस्य[३] विनियोगो दृश्यते। कुत्रचिदयम् अप्यर्थे[४] चापि स्वीकृतो लक्ष्यते।

(२१) : चिश्चा [ =हासवचने ]

'चिश्चा' इति वैदिको निपातो हासवचनार्थे परामृष्टो ज्ञायते। ऋग्वेदेऽस्य व्यवहारः सकृद् दृश्यते। तथा चोक्तम्—"बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य[५]" इति। मन्त्रोऽयं व्याचक्षाणेनोक्तं स्कन्दस्वामिना—'चिश्चा कृणोति–चिश्चेति निपातो हासवचनः। हासमिव करोत्युद्घाटयमानः' इति। माधवाचार्योऽपि[६] सभाजयति तथ्यमिदम्। ऋग्वेदमन्त्रस्य प्रयोगः प्रायेणावरुद्ध इवावलोक्यते।

(२२) : छम्बट् [ =विनाशार्थे ]

'छम्बट्' इति निपातस्य विकासस्त्वर्वाक्कालिकः। तथाहि भागवते—"एषा घोरतमा सन्ध्या लोकच्छम्बट्करी प्रभो[७]" इति। संश्लोकयति च श्लोकममुं श्रीधरस्वामी—'छम्बडिति निपातो विनाशे वर्तते' इति।

(२३) : ताजक् [ =तदानीमित्यर्थे ]

'ताजक्' इति निपातः तैत्तिरीयसंहितायां तदानींशब्दार्थे प्रयुक्तः। ऋग्वेदसंहितायामस्य प्रसरो नावलोक्यते। तथाहि तैत्तिरीयो मन्त्रः—"श्रोत्राभ्यामात्मनोऽङ्गेभ्य आयुषोऽन्तरेति ताजक् प्रधन्वति[८]" इति। व्याक्रियते च मन्त्रोऽयं भट्टभास्करेणेत्थम्—'नतश्च ताजक्=तदानीमेव, अयं प्रधन्वति=प्रगच्छति=क्रियत इत्यर्थः। ताजक् इति निपातः' इति।

---

१. ऋ० सं०–१।२४।१०;५।७४।२।
२. तत्रैव–५।७६।८;८।३४।३।
३. तत्रैव–१।८२।४।
४. तत्रैव–१०।१०।३।
५. ऋ० सं० ६।७५।५—स्कन्दभाष्यम्।
६. ऋग्वेदानुक्रमणी—३।२।११।
७. भागवतम्—३।१८।२६—श्रीधरभाष्यम्।
८. तै० सं० ३।२।३—भट्टभास्करभाष्यम्।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

एवमेव मैत्रायणिसंहितायाम्[१], ताण्डयब्राह्मणे[२] चायं निपातोऽस्मिन्नेवार्थे पठितो दृश्यते ।

**(२४) : दोषा [ =रात्र्यर्थे ]**

'दोषा' इति वैदिको निपातो रात्रिवाचकः । प्रायेणायं निपातो दिवसवाचकेन 'वस्तोः' इति निपातेन सह सापेक्षमिव व्यवहृतोऽवलोक्यते । तथा च ऋग्वेदीयो मन्त्रः—"अयं द्योतयदद्युतो व्यक्तून् दोषावस्तोः शरद इन्दुरिन्द्रः[३]" इति । स्फोटयते च मन्त्रार्थः सायणाचार्येण—'दोषा=रात्रिम्, वस्तोः=दिवसम्, शरदः संवत्सरांश्च त्रिद्योतयत=व्यदीपयत्' इति । तैत्तिरीयेऽपि मिथो हिंसापेक्षत्वेनास्य विनियोगो दृश्यते । तथा च श्रुतिः—

"इह त्वा भूर्या चरेदुपत्मन दोषावस्तर्दीदिवांसमनुद्यून्[४]" इति । संश्लोक्यते च ऋगियं भट्टभास्करेण—'दोषावस्तरिति—पदसमुदायात्मको वा एको निपातः । "निपाता आद्युदात्ताः" ( फि० सू० ८० ) इति तस्याद्युदात्तत्वम्' इति ।

मन्ये यत्—'प्रदोषः < प्र + दोषा > प्रदोषः, प्रति + दोषा > प्रतिदोषम्' प्रभृतयो हि शब्दग्रामा निपातोपसर्गविभूताः । मोनियरविलियम्समहोदयस्याप्ययमेव[५] राद्धान्तः ।

**(२५) : द्वन्द्वम् [ =रहस्यार्थे ]**

'द्वन्द्वम्' इति रहस्यार्थको निपातः स्मृतिवाङ्मयमनुधावति । तथा च रामायणे[६]—

चोदितो राजसिंहेन मुनिर्वाक्यमभाषत ।
द्वन्द्वमेतत् प्रवक्तव्यं हितं वै यद्यपेक्षसे ॥ इति ।

विवृणोति च श्लोकममुं गोविन्दराजः—'द्वन्द्वशब्दो रहस्यार्थे द्विवचननिपातः । रहस्यमेतत् प्रवक्तव्यमित्यर्थः' । निपातस्यास्य विकासस्तु किलार्वाक्कालिक इति ।

**(२६) : पराचैः [ =पराङ्मुखे ]**

'पराचैः' इति निपातस्य व्यवहारो वैदिकसाहित्ये प्रायिको लौकिके तु क्वाचित्क इति । यथा—'उच्चैः', 'नीचैः' शनैः' प्रभृतयो विभक्तिप्रतिरूपका निपाताः, तथैव 'पराचैः' इति निपातोऽपि । व्यवहृतश्चायं श्रुतौ—"बाधेथां दूरं निर्ऋतिं पराचैः कृतम्[७]" इति । निरुवाच चेमाम् ऋचं सायणाचार्यः—'पराचैः=पराङ्मुखम्, दूरं बाधेयाम् । पराचैरिति निपातोऽयम् उच्चैर्नीचैरितिवत्' इति । [८]माधवभट्टेनाप्यूरीकृतो निपातत्वेनायम् ।

---

१. मै० सं०—४।८।९ ।
२. ताण्डयब्राह्मणम्—१७।१२ ।
३. ऋ० सं० ६।३९।३ ।
४. तै० सं०—१।२।१४ ।
५. संस्कृत इं० डिक्श० पृ० ४९८ ।
६. रामायणम्—७।१०३।१२ ।
७. अथर्ववेदः—७।४२।१—सायणभाष्यम् ।
८. ऋग्वेदानुक्रमणी—३।१।९ ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

मन्ये यत् 'पराचैः < परा + √अञ्च् > पराचैः' इति निपातो धातूपसर्गप्रतिरूपकः ।

(२७) : पुनः [ =अभ्यावृत्तौ ]

'पुनः' इति निपातो लोकवेदसाधारणः । चादिपाठेऽप्ययं नोपलभ्यते । वैदिकसाहित्ये त्वस्य परामर्शो निपातत्वेनैव विहितः । तथा चोपश्लोकयति श्रुतिः— "आदह स्वधामनु पुनर्गर्भत्वमेरिरे"[1] इति । व्याख्यातवान् च सायणाचार्यः—'प्रतिसंवत्सरमेवं कुर्वन्तीति दर्शयितुं पुनः शब्दः प्रयुक्तः । अनु–पुनः शब्दौ निपातावाद्युदात्तौ' इति । स्कन्दस्वामिना[2] त्वयं निपातोऽङ्गीकृतवीप्सार्थे व्याख्यातः ।

निपातोऽयं प्रायेण √इ, √गम, √या, √दा, √भू, √असप्रभृतिभिर्धातुभिर्योग उपसर्गवदपि प्रयुक्तोऽवलोक्यते । प्राकृतभाषायां[3] तु विलायम्—पुण < पुनः—इति रूपमपि गृह्णाति ।

(२८) : प्रायः [ =तपसि ]

'प्रायः' इत्यस्य निपातरूपेण परामर्शः किलार्वाक्कालिकः । ऋग्वेदसंहितायां 'प्रायः' इति निपातो न दृश्यते । तत्रैकस्याम् ऋचि 'प्राये-प्राये' इति शब्दो वीप्सया व्यवहृतो वर्तते । तथा च मन्त्रः— "उपे ज्येष्ठे वरूथे गभस्तौ प्राये-प्राये जिगीवांसः स्याम[4]" इति । विवृणोति चेमाम् ऋचम् सायणाचार्यः—'किं च प्राये-प्राये=सोमपानार्थमिन्द्रस्य यज्ञशालायां प्रवेशे प्रवेशे जिगीवांसः=शत्रूणां जेतारो भवेम' इति ।

सायणाचार्यस्यास्मिनुपबृंहणे—√अय [ =गतौ] इति धातोः, प्रोपसर्गस्य च योगेन—प्रायः < प्र + √अय > प्रायः—इति निपातस्योद्भवोऽङ्गीकृतो दृश्यते । सामविधानब्राह्मणेऽप्येतादृशं[5] व्याख्यानं द्रष्टुं पार्यते । व्याख्याति च सायणाचार्यः—'प्रायश्चितानाम्—आयः= प्राप्तिः, प्रकर्षेणायः प्रायः । विहितकर्माकरणस्य प्राप्तिरित्यर्थः । तत्प्रतिकारविषयं चित्तम्—चित्तिर्ज्ञानम् । तत्पूर्वानुष्ठानानि प्रायश्चित्तानि' इति । अस्मिन्नपि व्याख्याने विहितकर्मणः प्रकर्षेणायः=प्राप्तिः, प्रायः शब्देन निभालितः ।

अतो ज्ञायते यदस्य निपातस्य प्रसवस्तु धातूपसर्गास्कन्दनेनैवोपपन्नः । आङ्गिरसस्मृतौ तु 'प्रायः' इति निपातः तपोवाचकत्वेन स्वीकृतो दृश्यते । तथा हि श्लोकः—

प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते ।
तपो निश्चयसंयोगात् प्रायश्चित्तमितीर्यते[6] ॥

---

१. ऋ० सं०—१।६।४—सायणभाष्यम् ।
२. तत्रैव—स्कन्दभाष्यम् ।
३. प्राकृतमणिदीपः—२।८ ।
४. ऋ० सं०—२।१८।८ ।
५. सा० वि० ब्रा०—१।५।१ ।
६. आङ्गिरसस्मृतिः—२।४ ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

शतपथब्राह्मणस्य व्याख्यानप्रसङ्गे तु सायणाचार्येण 'प्राय:' इति निपातो विनाशार्थे व्याख्यात:—'प्रायो विनाशः । तस्य चित्तिः = सन्धानं यस्येति तथाविधो बभूव[१]' इति ।

हरदत्तमिश्रेण तु 'प्रायेण' इति शब्दो विभक्तिप्रतिरूपकनिपातत्वेन व्याख्यात:—'केचित् प्रायेणशब्दो विभक्तिप्रतिरूपको निपातो ज्ञातव्यमित्यस्यार्थे वर्तते इत्याहुः । दृश्यते च—प्रायेण सामग्र्यविधौ गुणानामिति[२]' । महावीरचरितेऽपि[३] एतादृशमेव व्याख्यानमवलोक्यते ।

इत्थं स्वतःप्रमाणभूतानामेतेषां सन्दर्भाणामनुसन्धानेनैतद् निष्कृष्यते यत्—यदि 'प्रायेण' इति शब्दः तृतीयाविभक्तिप्रतिरूपको निपातः, तर्हि ऋग्वेदीयोऽपि 'प्राये' इति शब्दः सप्तमी-विभक्तिप्रतिरूपको निपात एव । दृश्यते हि संस्कृतवाङ्मये विभक्तिभेदेन निपातभेदः । तद्यथा—चिरेण, चिराय, चिरस्य इत्यादिः ।

प्राकृतभाषायामप्यस्य[४] रूपापभ्रंशस्तु दृष्टचर एव । यथा—प्रायः > प्राउ > प्राइव > प्राइम्ब > पगिम्ब—इति ।

(२९) फट् : [ = क्रौर्य ]

'फट्' इति निपातोऽभिचारे, गुह्यानुष्ठाने चाभियोजितः । गुह्यतान्त्रिकपरम्परायामस्य विनियोगः पुरश्चरणेऽपि दृश्यते । तथा चोक्तम्—

हृदयाशिरसोः शिखायां कवचाक्ष्यस्त्रेषु सह चतुर्थीषु ।
नत्या हुत्या च वषट्-हुम्-वौषट्-फट्पदैः षडङ्गविधिः[५] ॥

सायणाचार्येण तु फट्निपातस्य व्युत्पत्तिः प्रदर्शयतोक्तं यत्—'एतद् नामा शत्रुः हतः सन् फट् = विशीर्यताम् । ञि फला विशरणे ( पा० धा० ५१८ ) इत्यस्य क्विपि डलयोरभेद-श्छान्दसः । अभिचारे स्वाहाकारस्य स्थाने 'फट्' इति प्रयुज्यत एव । वषड् वश्ये षडुच्चाटे, फट् द्वेष्ये पौष्टिके स्वधा' इति वचनात्[६]' इति ।

सायणाचार्यस्य निरुक्तिरियं साध्वी प्रतिभाति । यतो हि पुरश्चरणे, गुह्यक्रियासु, अभि-चारे वाऽस्य विनियोगस्तु विशरणमूलक एव । गोपीनाथभट्टस्तु[७] सर्ववाचः क्रौर्योपलक्षणत्वेन निपातममुं व्याख्यातवान् । तद्यथा -'फडिति सर्ववाचः क्रूराणामुपलक्षणम्' इति । एवं सायणा-चार्यस्य निरुक्तिः सत्यापयति केवलं धातोरेव निपातस्य जन्म ।

---

१. शतपथब्रा० ५।५।४।८—सायणभाष्यम् ।
२. पदमञ्जरी—२।३।१८ ।
३. महावीरचरितम्—४।२५ ।
४. प्राकृतशब्दानुशासनम्—३।३।४२ ।
५. नित्याषोडशिकार्णवः—१।१२८ ।
६. शतपथब्रा० ४।१।१।२६—सायणभाष्यम् ।
७. सत्याषाढश्रौतसू० १०।७।२२—गोपीनाथभट्टव्याख्या ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

### (३०) : वट् [ =सत्यार्थे ]

'वट्' इति निपातः सत्यार्थे व्यवहृतो दृश्यते। वैदिकसाहित्यमेवास्य प्रसरभूमिः। न हि लौकिकसाहित्येऽस्य परामर्शो विहितः। श्रुतिसाहित्ये 'वट् इत्था' इति द्वौ निपातौ प्रायेण सापेक्षाविति। अर्थस्तूभयोः समान एव; तदपि किलानयोर्मापिकः प्रयोगः सहैव दृष्टः। तथा च मन्त्रः--"वलित्था महिमा वामिन्द्राग्नी पनिष्ठ आ[१]" इति। व्याक्रियते च स्कन्दस्वामिना--'वट्-इत्था इति द्वयोः सत्यनाम्नोः। अभ्यासे भूयांसमर्थं मन्यन्ते ( या० १०।४२ ) इति। अर्थभूयस्त्वेनापौनरुक्त्यम्। सत्यं महिमा वाम् = युवयोः' इति।

एवं समानार्थयोर्निपातयोः सहैवैकत्र प्रयोगविषये सायण[२]–उव्वट[३]–महेश्वर[४]–दुर्ग[५]–प्रभृतीनामप्ययमेव परामर्शः।

### (३१) : बलात् [ =हठार्थे ]

'बलात्' इति पञ्चमीविभक्तिप्रतिरूपको निपातो हठार्थे पठितो दृश्यते। प्रमाणयति च क्षीरस्वामी— बलादिति निपातो हठार्थः। हठप्लुतिशठत्वयोः[६]' इति। ऋग्वेदसंहितायामयं निपातः सकृत् व्यवहृतो दृश्यते। तथा च श्रुतिः—"त्वमिन्द्र बलादधि सहसो जात ओजसः[७]" इति। यद्यपि सायणाचार्येण कण्ठतोऽस्य व्याख्या निपातत्वेन न कृता, तथापि प्रसङ्गस्तु तादृश एव।

वैदिकसाहित्ये सङ्कुचितप्रसरो ह्ययं लौकिकवाङ्मये भृशं परामृश्यते।

### (३२) : बस्रिः [ = क्षिप्रार्थे ]

'बस्रिः' इति निपातः क्षिप्रार्थे पठितो दृश्यते ऋक्संहितायाम्। तथा हि ऋक्—"उभा ता बस्रि नश्यतः[८]" इति। व्याख्यायते च मन्त्रोऽयं स्कन्दस्वामिना—'बस्रि निपातोऽयं क्षिप्रार्थः। बस्रि = क्षिप्रम्' इति। [९]माधवभट्टेनाप्येवमेव व्याख्याऽकारि। ऋग्वेदमनु सर्वथाऽस्य प्रयोगो लुप्तः।

### (३३) : भोस् [ = आमन्त्रणे ]

'भोस्' इति निपातः पाणिनिचादिपाठेऽपरिसङ्ख्यातः। भोजराज-हेमचन्द्रप्रभृतीनां चादिपाठेऽयमुपात्तोऽवलोक्यते। वैदिकवाङ्मयेऽयमप्रयुक्त इवाभाति। हरदत्तमिश्रेण प्रतिपादितं

---

१. ऋ० सं० ६।५९।२—स्कन्दभाष्यम्।
२. तत्रैव—८।१०।११।
३. शुक्लयजुर्वेदः—३३।३९—उव्वटभाष्यम्।
४. निरुक्तम्—१०।२—महेश्वरव्याख्या।
५. तत्रैव—३।१—दुर्गव्याख्या।
६. नामलिङ्गानुशासनम्—२।८।१०८।
७. ऋ० सं० १०।१५३।२।
८. ऋ० सं० १।१२०।१२, स्कन्दभाष्यम्।
९. ऋग्वेदानुक्रमणी—३।१।५।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

यत्—भवेन्नाम चादिपाठेऽपरिसङ्ख्यानमस्य, किन्तु सौत्रोऽयं निपात इति। सौत्राश्च निपाता अङ्गीकर्तव्या एव। तथा हि पदमञ्जर्याम्—"तस्मादसम्बुद्धौ स्त्रियां च दर्शनाद् निपाता एवेति विज्ञेयम्। निपातत्वञ्च विभक्तिस्वरप्रतिरूपकत्वेनेति। नन्वसत्यस्मिनुपसङ्ख्याने 'भो' इत्यादिकः शब्दो विभक्त्यन्तो नास्ति, यत् प्रतिरूपका एते स्युः। तस्मात् सौत्रा एते निपाताः[1]" इति।

आचार्यहरदत्तमिश्रस्य प्रतिपादनमिदं सङ्केतयति—'इयन्त इति सङ्ख्यानं निपातानां न विद्यते' इत्यमुं सिद्धान्तम्। अतः प्रतिपादनेनैतेन त्रयाणामपि —भोस्–भगोस्–अघोस्- इत्येतेषां निपातत्वं सिद्धयति।

**(३४) : मनाक् [ = स्तोकार्थे ]**

'मनाक्' इति स्तोकार्थको निपातः श्रुतिस्मृत्युभयवाङ्मयलब्धप्रसरः। मन्ये यदयं निपातो नाम–धातु–मना + √अञ्च् > मनाक्–समाहारभूतः। [2]मोनियरविलियम्स-महोदयस्येदमेव हार्दम्।

ऋग्वेदसंहितायां तु नुमागमोऽप्यनेनानुभूयते—मनाक् > मनानक् इति। तथा हि तत्रत्यो मन्त्रः—"मनानग्रेतो जहतुर्वियन्ता सानौ निषिक्तं सुकृतस्य योनौ[3]" इति। व्याख्यातवान् मन्त्रममुं स्कन्दस्वामी—'मनानक् इति निपातः। छान्दसो नुमागमः' इति। [4]प्राकृतभाषायां त्वस्य विकासः—मनाक् > मंणाई > मंणा–इति रूपेणोपपन्नः।

**(३५) : ममत् [ = बलवदित्यर्थे ]**

'ममत्' इति विभक्तिप्रतिरूपको निपातः। ऋग्वेदसंहितायामस्य वीप्सया व्यवहारो दृश्यते। तत्रार्थभूयस्त्वायास्यासकृदभ्यस्य प्रयोगः सङ्केतयति किलार्थप्रवाहम्। तथा च मन्त्रः—

ममच्चन त्वा युवतिः परासः ममच्चन त्वा कुषवा जगार।
ममच्चिदापः शिशवममृड्युर्ममच्चिदिन्द्रः सहसोदतिष्ठत्[5]॥

अत्र 'ममत्' इति निपातस्य व्याख्या प्रमत्तार्थेऽकारि सायणाचार्येण। महाभारतेऽप्यस्योपन्यास उपलभ्यते—

यदा विराटः परवीरघाती ममत्तरे शत्रुचमुं प्रवेष्टा।
मत्स्यैः सार्धमन्तशंसरूपैस्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत्[6]॥

व्याख्यातश्च श्लोकोऽयं भट्टनीलकण्ठेन—'ममत्तरे = बलवत्तरे। ममदिति निपातो बलवद् वाचकः' इति। परवर्तिवाङ्मयेऽस्य परामर्शः स्थगित इव भाति।

---

१. पदमञ्जरी–८।३।१।
२. संस्कृत–इंग्लि० डिक्श० पृ० ७८४।
३. ऋ० सं० १०।६१।६।
४. अशोकके अभिलेख–कालसी–१।५।६।
५. ऋ० सं०–४।१८।८।
६. महाभारतम्–उद्योगप० ४८।३७।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

### (३६) : रात्रिंदिवम् [ = सततमित्यर्थे ]

'रात्रिंदिवम्' इति निपातो द्वयोः संज्ञापदयोराश्लेषजन्यः—रात्रौ च दिवा च रात्रिंदिवम्—इति । निपातोऽयं वैदिकसंहितासु नोपलभ्यते । रामायणेऽयं शब्दो निपातत्वेनोपात्तो दृश्यते—

तद् वियोगेन्धनवता तच्चिन्ताविपुलार्चिषा ।
रात्रिंदिवं शरीरं मे दह्यते मदनाग्निना[1] ॥

व्याख्याति च पद्यमिदं तिलकः—'रात्रिंदिवमिति निपातः सततमित्यर्थे' इति । रघुवंशमहाकाव्येऽप्यस्योपलब्धिर्दृश्यते निपातत्वेन—

रात्रिंदिवं विभागेषु यदादिष्टं महीक्षिताम् ।
तत् सिषेवे नियोगेन स विकल्पपराङ्मुखः[2] ॥

श्लोकोऽयं व्याचक्षाणेनोक्तं मल्लिनाथेन—"रात्रौ च दिवा च रात्रिंदिवम् । "अचतुर" ( पा० ५।४।७७ ) इत्यादिनाधिकरणार्थे द्वन्द्वेऽच्प्रत्ययान्तो निपातः" इति ।

इत्थं प्रमाणाभ्यामुभाभ्यां किलैतद् निष्कृष्यते यद् निपाता हि नाम–धातु–प्रातिपदिक–प्रत्यय–स्वरप्रतिरूपकाश्च भवन्तीति ।

### (३७) : वाव [ = प्रसिद्धौ ]

'वाव' इति निपात ऐतिह्यार्थे, निश्चये चापि प्रयुक्तो दृश्यते । तथा हि भागवते—"यर्हि वाव ह राजन् स राजपुत्रः प्रियव्रतः[3] ' इति । व्याख्यातश्च श्लोकोऽयं श्रीधरस्वामिना—'वावेति निपातः प्रसिद्ध्यादौ' इति । अन्यत्र स एव निश्चयार्थेऽपि[4] व्याख्यातवान् 'वाव' इति निपातम् ।

लौकिकवाङ्मये, विशेषत आलङ्कारिकसाहित्ये निपातोऽयं न परामृष्टो दृश्यते । अस्य प्रसरभूमिस्तु वैदिकीभाषैव ।

### (३८) : विभाषा [ = विकल्पार्थे ]

'विभाषा' इत्यस्य निपातस्य विकास्त्ववर्वाक्कालिकः । वैदिकवाङ्मयेऽयं निपातोऽलब्धावकाशः । निपातस्यास्योद्भवस्तु धातूपसर्गसंसर्गेणैवोपपन्नः—वि + √भाष > विभाषा—इति । अस्य विनियोगस्तु समुच्चयार्थे, विकल्पार्थे, अन्यतरयोगव्यवच्छेदे च विहितः । तथा चाह न्यासकारः—'विभाषाग्रहणं च्वेः प्रापकमिति । समुच्चयार्थत्वात् । समुच्चयार्थत्वं त्वनेकार्थत्वान्निपातस्य । यद्येवम्, पकार एव कस्मान्नोह्यः ? वैचित्र्यात् 'सूत्रकृतेः' इति ।

---

१. रामायणम्–६।५।८ तिलकटीका ।
२. रघुवंशम्–१७।४९–मल्लिनाथव्याख्या ।
३. भागवतम्–५।१।६ –श्रीधरव्याख्या ।
४. भागवतम्–५।१।२३ –श्रीधरव्याख्या ।
५. अष्टाध्यायी–५।४।५२ –न्यासवृत्तिः ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

धातूपसर्गसंसर्गसम्भवोऽयं निपात ऐतिहासिकदृष्ट्या सर्वप्रथममष्टाध्याय्यामेव निपातत्वेनालोचितः ।

## (३९) : विश्वाहा [ =सर्वदाशब्दार्थे ]

'विश्वाहा' इति निपातो वैदिकवाङ्मय एव निपातत्वेन प्रयुक्तो दृश्यते । निपातस्यास्योद्भवस्तु 'विश्वः' इति सर्वनाम—'अहः' इति नामशब्दाभ्यामुपपन्नः । नाम-सर्वनामशब्दाभ्यां प्रसूतोऽयं निपातः सर्वेष्वहःस्वित्यस्मिन्नर्थे पुरस्कृतः । समाजयति च श्रुतिः—"स नो विश्वाहा सुक्रतुरादित्यः सुपथा करत्[1]" इति । व्याक्रियते चेयमृक् स्कन्दस्वामिना—'विश्वाहा निपातोऽयं सर्वेष्वहःस्वित्यस्मिन्नर्थे वर्तते । विश्वाहा = सदा' इति । [2]सायणाचार्यस्याप्ययमेवाभिनिवेशः ।

निरुक्तिस्त्वस्य–विश्व + अहः > विश्वाहा–इत्येवंरूपेण प्रदर्शिता । 'विश्वाहा' इत्यस्मिन् निपातेऽवयवभूतो 'विश्वः' इति सर्वनाम शब्दः सर्वशब्दार्थवाचकः । तथा हि ऋग्वेदीयो मन्त्रः— "अरिष्टः स मर्तो विश्व एधते प्र प्रजाभिर्जायते धर्मणस्परि[3]" इति । समालोचितश्च सायणाचार्येण—'हे देवाः, विश्वः = सर्वः, मर्तः सः मनुष्यः अरिष्टः एधते' इति ।

[4]मोनियरविलियम्समहोदयस्तु विश्वशब्दस्योद्भवः √विश [ = प्रवेशने ] इति धातोः स्वीकरोति । स वक्ति यद् 'विष्णुः' इति शब्देऽपि 'विश्वः' इति व्यापकार्थस्य पदस्योपश्लेषः स्वीकार्यः ।

## (४०) : सचा [ =सङ्गीभावे ]

'सचा' इति वैदिको निपातः सहायार्थे, सङ्गीभावे च व्यवहृतः । तथा हि ऋक्— "ये ते विप्रब्रह्मकृतः सुते सचा वसूनां च वसुनश्च दावने[5]" इति । उपश्लोकयामास च मन्त्रममुं सायणाचार्यः—'सचा = सङ्गीभूताः' इति । सहायार्थे चाप्यस्य व्यवहारः समुपलभ्यते । समादधाति सायणः—'सचा = सहायः, प्रमे = लोकान् प्रमातुम् अवतिष्ठते' इति । 'सचा' इति निपातस्य सहायार्थं पुरस्करोति दुर्गाचार्योऽपि—'सचा इत्यप्रतीतार्थो निपातः सहेत्यर्थप्रतीतिः' ।

निपातस्यास्य व्यवहारः √भू [ =सत्तायाम् ] इति धातुना सहोपसर्गवदपि दृश्यते । तथा हि श्रुतिव्याहारः—"आ शर्म पर्वतानां वृणीमहे नदीनाम् । आ विष्णोः सचाभुवः" इति ।

बहुत्र ऋक्संहितायामयं[6] नामधातुवदपि प्रयुक्तो दृश्यते । इत्थं वैदिकवाङ्मये बहुपुरस्कृतोऽयं निपातः क्रमशः प्रयोग कार्पण्यमाप ।

---

१. ऋ० सं०–१।२५।१५, स्कन्दभाष्यम् ।
२. ऋ० सं० ४।४३।१०, सायणभाष्यम् ।
३. तत्रैव० १०।६३।१३ ।
४. संस्कृत–इंङ्गलिश–डिक्श० पृ० ९९२ ।
५. ऋ० सं० १०।५०।७, सायणभाष्यम् ।
६. तत्रैव–६।५५।१, सायणभाष्यम् ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

## (४१) सदम् [ =सर्वदाशब्दार्थे ]

'सदम्' इति विभक्तिप्रतिरूपको निपातो वैदिक साहित्ये सदाशब्दार्थे प्रयुक्तो दृश्यते। तथा चोपश्लोकयति श्रुतिः—"त्वेषासो अग्नेरवमन्तो सदमिद्यातुमावतो[1]" इति। सुस्पष्टयति च मन्त्रममुं स्कन्दस्वामी—'सदम्' शब्दः सदाशब्दपर्यायः' इति। सायणाचार्यस्याप्ययमेव[2] राद्धान्तः।

वस्तुतस्तु 'सदम्-सदा' इत्युभावपि निपातो द्वितीया-तृतीयाविभक्तिप्रतिरूपकौ। वैदिक-वाङ्मय उभयोः परामर्शः खलु निर्विशेषेणोपलभ्यते। लौकिके तु 'सदा' इति निपातस्यैव प्रयोगः सभाजितः।

## (४२) : सा [ =प्रसिद्ध्यर्थे ]

'सा' इति प्रसिद्ध्यर्थको निपातः सर्वनामप्रतिरूपकः। आचार्यैरुक्तं यत्—विभक्ति-स्वर-उपसर्गप्रतिरूपकाश्च निपाता भवन्तीति, किन्तु ऋचां निरीक्षणादेतद् वक्तुं प्रभवामो यद् नाम-सर्वनाम-आख्यातप्रतिरूपकाश्चापि निपाता भवन्तीति। प्रमाणयति च श्रुतिः—"सो चिन्नु मराति न वयं मरामरे[3]" इति। व्याख्यायते च मन्त्रोऽयं सायणेन—'सा उ इति निपातद्वय-समुदायः एकं पदम्' इति।

## (४३) : साम् [ =शोभार्थे ]

'साम्' इति निपातो लोकवेदसाधारणः। 'साम्राज्यम्' इति पदे 'साम्' इति निपातो-ऽवयवभूतः। यद्यपि किलाचार्या वदन्ति 'साम्राज्यम्' इत्यस्मिन् पदे 'सम्' इत्युपसर्ग एव वृद्धिमापन्नः, किन्तु तैत्तिरीयप्रातिशाख्ये तु 'सम्-साम्' इत्यनयोः पृथक् पृथक् परिसङ्ख्यानं दृश्यते। तथा च तत्रत्यं सूत्रम्—"न संसामिति रात्परः[4]" इति। सूत्रमिदं व्याचक्षाणेनोक्तं सायणाचार्येण—'सम्-साम्-इत्येतयोर्ग्रहणयोर्मकारो न लुप्यते। यथा प्र सम्राजम्, साम्राज्याय सुक्रतुः' इति। तैत्तिरीयसंहिताव्याख्यातुर्भट्टभास्करस्याप्ययमेव[5] समयः। सन्दर्भाभ्यामाभ्याम-नयोर्भेदः संसूच्यत एव।

## (४४) : सामि [ =अर्धशब्दार्थे ]

'सामि' इत्ययं निपातः सप्तमीविभक्तिप्रतिरूपकः। अस्य परामर्शभूमिस्तु विशेषतो वैदिकी भाषैव। क्वाचित्को व्यवहारोऽस्य लौकिक्यामपि विहितः। वैदिकवाङ्मयेऽस्य द्वावर्थौ-वुपलभ्येते—क्वचिद् अर्धशब्दार्थे क्वचिच्च मध्यार्थे। आद्यो यथा—"उत यो मानुषेष्वा यशश्चक्रे

---

१. ऋ० सं० १।३६।२०—स्कन्दभाष्यम्।
२. तत्रैव—४।४।१३—सायणभा०।
३. तत्रैव—१।१९१।११—सायणभा०।
४. तैत्तिरीयप्रातिशाख्यम्—१३।४।
५. तै० सं० १।८।१६—भट्टभास्करभाष्यम्।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

असाम्या[1]" इति । तथा हि स्कन्दस्वामिभाष्यम्—'असामि-सामि निपातोऽर्धवचनः । असामि= अनर्धम्, प्रभूतमित्यर्थः' इति ।

मध्यार्थो यथा—"सामि ह्यस्मै स ग्लायति स यथा[2]" इति । स्फोटयामास च मन्त्रममुं सायणः—'सामि=मध्ये सामिशब्दो निपातः' इति ।

इत्थं वैदिकवाङ्मये द्व्यर्थकोऽयं लौकिकवाङ्मय एकार्थश्चोपपन्नः । प्रयुनक्ति च कविकुलगुरुः कालिदासः—

पश्य पार्वति ! नवेन्दुरश्मिभिः सामिभिन्नतिमिरं नभस्तलम् ।
लक्ष्यते द्विरदभोगदूषितं संप्रसीददिव मानसं सरः[3] ॥

श्लोकेऽस्मिम् प्रयुक्तं सामीति निपातमर्धार्थं एव व्याख्यातवान् नारायणः ।

## (४५) : सुमत् [ =स्वयंशब्दार्थे ]

'सुमत्' इति वैदिको निपातः प्रायेण स्वयंशब्दार्थे विनियोजितः । तद्यथा—"क्षेत्रादयश्यं सनुतश्चरन्तं सुमद्यूथं न पुरुशोभमानम्[4]" इति । उपबृंहितवान् च मन्त्रममुं सायणः—'सुमत्= स्वयमेव, पुरु=बहुशोभमानम्' इति । निरुक्तकर्तुरप्ययमेवाभिप्रायः—'सुमत्=स्वयमित्यर्थः'[5] इति ।

क्वचिदयं निपातः कल्याणार्थे, क्वचिच्च शोभनार्थेऽपि[6] व्यवहृतो दृश्यते । तथा हि श्रुतिः—"जाया पतिं वहति वग्नुना सुमत् पुंसं इद् भद्रो वहतुः परिष्कृतः[7]" इति । सायणोऽपि अटीकिष्ट—'जाया=पत्नी, पतिम् सुमत्=कल्याणेन वग्नुना=वाग्रूपेण शब्देन वहति' इति ।

परवर्तिसाहित्ये निपातस्यास्योपन्यासः सर्वथाऽवरुद्धः ।

## ( ४६ ) : स्यात् [ =सज्जेदित्यर्थे ]

'स्यात्' इति तिङन्तप्रतिरूपको निपातो विविधेष्वर्थेषु व्यवहृतो दृष्टिपथमायाति । वैदिकवाङ्मयेऽस्य व्यवहारो निपातत्वेनानालोचितः । निपातरूपेणास्य विकासोऽर्वाक्कालिकः । 'सज्जेत्' इत्यस्मिन्नर्थेऽस्य प्रयोगो दृश्यते महाभारते—

"यशो न नश्येज्ज्ञातिभेदश्च न स्याद् धर्मो न स्यान्नैव चैवं कृते[8] त्वाम्" ।

व्याख्यातश्च श्लोकोऽयं नीलकण्ठभट्टेन—'स्यादिति निपातः सज्जेदित्यर्थे' इति । धनञ्जयस्तु किलानेकेष्वर्थेषु पठति निपातममुम्—

---

१. ऋ० सं० १।२५।१५—स्कन्दभा० ।
२. श० ब्रा० १।३।१।२०—सायणभा० ।
३. कुमारसम्भवम्—८।६४ ।
४. ऋ० सं० ५।२।४—सायणभाष्यम् ।
५. निरुक्तम्—६।२२ ।
६. ऋ० सं० ८।८७।४—सायणभा० ।
७. तत्रैव—१०।३२।३—सायणभा० ।
८. महाभारतम्—वनप० ४।८ – नीलकण्ठव्याख्या ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

'अनेकान्ते च विद्यादौ स्यान्निपातः श्रुते क्वचित्[1]'। इति

विवृतश्च कोषश्लोकोऽयम् अमरकीर्तिना—'स्यात् इत्याकारको निपात एतेष्वर्थेषु भवेत्' इति। दक्षिणावर्तनाथेन तु निपातोऽयं यद्यर्थे व्याख्यातः—'स्यात् इत्याख्यातप्रतिरूपको निपातो यद्यर्थे वर्तते[2]' इति।

उत्तरोत्तरं 'स्यात्' इति निपातो लौकिकसंस्कृतसाहित्ये व्यवहारदृशा प्रायिकः सञ्जातः।

## (४७) : स्वाम् [=स्वीकरणार्थे]

'स्वाम्' इनि निपातो वैदिकः स्वीकरणार्थेऽङ्गीकरणार्थे वा प्रयुक्तः। द्वितीयाविभक्ति-प्रतिरूपकोऽयं निपातः। 'स्वः' इति निपातस्तु विदितचर एव। तस्यैव द्वितीयाविभक्त्यन्तोऽयम्। तथा हि तैत्तिरीये—"स्वाङ्कृतोऽसि मधुमतीर्न इषस्कृधि[3]" इति। व्याख्यातवान् चामुं मन्त्रं भट्टभास्करः—'स्वाङ्कृतोऽसि=स्वीकृतोऽसीत्यर्थः। अस्वः स्वो भवतीति स्वाम् इति निपातः' इति। मन्त्रेऽस्मिन् किलायमुपसर्गवद् व्यवहृतः।

## (४८) : हये [=आमन्त्रणार्थे]

'हये' इति वैदिको निपात आमन्त्रणे प्रयुक्तोऽवलोक्यते। स्कन्दस्वामिना तु 'हेयः' इति शब्दार्थेऽयं व्याख्यातः—'हये इति निपातो हेयशब्दपर्यायः[4]' इति। तत्रैव माधवभट्टेनायम् आमन्त्रणार्थे व्याकृतः। शतपथब्राह्मणे सायणाचार्येण किलास्य साध्वी व्याख्याऽकारीति—"अभिमुखीकरणार्थं 'हे' शब्दं प्रयुञ्जानः 'हये' इति विपर्ययं प्रयुक्तवान्[5]" इति।

एवंविधानि व्यवहारस्थलानि स्मारं स्मारमेवोक्तम्—"वर्णागमो वर्णविपर्ययश्च" इति।

ऋग्वेदव्याख्यानेऽपि सायणाचार्येणास्मिन् निपाते वर्णोपजन उररीकृतः। यद्यथा—"हये देवाः। छान्दसो वर्णोपजनः। हये देवाः=हे देवाः[6]" इति। औत्तरकालिके संस्कृतवाङ्मये 'हये' इति निपातस्य व्यवहारः सर्वथोपरुद्धः।

## (४९) : हिरुक् [=विनार्थे]

'हिरुक्' इति वैदिको निपातो विनाशब्दार्थे व्यवहृतो दृश्यते। प्रमाणयति च श्रुतिः—"य ईं चकार न सो अस्य वेद, य ईं ददर्श हिरुगिन्नुतमात्[7]" इति। विमृष्टश्च मन्त्रोऽयं स्कन्द-स्वामिना—'हिरुग् इत्यन्तर्हितनाम' इति। हरदत्तमिश्रेणाप्ययं [8]विनार्थ एव व्याख्यातः—'हिरुक्-पृथक्शब्दौ विनार्थे' इति। परिवर्तितवाङ्मयेऽस्य भाषिक उपयोगः प्रायेणावरुद्धः।

---

१. अनेकार्थनाममाला ४४—अमरकीर्तिभाष्ययुता।
२. मेघसन्देशः—२।१५।
३. तै० सं०—१।४।२—भट्टभास्करभाष्यम्।
४. ऋ० सं० ५।५७।८—स्कन्दभाष्यम्।
५. श० ब्रा० ५।५।१।६—सायणभाष्यम्।
६. ऋ० सं० २।२९।४–सायणभाष्यम्।
७. तत्रैव–१।१६४।३२–स्कन्दभाष्यम्।
८. पदमञ्जरी-३।४।६२।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

( ५० ) : हुरुक् [ =कुटिलार्थे ]

'हुरुक्' इति वैदिको निपातः कुटिलार्थे विमृष्टः। सभाजयति च श्रुतिः—"महां अदब्धो वरुणो हुरुग्यते[1]" इति। तथा हि व्याख्याति सायणाचार्यः—'हुरुक्=कुटिलं यते=गच्छते' इति। अस्योपयोगस्त्वत्रोपसर्गवत् कृतः-हुरुक्+√यत् [=प्रयत्ने] > हुरुग्यते—इति।

( ५१ ) : हंहो [ =आश्चर्ये ]

'हंहो' इति निपात आश्चर्यार्थकः। मन्ये यद् निपातद्वय—हम्+हो > हंहो—समाहारभूतोऽयम्। वैदिकसाहित्येऽस्योपन्यासोऽदृष्टचर इव भाति। लौकिकेऽयमाश्चर्यार्थे प्रयुक्तो दृश्यते। तथा हि महाभारते—

"हंहो वेदा यदि मता धर्माः केनापरे मताः[2]"। इति।

उपश्लोकयामास मन्त्रममुं नीलकण्ठाचार्यः—'हंहो इति विस्मये निपातः' इति। विष्णुविलासव्याख्यात्रा श्रीरामपाणिवादेनापि खल्वयं किलाश्चर्ये व्याख्यातः—'हंहो=आश्चर्यमिदम्। आश्चर्यार्थकोऽयं निपातः[3]' इति।

इत्थमुपरिष्टादेकपञ्चाशन्निपातानाम् आनुसन्धानिकः परामर्शो विहितः। इमे हि खलु विविधेषु शाब्दिकगणपाठेष्वनालोचिताः, भाषाक्रोडादुद्धृताश्च।

संस्कृतभाषायां निपातानामैतिहासिकविकासक्रमान्वेषण उपलब्धानि चित्रप्रधानानि तथ्यानि। कुत्रचिद् निपाता उपसर्गप्रतिरूपकाः, कुत्रचित् स्वरप्रतिरूपकाः, कुत्रचिद् विभक्तिप्रतिरूपकाः, कुत्रचित् प्रत्ययप्रतिरूपकाः, कुत्रचित् सान्धिकाः, कुत्रचिद् मनोरागरूपरूषिताः, कुत्रचिद् नामधात्वाकृतिकाः, कुत्रचित् कर्मकारकान्विताः, कुत्रचित् करणकारकान्विताः, कुत्रचित् सम्प्रदानकारकान्विताः, कुत्रचिद् अपादानकारकान्विताः, कुत्रचित् सम्बन्धकारकान्विताः, कुत्रचिच्चाधिकरणकारकान्विताश्चोपबृंहिताः।

सर्वविधानां निपातानां स्वातन्त्र्येण दृश्यन्ते रूपप्रतिमाः, अर्थप्रतिमाश्च। संस्कृतवाङ्मये शनैःशनैः निपातानां प्रयोगे दृश्यते कार्पण्यम्। वैदिकवाङ्मये यथैतेषां व्यवहारेऽवलोक्यते पदपदार्थस्वातन्त्र्यम्, न तथौदार्यमस्ति महामुनिपाणिनेः पश्चात्। वैदिकभाषाया लोकबोद्धृत्वे तत्त्वचिन्तागतभाषासारल्ये चासीन्निपातानामनन्यसाधारणो योगः।

यस्यां कस्यामपि भाषायां चतुर्विध—नामाख्यातोपसर्गनिपातानाम्—पदानां व्यवहारे यदा समदृष्टिरङ्गीक्रियते, पुरस्क्रियते च, तदा कामं सा भाषा लोकमानसे समुल्लसति। यस्यां च भाषायां केवलानि नामपदानि, आख्यातपदानि च यथा-कथाऽऽमृश्यन्ते तदा नूनं सा शिल्पप्रधानतामेति। एवं विधायां दशायां सर्वविधभाषिकव्यवहाराणां कृते भूयो भूयः क्रियापदानि परामृश्यन्ते। एतेन क्रियापदाभ्यासेन प्रयोक्तुर्विवक्षाऽर्थरूपतामाप्नोति, तदर्थं निपातानां व्यवहारस्य श्रमसाध्यकल्पनापि नोदेति। एवमेव निपातानामर्था व्यवहर्तृभिः कालक्रमेण विस्मारिताः। विस्मृतानां निपातार्थानामुत्तम्भनापेक्षया, ते द्योतका न तु वाचका इति अक्लेशकरः सुकरो वादः पाणिनेःपश्चात् शाब्दिकनिकायेऽहमहमिकया प्रारब्ध इति शिवम्।

---

१. ऋ० सं० ९।७७।५–सायणभाष्यम्।

२. महाभारतम्-शान्तिप०–२६८।९।

३. विष्णुविलासः–४।५०–श्रीरामपाणिवादकृतः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# प्रणवात् सृष्टिप्रक्रियाविमर्शः

श्रीरामेश्वरप्रसादत्रिपाठी, अनुसन्धाता

काशीहिन्दूविश्वविद्यालयः, वाराणसी

इदानीं शब्दमयी, अर्थमयी चोमयविधाऽपि सृष्टिः प्रणवमूलैवेति । तत्र च शब्दार्थयोरव्यक्तावस्थायां पूर्वं क आसीच्छब्दो वाऽर्थो वा ? इति विवेचनमतीव गहनम् । यतो हि द्वावपि परस्परं विरहय्य पृथक् स्थातुं न शक्नुतः, शब्दाश्रितोऽर्थः, अर्थाश्रितश्च शब्द इति परस्परं सापेक्षत्वं वर्तते ।

परन्तु द्वयोरनयोर्व्यक्तावस्थयोर्विचारे कृते प्रथमतः शब्दस्ततोऽर्थ इति व्यवहारक्रमो वक्तुं शक्यते । यथा मृत्तिकां गृहीत्वा घटारम्भं कुर्वाणे कुलाले—'किं करोषि' इति पृष्टे सति सः 'घटं करोमि' इति वाक्यमुच्चारयति, तदनुकृतिं प्रक्रमते । अनेन शब्दस्य प्राथम्यमिति स्फुटमायातम् । यद्यप्यत्र कुलालस्य गनसि घटस्याकारो नाम चेति द्वयमपि पूर्वतः सिद्धम् । तथापि तदव्यक्तावस्थायाम्, न तु व्यक्तावस्थायाम् ।

इदानीं शब्दतत्त्वस्य व्यक्ताव्यक्तत्वे विचार्यते । तत्र कस्यापि पदार्थस्य नाम स्वरव्यञ्जनोभयविधवर्णसङ्घातरूपं भवति । स्वरसाहाय्यमन्तरा व्यञ्जनवर्णस्योच्चारणं नैव सम्भवति । उक्तं च महाभाष्ये महर्षिणा पतञ्जलिना "न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणं सम्भवतीति[1] ।" अचः स्वराः, 'अ, इ, उ, ए, ओ', इति मुख्यस्वराः । 'क, च, ट, त, प, य, र" इत्यादयो व्यञ्जनवर्णाः । तत्र स्वरवर्णोच्चारणे—दन्तताल्वोष्ठप्रभृतिषु स्थानेषु विकृतिर्न भवति, व्यञ्जनस्योच्चारणे तु भवतीति सुस्पष्टमनुभूयत एव । व्यञ्जनस्योच्चारणावसाने स्वरः शिष्यते । क–खादयः किञ्चिद्दीर्घमुच्चार्यन्ते, अन्तेऽकारोऽनुभूयते । अयमेवाकारः कादीनामुच्चारणात् प्रागप्यनुभूयते । एवञ्च स्वरः कादीनां प्राक् पश्चाच्चानुस्यूत एवेति मन्तव्यम् । यथा-आश्रयं विना किमपि वस्तु स्थातुं न शक्नोति । अधुना सूक्ष्मदृष्ट्या दर्शनीयम्—कण्ठदेशे कामपि विकृतिमकृत्वा योऽसौ स्वर उच्चार्यते, स एव कण्ठादिदेशस्थविकृतिभिर्व्यञ्जनरूपतामनुयाति, न च स्वीयां स्वररूपतां त्यजति । अत एव च व्यञ्जनस्य स्वातन्त्र्येणोच्चारणं न भवतीत्युक्तम् । स्वरस्य व्यञ्जनात्मकतया व्यक्तीभवनार्थो विकृत्युपाधेरपेक्षा व्यञ्जनस्योत्पत्तेः पूर्वं स्वरेऽव्यक्तरूपा स्थितिः । एवञ्च स्वरव्यञ्जनयोः कार्यकारणभावः सम्बन्धो मन्तव्यः । कार्यञ्चोपादानकारण एव सूक्ष्मरूपेण तिष्ठतीति व्यञ्जनस्याव्यक्तावस्था स्वरेऽस्तीति सिद्धम् ।[2]

**स्वरनादध्वनीनां विवेकः**

भेरीमृदङ्गादिजडपदार्थेभ्यो निष्पन्नः शब्दो ध्वनिरित्युच्यते । प्राणिभिरुच्चारितः शब्दः 'स्वर' इत्युच्यते । इयानेव तयोर्भेदः, स्वरूपतस्त्वैक्यमेव । नादस्तु व्यापकः । मनुष्येषु वर्णाः,

---

१. म० मा० १।२।२९ ।

२. अव्यक्तबोधः पृ० ४७–४९ ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

स्वरः, नाद इत्येवं प्रकारत्रयेण ध्वनिर्व्यक्तो भवति। तत्र करतलतालशब्दो नादः। मनुष्येतर-प्राणिषु बाहुल्येन स्वरात्मक एव शब्दो दृश्यते। शुकसारिकादिषु क्वचिद् वर्णरूपोऽप्यनुभूयते। कांस्यादिषु जडपदार्थेषु त्वेक एव नादात्मकः शब्दः परिदृश्यते। अतश्चायं शब्दो ध्वन्यादिरूपेण जडचेतनात्मिकायामखिलायां सृष्टौ परिपूर्णस्तिष्ठति। विकृतिरूपोपाधिना नानारूपताञ्च याति।

अपरदृष्ट्या विचारे क्रियमाणे वर्णरूपा ध्वनिरूपाश्चेति द्विविधा एव शब्दा भवन्ति। तत्र व्यक्तावस्थायां वर्ण इति, अव्यक्तावस्थायाञ्च ध्वनिरिति व्यवहारः। मायायां परमेश्वरे लीयमानायां वर्णरूपम्, ध्वनिरूपञ्च शब्दतत्त्वमपि तत्रैव प्रलीयते। परमेश्वरे चाव्यक्त-रूपेणावस्थितायां मायायां तदाश्रितं स्वरवर्णध्वन्यात्मकं सर्वं व्यक्तमपि शब्दजातं कैवल्यरूपेणा-व्यक्तं सत्परमेशरूपतामभिसम्पद्य तिष्ठति। तस्य परमेश्वरस्याव्यक्तं नाम किमिति जिज्ञासाया-मुच्यते दार्शनिकैः—'ओम्' इति।

**ओमिति प्रणवस्येषद् विमर्शः**

ओमिति प्रणवेऽकारोकारमकारेति वर्णत्रयमस्ति। तत्र अकार इति, उकार इति च स्वरौ, मकारस्तु व्यञ्जनवर्णः। एवं रीत्याऽत्र द्वौ भागौ द्रष्टव्यौ, यथा सृष्टावपि जडभाग-श्चेतनभागश्चेति। वृक्षस्यास्तित्त्वमव्यक्तरूपतया यथा बीजे भवति, तथैव शब्देन तत्सृष्ट्या ( नाम-रूपात्मिकया ) मायया च त्रिभिरव्यक्तोपाधिभिः सहितः परमात्मा सगुण इत्युच्यते। एतदेव यन्मायाया अस्तित्वम्, तदेव द्वैतस्य बीजम्। उक्तोपाधिरहितश्च परमात्मा निर्गुण इति कथ्यते। एवमेव स्वरात्मकः शब्दो विक्रियाशून्यो निर्गुणस्तदपेक्षया विक्रियासहितो व्यञ्जन-वर्णः सगुण इति बोध्यम्।

वाच्यस्यार्थजातस्य वाचकस्य शब्दस्य च परमात्मनिलये सति तदभिन्नाभिन्नस्य तद-भिन्नत्वमिति नियमेन[1] वाच्यवाचकयोरभेद आगच्छति। एवञ्च व्यक्ताव्यक्तयोस्तयोः प्रकृति-पुरुषयोर्वाचकमिदम्। ओमिति शब्दस्वरूपं सगुणपरमात्मनोऽभिन्नमिति सिद्धम्।[2]

**ॐ इति लिपिविषयको विमर्शः**

यथा 'ओम्' इत्यक्षराकृतिर्वर्णमालायां पतिता, न तथा 'ॐ' इत्याकृतिर्वर्णमालान्तः-पातिनी। किन्तु परमात्मनो बोधकं निर्गुणं चिह्नम्। यथा पुत्रः स्वोत्पत्तेः पूर्वं पित्रा सम्पत्स्य-मानां स्वप्रतिमामाविष्कर्तुं न प्रभवति। पितरि तु पुत्रस्याव्यक्ता प्रतिमाऽस्त्येव। तथैवा-कारादिः सर्वा वाक् प्रणवरूपेति शब्दोच्चारणानन्तरं निष्पन्ना लिपिः स्वस्मारितवाचकस्य वाच्यं प्रकाशयितुं समर्थाऽपि न तत्पूर्वसिद्धं प्रणवं प्रकाशयितुं क्षमते। स्वोत्पत्तेः पूर्वमुत्पादक-तया बोधकं यत् 'ॐ' इति चिह्नम्। ओमिति कार्याकृतिं कथमानेतुं शक्नुयात्? प्रत्युत स्वयमेव तस्मिंश्चिह्नेऽव्यक्तमस्ति[3]।

---

१. अव्यक्तबोधः, पृ० ४९–५१।
२. वै० सि० ल० म०, बौद्धार्थनिरू०, पृ० ३६२।
३. अ० बो०, पृ० ५१–५३।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

'ॐ' इति निर्गुणं चिह्नम्, ओमिति च सगुणं चिह्नं मन्तव्यम् । यतश्च ओमित्यत्र मकारो व्यञ्जनवर्णते सगुणोऽस्ति । अस्य च मूलमव्यक्तं स्वरूपं बिन्दुरूपमस्ति । अस्मादेव बिन्दो रेखागणितं प्रादुर्भूतम् । एते च तत्रत्या नियमाः—बिन्दुर्नाम यस्य केनापि साधनेन विभागः कर्तुं न शक्यते । अस्य च स दृग्गोचरोऽपि न भवति । एवं यस्यायामो विभक्तुमशक्यः, या च दृक्पथे नायाति, सा बिन्दुद्वयान्तर्वर्तिनी रेखा इति । अस्तु, अस्मिन् मते तस्योपपत्तिप्रकार इत्थं बोध्यः—सर्वासामक्षराकृतीनां केन्द्रस्थानं बिन्दुः । स च स्वस्थान एव स्थित्वा गतिरूपोपाधिना समधिगम्य रेखारूपो भवति । विकृतिरूपोपाधिवशात् सैव रेखाऽक्षराकृतिं भजते । रेखाक्षरञ्चेति बिन्दोरेव विकृते रूपे स्तः । एते द्वेऽप्यव्यक्तरूपेण बिन्दौ तिष्ठत इति बिन्दोः कारणरूपता स्फुटमायाता । यथा बिन्दुरूप एव कार्पासपिण्डो द्रष्टव्यः । तस्यैकदेशेऽङ्गुलिना संवलय्य यद्दीर्घमार्कर्षितं सूत्रं रेखारूपं भवति, तत्सूत्रं सरलतिर्यगाद्याकृत्या लिपिरूपतामापन्नमिव भाति । पुनश्च तस्य संवलनमपाकृष्य पिण्डीकृते सति सूत्ररूपत्वं परित्यज्य कार्पासपिण्डत्वं सम्पद्य पुनर्बिन्दुरूपेण परितिष्ठते । तत्र बिन्दुर्मूलकारणम्, ततो जायमानम्—रेखा, अक्षरम्, अङ्कादि च तत्कार्यम् । कार्याणि च कारणस्वरूपाणि भवन्त्येवेति सर्वं कार्यजातमेतद् बिन्दुरूपमेव ।

अन्यच्चेदमपि द्रष्टव्यम्—यच्छब्दादक्षरलिपिना चार्थबोधरूपं कार्यं तुल्यमेव । यद् वस्तुशब्देनान्यं प्रतिबोधनीयमस्ति तदक्षरलिपिनाऽपि सुबोध्यम् । उभयत्रापि बोधकतारूपा शक्तिस्तुल्या । तेन समानधर्मत्वमुभयोः । किञ्च शब्देभ्योऽक्षरलिपावधिका शक्तिरस्ति, शब्दस्तु श्रुतः सन् समीपस्थं जनमेवोपकरोति, अक्षरलिपिस्तु सुदूरदेशस्थानपि जनानुपकरोति ।

किं बहुना, शब्दतत्त्वस्य चिरकालस्थायित्वलाभार्थमक्षरलिपिरेवैक उपायः । ये शब्दा मुखेनोच्चार्यन्ते, त एवाक्षररूपेण लिख्यन्ते, तेष्वेवाक्षरेषु त एव शब्दा मुखान्निर्गच्छन्तीति कृत्वाऽपि शब्दानां तल्लिपीनां च समत्वमेव मन्तव्यम् । अपरञ्च—गतिविकृतिसम्बन्धाद् रेखाक्षररूपो भवति, अनुच्चारितः शब्दो बिन्दुरूपो नादात्मकः । स एवाघतोपाधिना स्वरात्मकश्च रेखारूपो दीर्घो भवति । अथ च ताल्वाद्युपाधिना व्यञ्जनवर्णरूपो भवति । इतोऽपि हेतोः शब्दाक्षरलिप्योर्मध्ये भेदो नास्ति, अपि त्वेकत्वमेव ।

एवं रीत्या 'ॐ' इत्येष शब्दः 'ॐ' इत्येषोऽक्षरलिपिश्च तुल्य एव । 'ॐ' इत्येतदक्षरमिदं सर्वमिति[१] । माण्डूक्यश्रुत्यनुसारेण तु सर्वे शब्दास्तल्लिपयश्च 'ॐ'कार एवाव्यक्तरूपेणावतिष्ठन्ते । तस्मादेवोत्पद्यन्ते, पुनस्तत्रैव समवलीयन्ते । स चैतावत् कालमव्यक्तमासीत् तदिदानीं व्याकृत्य वाचकेभ्यः कथयामि ।

**प्रणवस्याऽष्टौ प्रकृतयः**

बिन्दुरेवोत्थानरूपेणोपाधिना रेखारूपतामनुगतः । पुनर्वक्रगतिरूपोपाधिनाऽक्षररूपश्चाभवत् । 'ॐ'कारस्याऽष्टौ प्रकृतयः ( विभागाः ) सन्ति । तेषां विभागानां पृथक्-पृथक् संयोगे सति वर्णसङ्ख्यादयश्च निष्पद्यन्ते । अत्र तदवर्णनमङ्कद्वारेण सम्पादयिष्यते । एते चाऽङ्काः समक्षं निर्मितस्य चित्रपटस्याऽऽकृतीनामवयवेषु लिखिताः सन्ति । तत्र प्रथमावयवो बिन्दुः, चन्द्राकार-

---

१. मा० उ० १।१ ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

रेखाया द्वाववयवौ मिलित्वा त्रयः। पुनस्त्र्यङ्कस्य शुण्डायाश्चावयवाः 'पञ्च' इति मिलित्वा पूर्णस्य 'ॐ'कारस्याष्टावयवाः सञ्जाताः[1]।

**प्रणवस्य कस्मादङ्गात् कस्या आकृतेः प्रादुर्भावः**

प्रणवस्य कस्मादवयवात् कस्या आकृतेरुद्भव इति स्वस्थेन निरूप्यते। ८, ७, ६ इत्येतदवयवैः संयुक्तैः सद्भिः 'क' इत्येष व्यञ्जनवर्णः प्रादुर्भवति। ५, ८, ७ इत्येभिरवयवैः 'च'व्यञ्जनस्याविर्भावः। ७, ८ आभ्याम् 'त' इत्यस्य, ६, ७, आभ्याम् 'प' इत्यस्य ८, ६, ७, एभिः 'य' इत्यस्य, ६, ४, ५ एभिः 'र' इत्यस्य, ५, ४, ६, ७, एभिः 'ल' इत्यस्य, ६, ५, ८, एभिः 'ह' इत्यस्य च सम्भवो भवति। एवमवयवानामनुकूलपरिवर्तनेन सर्वे वर्णाः समुत्पद्यन्ते।

**सङ्ख्योत्पादका अवयवाः**

८, ७ आभ्याम् '१' 'एकः' इत्यङ्को भवति। ६, ४, ७ एभिः '२' 'द्वि' इत्यस्य ६, ४, ५ एभिः '३' 'त्रिः' इत्यस्य, ६, ४, ५ एभिः '४' 'चतुर्' इत्यस्य, ६, ७, आभ्याम् '५' पञ्च इत्यस्य, ६, ४, ५, एभिः षड् इत्यस्य, ५, ८, आभ्याम् '७' 'सप्त' इत्यस्य, ५, ६, आभ्याम् '८' 'अष्ट' इत्यस्य, ५, ८, आभ्याम् '९' 'नव' इत्यस्य चाङ्कस्याकृतयः सम्भवन्ति। बिन्दुः स्वतःसिद्ध एव। एवं निर्दिष्टाभिरङ्कसंज्ञाभिः सर्वा अङ्कसंज्ञा ऊहनीयाः।

इदमत्राश्चर्यं द्रष्टव्यम्—कैश्चिदवयवैः किञ्चिदक्षरं भूत्वा कतिपयेऽवयवा अवशिष्यन्त एवानया सूक्ष्मेक्षिकया प्रणवस्य सगुणपरमेशवाचकत्वे को विरोधः? इदं पुनरवधेयम्—सङ्ख्याक्षराणि चेमानि हस्तलेखनात् प्राग् मुखेनोच्चारणीये शब्द एव विलीनान्यासन्। मुखेनोच्चारणीया व्यञ्जनवर्णा दन्ततालव्योष्ठादिविकृत्युपाधिना प्रकटनात् पूर्वं स्वररूपाण्यासन्निति स्वरेण सह व्यञ्जनानामभेदः।

स्वरस्तूच्चारणात् पूर्वं ध्वनिरूप इति ध्वनिना सह तस्याभेदः। अनुच्चारितो ध्वनिरव्यक्तरूपः 'ॐ'कारश्च बिन्दुरूपः। व्यक्तबिन्दोः सगुणपरमात्मनश्चाभेदोऽव्यक्तबिन्दुर्निर्गुणपरमात्मा चैकरूपः। सर्वं जगत् परमात्मन एव निर्मितम्। स एव परमात्मोत्थानरूपगत्युपाधिना स्वकीयं व्यापकस्थानमपरित्यजन्, मायारूपा रेखाकृतिरभवत्। तदनुगुणविकृत्याऽक्षररूपा सृष्टिरजायत। कार्पासदृष्टान्तेन साऽक्षररूपा सृष्टी रेखारूपिण्यां मायायां विलीनाऽभवत्। गुणविकृतिं परित्यज्य रेखारूपा माया बिन्दुरूपे परमात्मनि सुप्ता। एवञ्च रेखाया मायाया अक्षरस्य सृष्टेश्च परमात्मैक्यमस्तीति बोध्यम्। अत एव जडचेतनात्मकसृष्टिसहिता माया, स्वरव्यञ्जनसहितः शब्दराशिः, रेखायुक्तश्च बिन्दुरित्येतेषां स्वरूपं परमात्मेति कृत्वा 'तस्य वाचकः प्रणवः[2]' इति प्रणवोऽपि एतद्गुणैः परिपूर्णः सकलैश्वर्यप्रकाशकोऽवश्यं भवितुमर्हतीति 'ॐ'-कारस्य वैलक्षण्यम्।

---

१. इतोऽप्यधिकं रहस्यं महाराष्ट्रभाषया विरचितं स्वानन्दसाम्राज्यग्रन्थे सृष्टिवर्णनप्रस्तावे द्रष्टव्यम्। विस्तरभिया नेहोपन्यस्यते।

२. प० द०—१। २७।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**बिन्दुरूपस्य परमात्मनो रेखारूपमायाया अक्षरसृष्टेश्च पुनः सूक्ष्मो विमर्शः**

बिन्दुशब्दोच्चारणेनैव मनस्येका वर्तुलाऽऽकृतिः प्रादुर्भवति। तथैव हस्तेन पत्रपटादिषु आकारो निष्पाद्यते। लेखन्या यदेकं महच्छून्यं विलिख्यते, तद् बिन्दोः स्थूलाऽऽकारोऽस्ति। स चाऽऽकार एषः—०—अस्ति। अस्मिन्नाकारे या कृष्णरेखा दृश्यते, न सा बिन्दुः, किन्तु तदन्तर्गतः श्वेतभागो बिन्दुः। बाह्यया वर्तुलरेखया तस्य बिन्दुत्वं सम्पादितम्। बाह्यसीमा वृत्तरेखा, तदन्तःपाती भागो बिन्दुः। इदमेव बिन्दोर्व्यक्तं स्वरूपं मन्तव्यम्। रेखायां तिरोहितायां तु बिन्दोरव्यक्तं स्वरूपमायाति। यच्च व्यापकं परिच्छेदिकाया रेखाया अभावात्, एवमेवेदं विचारणीयं यदव्यक्तबिन्दोः स्वरूपं व्यापकं तथा निर्गुणस्य परमात्मनोऽपि मायाशून्यत्वेन निरपेक्षं व्यापकं स्वरूपं मन्यते।

वर्तुलरेखाकृतोपाधिना परमात्मनः सगुणत्वमायाति। ततश्च व्यक्तबिन्दुः स्वस्थानमपरित्यजन् गतिरूपोपाधिनाऽव्यक्तरेखात्रयात्मकाव्यक्तरेखारूपो भवति। यथा नदी स्वयं प्रवाहरूपेण मध्यरेखा भूत्वा द्वाभ्यां पक्षाभ्यां द्वे तटे रेखारूपे कृत्वा रेखात्रयवती सती प्रवहति। तथैव या एका रेखा दृष्टिपथमायाति, तिसृणामव्यक्तरेखानां जननी, उभयोः पार्श्वयोर्द्वे रेखे मध्ये चैका इति सिद्धान्तात्। एवमेव सगुणपरमात्मा 'सोऽकामयत बहु स्याम्[1]' इत्युत्थानरूपेणोपाधिनाऽव्यक्तगुणत्रयात्मकमायारूपेणाऽऽविर्भवति।

त्रिगुणरेखाया इष्टगत्याक्षररूपता यथा प्राप्यते, तथा त्रिगुणात्मिकाया मायायाः कामकर्माद्यनेकोपाधिसम्बन्धवशादतवर्यंसृष्टिरूपता सम्पद्यते[2]। एवं रीत्या व्यापकपरमात्मैवाव्यक्तो बिन्दुः, सगुणः परमात्मा व्यक्तो बिन्दुः, त्रिगुणात्मिका माया त्रिगुणा रेखा, सृष्टिश्च 'ओम्' इत्यक्षरम्। इत्येतेषां सर्वेषामैक्यरूपं सम्पन्नम्, न मनागपि भेदः।

अत्र विषय इदमपि सूक्ष्ममालोचनीयम्—अव्यक्तबिन्दुः परमात्मा च निरपेक्षव्यापको निर्गुणश्च, तत्र वाक्प्रवृत्तिर्न भवति, 'यतो वाचो निवर्तन्ते' इति सिद्धान्तात्। व्यक्तविषयिकैव वाक् प्रवृत्तिः।

व्यक्तबिन्दुस्तु प्रकृतिपुरुषोभयात्मकः। स्वस्थाने निश्चलोऽयं बिन्दुः, तस्मिन् मायास्थिततमोगुणरूपजडोपाधेः सत्त्वात् तत्रोपाधौ परमात्मनः सदंशोऽभिव्यक्तः। यदा च स एव बिन्दुर्गतिं प्राप्य रेखारूपोऽभवत्, तदा मायास्थचलनवलनात्मकरजोगुणवशात् परमात्मनः सदंशेन सह चेतनांऽशोऽप्यभिव्यक्तः। तदनु रेखाया विकृतिरूपोपाधिना बिन्दुरक्षररूपोऽभवत्। तत्र तत्र मायास्थसत्त्वगुणोपाधिना परमात्मन आनन्दांऽशोऽप्यभिव्यक्तः।

अतश्चेदमालोच्यताम्—सच्चिदानन्दघनः परमात्मा, सत्त्वरजस्तमोगुणवती माया (अखिलचराचररूपिणी सृष्टिः)। एतौ च प्रकृतिपुरुषौ वाच्यौ। नादस्वरवर्णात्मकः प्रणवो बिन्दुरेखाऽक्षराकृतिमानयम्, 'ॐ' इत्येवं तस्य वाचक इत्येतेषामेकरूपेणात्यन्ताभेदोऽस्ति, एतत्तत्त्वमवश्यं विचारणीयम्[3]।

---

१. तै० उ०—२।६।  २. अव्यक्तबोधः, पृ० ६४-६८।

३. अव्यक्तबोधः, पृ० ६९।७०।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

**अव्यक्तव्यक्ताकृतिमय्याः सृष्टेर्विमर्शः**

यथा चित्रकलानिपुणेन शिल्पिना मूर्तिनिर्माणेच्छया मृत्पिण्डं पुरतः संस्थाप्याऽस्मादेकम्, द्वे, बहूनि वा चित्रवस्तूनि सम्पादयिष्यामीति तस्य मनसि यथा यथा कल्पना प्रादुर्भवति, तानि सर्वाणि वस्तूनि तस्मिन् पिण्डे पूर्वमेव वर्तन्ते। इच्छानुगुणा या कल्पना दृढीभवति, तदाकृतिं निर्मातुं प्रयतते। एवञ्च मूर्तयः स्वोत्पत्तेः प्राग् मृत्पिण्डे यथाऽव्यक्ताः, तथैवाखिला सृष्टिः साकार-भवनात् प्राग् निराकारतया मायायामव्यक्ता। तेनाव्यक्तरूपेण सह माया परमात्मनि लीना भवति, तदा समेषां मूलबिन्दुः परमात्मैवास्ति। मूर्तीनां कारणं मृत्पिण्डोऽपि स्थूलबिन्दुरेव। अव्यक्तो बिन्दुर्व्यापकः, व्यक्तबिन्दुस्तु रेखायुक्त इति प्राङ् निवेदितमेव।

यावन्तो निष्प्राणपदार्था मृत्पाषाणप्रभृतयस्ते सर्वे परमाणूनां संयोगेन जाताः। परमाणोश्च स्वरूपं बिन्दुरूपमेव। स्थूलानां जडपदार्थानां घर्षणादिकैरुपायैराकृतिर्नाशयितुं शक्या, तत्र परमाणूनां राशिरेवावशिष्यते। तस्य विनाशस्तु कर्तुमशक्य इति स परमात्मनो रूपम्। अत एव न्यायशास्त्रविद्भिः परमाणुभिरेव द्व्यणुकादिक्रमेण सृष्टिरित्युद्घोष्यते।

प्रत्यक्षमनुभूयताम्—तुषाराणां संयोगेन जलं जायते, तुषारश्च बिन्दुरूप एव। किं बहुना, बिन्दुशब्देन जलबिन्दोरेव प्रतीतिर्लोके प्रसिद्धा। अन्यच्चेदं द्रष्टव्यम्—पुष्पफलवतां वल्लीवृक्षादी-नामुत्पत्तिर्बीजाद् भवति। बीजस्याकृतिस्तु प्रायशो वर्तुला बिन्द्वाकृतिरेव[1]।

यद्यपि बीजस्याऽऽकृतिः सर्वत्र न वर्तुलैव, अपि तु क्वचिल्लम्बा, क्वचन चतुष्कोणा, क्वचन त्रिकोणेत्यादि। तथापि बीजस्योपरितनभागे एकं कवचं भवति, तदन्तर्गतं बीजं तत्का-ठिन्यात् प्राग् रसमयेन बिन्दुरूपेणैव तिष्ठति। प्रथमं पुष्पस्योद्भवः, तत्परिपाकाद् यदा तत्रत्यं मधु घनं भवति, ततस्तत्पुष्पं शुष्यति। तस्य मूले मधुनो लघुपिण्डिका जायते। तस्य संरक्षणाय कवचमुत्पद्य पुष्पं निर्गिलति, ततः फलाकृतिमनुलक्ष्य वृद्धिं प्राप्य स मधुबिन्दुरप्येकत्वेनानेकत्वेन वा तत्र परिणमति। ये चाऽफला अपुष्पा वनस्पतयस्तेऽपि जलसंयोगेन प्ररोहन्ति। तत्रापि रजःकणान्ते जलबिन्दवश्चोत्पत्तौ कारणमिति तेषामपि बीजं ग्रन्थिपर्णादौ वर्तत एव[2]।

**व्यक्तेन्द्रियाणां प्राणिनामुत्पत्तिप्रकारः**

अव्यक्तेन्द्रियाणां वृक्षवल्लीप्रभृतीनामुत्पत्तिप्रकारमुक्त्वा। व्यक्तेन्द्रियाणां स प्रकारः प्रदर्श्यते। ते च त्रिविधाः—(१) जरायुजाः (२) अण्डजाः, (३) स्वेदजाश्च। तत्र जरायुजाना-मण्डजानाञ्चोत्पत्ती रेतसो रजसश्च संयोगात्। रेतो जलबिन्दुर्मधुस्थानीयम्, रजश्च पुष्परजः-कणस्थानीयम्। अत एव पुष्पवत्याः स्त्रिया रजोदर्शनं सञ्जातमित्युच्यते। अनयोरुभयोर्बिन्द्वोः सम्मेलनाद् गर्भधारणं भवति। यस्य बिन्दोराधिक्यं तद्वशात् पुरुषरूपा स्त्रीरूपा वाऽऽकृतिर्जायते। यद्यपीमा आकृतयः स्वातन्त्र्येण स्त्रीपुंस्वरूपा उपलक्ष्यन्ते, तथापि प्रत्येकाकृतिषु वामदक्षिणा-ङ्गयोर्गौणप्रधानभेदोऽस्त्येव।

पुरुषस्य दक्षिणमङ्गं प्रधानम्, वामं तु गौणम्, तदनुरोधेन बलस्यापि तारतम्यं भवति। एवं स्त्रीणां वामाङ्गं प्रधानम्, दक्षिणं त्वप्रधानम्। यद्यपि तस्या वामशरीरे दक्षिणाङ्गाद

---

१. अव्यक्त०, रूपप्रक०, पृ० ७०-७४।

२. अव्यक्तबोधः, पृ० ७४-७५।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

बलाधिक्यम्, तथापि पुरुषवामशरीराद् न्यूनमेव, दक्षिणाङ्गात्तु सुतराम्। अत एव स्त्री 'वामाङ्गी' इत्युच्यते, न्यूनशक्तेरधिकशक्त्यायत्तत्वात्[1]। सा स्वभावेनैव पुरुषाधीना, न स्वतन्त्रा। उक्तञ्च राजर्षिमनुना—

पिता रक्षति कौमारे भर्ता रक्षति यौवने।
रक्षन्ति स्थविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति[2]॥

अपरञ्चैतदपि मार्मिकमत्र प्रमाणं द्रष्टव्यम्—मनुष्यस्यान्यप्राणिनो वा शरीरे द्वौ भागौ समानौ वर्तेते। द्वे नेत्रे, द्वौ कर्णौ, नासापुटे द्वे, स्कन्धौ द्वौ, हस्तौ द्वौ, पादौ च द्वौ—इत्येवं सर्वेऽवयवा द्वन्द्वीभूय वर्तन्ते। उदरे मुखे चापि मध्यवर्तिन्या रेखया द्वौ भागावनुमातव्यौ। अनया च रीत्या मनुष्याकृतिः स्वभावेन द्वेधा भूता संहितास्तीति परिज्ञायते।

यद्यपि शरीरेऽवयवानां द्वन्द्वमस्ति, तथापि ताभ्यामेकैव क्रिया घटते, अतश्च द्वन्द्वेऽपि परस्परं सापेक्षत्वभावनया स्त्रीपुरुषयोः स्वाभाविकः स्नेहो भवति परस्परमिति विज्ञानम्।

एवमेवाण्डजानामपि मूलं बिन्दुरेव तत्र। इयान् भेदः—जरायुजः प्राणी पूर्णावयवः सन् गर्भाशयाद् बहिरागच्छति। अण्डजस्तु निरवयवोऽण्डाकारेण गर्भाशयाद् बहिरागत्य पुनः कोटरादौ तस्मिन्नण्डेऽवयवैरात्मानमभिसम्पाद्याण्डनिर्भेदादुत्पद्यते। अत एव द्विजशब्देनापि व्यपदिश्यते।

कीटपतङ्गदंशादयः स्वेदजाः। विकृतानां पृथिवीजलोष्मणां संयोगाद् यो वाष्पबिन्दुर्जायते (शरीराद् विनिर्गच्छति) स स्वेद इत्युच्यते। निदाघसमये शरीरे यो घर्मः समुत्पद्यते, तस्मिन् शरीरजो मलः, जलम् ऊष्मा चेति त्रितयमुपलभ्यते। मस्तके मलिनवस्त्रादौ यूका लिक्षादयो घर्मादेव जायन्ते। एवञ्च स्वेदजप्राणिनामुत्पत्तौ मूलकारणं बिन्दुरेव।

एतावता इदमागतं यत् समग्रस्य जगतो मूलकारणं प्रणवाख्यो बिन्दुरेव। यस्य व्यक्ततायाः प्राक् समस्तं जगत् तत्रैव लीनमासीत्। सृष्टिकाले त्वनन्तानि नामरूपाणि तु तत एव प्रादुर्भवन्ति, तत्रैव स्थितानि, तत्रैव च लीनानि भवन्ति[3]। तथा चोक्तम्—

'ॐ' इत्येतदक्षरमिदं सर्वमिति[4]।

---

१. अव्यक्तबोधः, पृ० ७५-७६।
२. मनुस्मृतिः ९।३।
३. अव्यक्तबोधः, पृ० ७५-७९। ४. मा० उ०—१।१।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# स्वप्नसम्प्रधारणा

डॉ० विद्याधरशास्त्री कविराजः

एम्० ए०, जी० ए० एम्० एस्०, विद्यावारिधिः

प्रवाचकः, आयुर्वेदमहाविद्यालये, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

निद्रोपप्लुतेन तन्द्रायुक्तेन मनसा विषयाणाम् ( शब्द-स्पर्श-रूप-रस-गन्धानाम् ) चिन्त्य-विचार्योह्यध्येयसङ्कल्प्यादीनां वा ग्रहणं खलु 'स्वप्नः'। अनभीप्सितानामभीप्सितानाञ्चानन्द-विघातकराणां ग्लानि-चिन्ता-वैफल्य-नैराश्यादिविविधवेदनानां सकललोकमनोहराणां वैभवविला-सैश्वर्यसुतवित्तामोदप्रमोदसम्भाराणाञ्च प्रजापतिसमः प्रदाता किल स्वप्नः। कवेः काव्यमयी सृष्टिरिव स्वप्नसृष्टिः, या वैलक्षण्ये वैधसीं सृष्टिमतिशेते।

वैष्णवीमायेव स्वप्नमायाऽपि दुरत्यया। ऐन्द्रजालिक इवासौ क्षणेन किमपि सकल-कलाकलितकलेवरं रमणीयं वेश्म रचयति, क्षणेन च प्रतिसन्धत्ते। असौ परमानन्दमाधवो यो हि मूकं वाचालं करोति पङ्गुं गिरिं लङ्घयते। परिक्लिष्टानसमर्थानातुरान् सुखयति, सर्वसाधन-सम्पन्नानुपकरणवतोऽकिञ्चनान् विदधाति। लोकातिगमितिवृत्तमसौ रचयति, यद्विरञ्चिरपि रचयितुं नेष्टे। स्वप्नसंसारोऽतितरां रहस्यात्मकः। मनोरथाधिष्ठितत्वात् स्वप्नानामगतिर्न विद्यते। अस्य गतिरुदन्वदाकाशमहीधरेषु, चतुर्दशभुवनेषु, सप्तलोकेषु, देवेन्द्रहर्म्येषु, हरिहर-निकेतनेषु चाप्रतिहता।

## निद्राधात्री स्वप्नशिशुं पुष्णाति

मनोऽधिष्ठितानीन्द्रियाणि विषयग्रहणे समर्थानि भवन्ति। इन्द्रियाणां यथा स्वविषय-भोगार्थं निरन्तरं मनसा सह संयोगो जायते। कार्यव्यापृतत्वादिन्द्रियाणि क्लमान्वितानि यदा भवन्ति, तदा विषयेभ्यो निवर्तन्ते, मनश्च क्लमान्वितं निवर्तते विषयेभ्यः। तथाहि मनस इन्द्रियाणाञ्च स्वविषयग्रहणव्यावृत्तिर्निद्रा।[1] निद्रा हि स्वभावत एव सर्वप्राणिनोऽभिस्पृशति। आहार इव निद्राऽपि शरीरोपस्तम्भभूताऽस्ति। सा हि श्रमापनोदनेन शरीरावयवानां विश्राम-दानेन च शरीरधारणे पोषणे च प्रभवति।

---

१. यदा तु मनसि क्लान्ते कर्मात्मानः क्लमान्विताः।
विषयेभ्यो निवर्तन्ते तदा स्वपिति मानवः॥
तमोभवा श्लेष्मसमुद्भवा च मनःशरीरश्रमसम्भवा च।
आगन्तुकी व्याध्यनुवर्तिनी च रात्रिस्वभावप्रभवा च निद्रा॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

निद्रा हि भूतधात्री[1] निगदिता, सा च स्वप्नानाञ्च धात्री। निद्राप्रक्रियायां यदा चेन्द्रियाणि विषयेभ्यो निवर्तन्ते, किन्तु मनस्तु नैव निवर्तते; तत्तु क्लान्तेष्विन्द्रियेषु शब्दस्पर्शादि-विषयेभ्यो निश्चेष्टेष्वपि चिन्त्यविचार्यादिविषयेषु प्रवर्तत एव, तदा मानवो दृष्टश्रुतानुभूतप्रार्थित-कल्पितभाविकदोषजरूपान् नानाविधान् स्वप्नान् पश्यति[2] हि। यदा च मानवो नातिप्रसुप्तो भवति ( अर्धनिद्रस्तन्द्रिलो वा ) तदा मानसव्यापारवशीकृतोऽनेकानशुभान् शुभान् फलान् सफलान् वा स्वप्नान् पश्यति।[3]

स्वप्नावस्थायां तैजसाहङ्कारयुक्त आत्मा विविधान् सुखदान् स्वप्नान् पश्यति। रजश्च प्रवर्तकमुपष्टम्भकञ्च भवति। अतश्च तन्मनोऽभिनिविष्टं विषयेषु मनः प्रेरयति। यदा च रजो वातपित्तकफैरनाविलं भवति, तदा सौम्याः स्वप्नाः जायन्ते, सति च तस्मिन् दोषाक्रान्ते दारुणानशुभोदयान्[4] व्याधिकराननिष्टकरान् वा स्वप्नान् पश्यति मानवः।

**स्वप्नविषये मतान्तराणि**

'अरस्तू'महोदय एवमाह—स्वप्नाः किल नेश्वरप्रेरिताः, न वा ते देवासुरगन्धर्वयक्ष-रक्षःपिशाचादिप्रेरिता भवन्ति, अपि तु ते मानवमनोऽनुभूतिविषयकाः प्रजायन्ते।

'फिख्ते' महोदयः ( सन् १८६४ ) कथयति स्म, यत् स्वप्ना जागृतजीवनस्य पूरका भवन्ति, अर्थाद् जागृतावस्थायां येषां भावानां पूर्णता न जायते, याश्चेच्छा अपूरिता भवन्ति, ताः स्वप्ने पूरिता भवन्ति। स्वप्ना मानवानां कृते वरदाः, स्वप्ना मानसव्याधीनां भेषजा-भिमताः।

'हूफनर' महोदयः ( १८८७ ) स्वप्नान् जागृतदशापूरकान् स्वीकरोति, शयनात् पूर्वं मनसि ये विचारा आयान्ति, यदि तेऽसमाहिता भवन्ति, तदा ते विचाराः स्वप्नसम्बद्धाः सन्तः स्वसमाधानपन्थानमधिरोहन्ति।

दार्शनिकशिरोमणिः 'राबर्ट' महोदयः स्वविचारमेवमुररीकरोति—भाराभिभूतस्य मस्तिष्कस्य भारमवनमयितुं क्षुब्धमानसकेन्द्राघातप्रशमनार्थञ्च स्वप्नेषु विलक्षणा क्षमता वरीवर्ति। ये च विचारा मनसि समधिरूढा भवन्ति, तेषां विसर्जनार्थमभिव्यञ्जनार्थञ्च

---

१. रात्रिस्वभावप्रभवा मता या तां भूतधात्रीं प्रवदन्ति तज्ज्ञाः।
तमोभवामाहुरघस्य मूलं शेषाः पुनर्व्याधिषु निर्दिशन्ति॥
( चरक० सूत्र० २१।३५, ५८–५९ )

२. सर्वेन्द्रियव्युपरतौ मनोऽनुपरतं यदा।
विषयेभ्यस्तदा स्वप्नं नानारूपं प्रपश्यति॥ ( अष्टाङ्गसङ्ग्रहः, सूत्र० ९ )

३. नातिप्रसुप्तः पुरुषः सफलानफलांस्तथा।
इन्द्रियेशेन मनसा स्वप्नान् पश्यत्यनेकधा॥ ( चरक०, इन्द्रिय० ५।४२ )

४. मनोवहानां पूर्णत्वाद् दोषैरतिबलैस्त्रिभिः।
स्रोतसां दारुणान् स्वप्नान् काले पश्यति दारुणे॥ ( चरक०, इन्द्रिय० ५।४१ )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

स्वप्ना एव साधनभूता भवन्ति । मानवानां स्वप्नदर्शनं स्वाभाविकं भेषजम् । यदि चेद् एषां स्वप्नदर्शनक्षमता निवारिताऽपहृता वा स्यात्, तदा तेषां मानसिकं सन्तोलनं वैकृत्यमावहेत् ।

**स्वप्ना वासनातृप्तिहेतवः**

दार्शनिकः 'सिगमण्डफ्रायड' महोदयः स्वाभिमतं प्रकटयति—स्वप्ना विशिष्टा महत्त्वपूर्णा मानसव्यापारा भवन्ति । ये कासाञ्चनोपेक्षितानां प्रशान्तानाञ्च समीहितानां परिणामभूताः । याश्च समीहिता इच्छादय अपूर्णा भवन्ति ताश्च स्वपूर्त्यै स्वप्ने प्रकटीभवन्ति, प्रयतन्ते च स्वस्य पूर्त्यै । बह्वयश्च वासनास्तथा भवन्ति, याः किल स्वानुकूलपरिस्थितेरलाभाल्लाभाच्चानिष्टपरिस्थितेः कुल-देश-जाति-धर्ममर्यादाबाधितत्त्वाच्च स्वाचारनियमदार्ढ्याद्वा दान्ता भवन्ति, ताश्चात्मदमनप्रक्रियया नैतिक-धार्मिक-सामाजिकबन्धनैराबद्धा अवतिष्ठन्ति, मध्य एवातृप्ताः । ताः स्वप्नदशायां पूर्वोक्तं समग्रं सीमाङ्कनं भित्त्वा तृप्त्यै प्रयतमाना दृश्यन्ते । जागृतावस्थासमुत्थिताश्च वासना नैव विनश्यन्ति, तास्त्वन्यथा स्वपूर्तिमभिलषन्ति, ता मनसोऽर्धचेतनावस्थायां स्वप्ने केनापि व्याजेन यथास्वं पूर्णतां भजन्ति ।

यौवनाभ्युपगमनवेलायां स्वभावत एव कामवासना अभिभवन्ति पुरुषान् प्रमदाजनांश्च । मर्यादापरिपालनाय प्रशमितकामवासनाः पुरुषाः स्त्रियो वा प्रतीकरूपेण स्वप्ने मैथुनाचरणमनुभवन्ति । एवञ्च स्वान्तःप्रसूतवासनाविदग्धा जना यदि स्वप्नेऽपि नानुभवेयुर्वासनाविलासानन्दान्, तदा नूनमुद्भ्रान्तचेतसस्ते व्याधिता भवेयुरुन्मादेन ( यौवनोन्मादेन, कामोन्मादेन योषापस्मारेण वा ) । एवञ्च स्वप्नाः खलु बहूनामसमाहितानां प्रश्नानामुत्तराणि । स्वप्नानां प्रकाराणि नहि परिसङ्ख्येयानि । तादृशानाञ्च स्वप्नानां सङ्ख्या नाति न्यूना येषां प्रयोजनवत्ताऽप्रकटितैव भवति ।

**स्वप्नेषु वैलक्षण्यम्**

महदाश्चर्यमयाः संवादा घटनाश्च श्रूयन्ते स्वप्नविषये । स्वप्नानां प्रतिपत्त्या च तेषां याथार्थ्यविगमनं नातिजटिलं कर्म । सन्ति चाध्येतारो, ये हि मनोविश्लेषणेन मानसशास्त्राध्ययनेन च स्वप्नानां रहस्यं भिन्दन्ति, येन स्वप्नानां निदानम्, तेषामर्थाः, प्रयोजनानि च ज्ञातानि भवन्ति । विश्रुतानां कतिपयकवीनां स्वप्न एव कविताः स्वात्मनि कृतास्पदा जाताः । गणितविषये विज्ञानक्षेत्रे च दुरूह्यप्रश्नानां समाधानं स्वप्न एव प्रस्फुटीभूतम् । सन्ति बहून्युदाहरणानि तादृशानि यैश्च चेतो विश्वासमेति स्वप्नानां रहस्यभेदनवैलक्षण्यक्षमतायाम् । क्वचन चेदं दृश्यते यत् कस्यापि भाविकार्यपद्धतेः स्वप्न एव प्रस्फुरणं जायते वारम्वारमेकविध एव स्वप्न आयाति चेत्, नूनं तत्रावधानदानमपेक्ष्यते । सम्भाव्यते तत्र कस्याश्चन समस्याया मूलभूतं समाधानम् ।

**स्वप्नानामनुसन्धानम्**

सम्प्रति 'अमरीका'देशे परःशताः स्वप्नानुसन्धानशालाः कार्यरता विद्यन्ते, याश्च 'नेशनल इन्स्टीच्यूट आफ मेडिकलहेल्थ'तत्त्वावधाने कार्यपरायणाः सन्ति । तत्र अत्याधुनिकयन्त्रसाहाय्येन निद्रितावस्थायां मस्तिष्कदशाया अध्ययनं क्रियमाणमास्ते । निद्रायाः कति काश्च दशा भवन्ति, तत्र च कदा कीदृक् परिवर्तनं कस्मिन्नङ्गे भवति, तत्सर्वं यन्त्राङ्कनेनावज्ञायते । मनश्चिकित्साक्षेत्रे चैषा प्रक्रिया शुभावहा भवित्री । मनीषी 'कार्ल जुंग' ( एकोनविंशति-

CC-0. Sampurnanand University Collection. Digitized by eGangotri

शताब्दी ) महोदयः स्वप्नानामैश्वर्यविषये सुदृढं विश्वसिति । स्वप्नाः किल ऐश्वर्यमयाः, तैश्चेन्द्रियातीतं ज्ञानमुपलभ्यते । स्वप्नजगति प्रविष्टस्य जनस्य समक्षं कालस्य स्थानस्य चार्गला नैवास्ति; स तु सर्वत्रगामी, सर्वद्रष्टा, सर्वज्ञो वा भवितुमर्हति । सर्वशरीभृद् यथेच्छाचारी वा सम्भाव्यते, त्रिकालज्ञो वा । समस्तस्य ब्रह्माण्डस्य सार्वदेशिकं ज्ञानं तस्याग्रे स्फुरति । स्वाप्निकमनसो ज्ञानसाधनानि नहि सीमितानि सन्ति । एवञ्च स्वप्ने भूतघटनानां वर्तमानानां भविष्यतीनाञ्चावबोधो जायतेतरामिति न तिरोहितं मनोविश्लेषणपराणां मनोविज्ञानाचार्याणाम् । स्वप्नज्ञानमाध्यात्मविदामाप्तजनानामिव पूजितं समादृतं च विद्यते ।

**स्वप्ना भविष्यदर्शकाः**

स्वप्नेष्वतीतानां साम्प्रतिकीनाञ्च ज्ञानराशीनामवबोधनं नहि विस्मयकरम्, अपि तु महदेतद् रहस्यात्मकं वस्तु विद्यते, यत् स्वप्ना दुर्भेद्यां भविष्यभित्तिं भित्वा तदन्तरालनिहितान् विषयानवालोकयन्ति । एतेनानुमीयते यद् यौगिकी सिद्धिरिव स्वप्ना अपि महदैश्वर्यशालिनो भवन्ति । यदग्रे त्रैकालिकं ज्ञानं जाज्वल्यमानमवतिष्ठते । सत्त्वगुणभूयिष्ठाश्च जनास्तादृशीं योग्यतामभिव्यञ्जयितुं सक्षमा दृश्यन्ते । त एव 'आप्ताः' इत्युच्यन्ते । विश्वस्मिन् स्वप्नानुसन्धानशालासु महदौत्सुक्येन स्वप्नप्रकृतीनामध्ययनं सञ्चाल्यते । 'हालैण्ड'स्थिता 'डच सोसाइटी फार साइफिकल रिसर्च'नाम्नी संस्था कमपि स्वप्नविवरणं प्रस्तौति, यश्च स्वप्नः कस्यचन सामान्यजनस्य विद्यते, न स कामपि प्रतिभां प्रज्ञावैभवं वा बिभर्ति स्म, किन्तु तेन स्वप्ने स्वस्य भविष्यं याथार्थ्येन दृष्टम् । तथा चोक्तम्—

ख्रीस्ताब्दे १९४७ तमे वर्षे नवम्बर मासेऽनेन डचजातीयपुरुषेणानेकवारमेकोऽङ्कः ३६८४ स्वप्ने दृष्टः । एकदा निशीथे तमेव स्वप्नं पुनर्दृष्ट्वाऽऽस्यायां स्थितोऽभूदचिन्तयच्च तमेव स्वप्नं तमेवाङ्कम् । तमङ्कं स्थायिरूपेण स्मृतिपथमानेतुमनेकधा सस्मार । पौनःपुन्येन तमेव स्वप्नं पश्यन्नसौ तद्रहस्यज्ञानाय व्याकुलोऽभूत् । अन्ततोगत्वा शुशोच यत् सम्भाव्यते किलायमङ्कः 'डच राज्य लाटरी' अङ्केषु प्रथमपुरस्काराङ्कः कदाचित् । एवं चिन्तयन्नसौ जनः १९४८ वर्षस्य जनवरीमासे पूर्वोक्ताङ्कं लाटरीटिकटं चिक्राय अग्रिमे च मार्चमासे तदङ्कमेव प्रथमपुरस्कारभागभवत् । का नाम सा शक्तिर्यया तमेव जनं तदङ्कं प्रादर्शि, को विजानाति तद् रहस्यमिति, किन्त्वनेनैतत् सिद्धयति यन्मानवानां मनोऽनागतं द्रष्टुं सक्षमम् ।

जगतः प्रख्यातो धकुनवेरः स्वर्णखन्यधिपतिरेकदा तादृशं स्वप्नमपश्यद् यस्मिन् कश्चन देवदूतस्तमवबोधयति स्म, यदस्मात् स्थानात् कियद्दूरे पर्वतप्रदेशेऽमुकचिह्नाङ्किते स्थले स्वर्णखनिरस्तीति । स तु तदनुसृत्य महता श्रमेण तं प्रदेशमवाप्तवान् । स्वल्पेनैव चोत्खननप्रयासेन सोऽपश्यत् स्वर्णराशिम् । एकदा च भूगर्भशास्त्रिभिस्तत्स्थलं परीक्ष्य निश्चयीकृतमासीद् यदत्र नैव विद्यते हिरण्यस्य खनिरिति ।

एवञ्च पूर्वोक्तघटनाचक्रसन्दर्शनेन स्पष्टमेवेदमवभासते यत् स्वप्नशक्तिर्दुरधिगमा, दुरन्ता, दुर्बोधा, या च कदाचिदनागतसन्दर्शिका भवति, कदाचिज्जटिलप्रश्नोत्तररूपा, कदाचिद् वर्तमानस्वरूपा कदाचिदतीतगामिनी वा भवति । मनोविज्ञानाचार्याः स्वप्नरहस्यो-

CC-0. Sampurnanand University Collection. Digitized by eGangotri

द्घाटनाय कृतभूरिश्रमा नाद्यापि विश्रमन्ते। तेषामयं दृढो विश्वासो वर्तते यत् स्वप्नानां प्रतिपत्तिर्नूनं महत्त्वपूर्णामुपलब्धिराशिमुपायनीकर्तुं प्रभवेदिति।

**आयुर्वेदे स्वप्नभेदाः[1]**

स्वप्नस्य सप्तभेदाः समाख्याताः, ते च—१ दृष्ट–२ श्रुत–३ अनुभूत–४ प्रार्थित ५ कल्पित–६ भाविक–७ दोषजाख्या भवन्ति।

१. दृष्टः, चक्षुषा प्रत्यक्षीकृतस्य कस्यचन रूपस्य दृश्यस्य वा स्वप्ने दर्शनम्।

२. श्रुतः, श्रोत्रेण श्रुतस्य संवादस्य जनस्य वा तदनुसारमेव स्वप्ने दर्शनम्, यथा—पूर्वस्यां दिशि सिंहव्याघ्रसेवितं वनमस्ति, श्यामवर्णो कृष्ण इति वा।

३. अनुभूतः, यद्विषये मुहुर्मुहुश्चिन्त्यते, तदेव स्वप्ने संदृश्यते फलीभूतम्, यथा—श्रीनगरे ( कश्मीरे ) केशरवनानि द्रष्टुकामो जनः स्वप्नेष्वात्मानं केशरालवालेषु विहरन्तं पश्यति।

४. प्रार्थितः, मनसाऽभीप्सितं धनं स्वप्ने कदाचिदुपलभ्यते।

५. कल्पितः, मनसा सङ्कल्पितं देवदर्शनं तीर्थयात्रां वा स्वप्ने फलीभूतं पश्यति।

६. भाविकः, येषां स्वप्नानां शुभा अशुभा व फला अवश्यम्भाविनो भवन्ति, यथा—स्वप्ने देव-द्विज-गोवृषभदर्शनं शुभफलदम्, ज्वरितस्य च शुना सख्यमशुभाय सम्पद्यते।

७. दोषजाः स्वप्नाः, यथा वातप्रकृतिर्वियतिवायुयानेन विहरन्तमात्मानं पश्यति, पित्तप्रकृतिः सुप्तः सन् कनकपलाशकर्णिकारान् स्वप्ने पश्यति, कफप्रकृतिः मनोज्ञान् सलिलाशयान् कमलहंसचक्रवाकांश्च स्वप्ने पश्यति।

**स्वप्नपरिणामः[2]**

तत्र श्रुत-दृष्ट-अनुभूत-प्रार्थित-कल्पिताः स्वप्ना निष्फला भवन्ति। दिवास्वप्ना अतिह्रस्वा अतिदीर्घा वा स्वप्ना मिथ्या भवन्ति।

अथ च यथास्वं स्वस्याः प्रकृतेरनतिक्रमेण यथा—वातप्रकृतौ वियति गमनम्, पित्तप्रकृतौ विद्युदुल्काकनककर्णिकारदर्शनम्, श्लेष्मप्रकृतौ कमलहंसचक्रवाकदर्शनमफलदं भवति। यश्च स्वप्नो विस्मृतो भवति सर्वथा, यश्च पूर्वमन्यादृक्, पश्चादन्यादृग्दृष्टः, अर्थात् पूर्वः स्वप्नो परेण विशिष्टेन स्वप्नेन विहतो भवति, स च निष्फलो भवति। चिन्ताकृतस्य च स्वप्नस्य फलमकिञ्चित्करं भवति।[3]

---

१. दृष्टं श्रुतानुभूतं च प्रार्थितं कल्पितं तथा।
भाविकं दोषजं चैवं स्वप्नं सप्तविधं विदुः॥

२. तत्र पञ्चविधं पूर्वमफलं भिषगादिशेत्।
दिवास्वप्नमतिह्रस्वमतिदीर्घं च बुद्धिमान्॥ ( चरक०, इन्द्रिय० ५।४३–४४ )।

३. यथास्वं प्रकृतिस्वप्नो विस्मृतो विहतस्तथा।
चिन्ताकृतो दिवादृष्टो भवन्त्यफलदास्तु ते॥ ( सुश्रुत० सूत्र० २९।६७ )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

यश्च स्वप्नः प्रथमरात्रे ( रात्रिप्रथमयामे ) संदृश्यते सोऽल्पफलो भवति, न वा फलदो भवति ।[1]

**शुभफलप्रदाः स्वप्नाः**

कांश्चन अशुभान् स्वप्नान् दृष्ट्वा यदि चेत् तदनन्तरमेव शुभान् सौम्यान् कश्चन पश्येत्, तदा तत्फलं सुखदं भवति[2] । यश्च सौम्यः स्वप्नः प्रत्युषसि दृष्टो भवति दर्शकश्च न पुनश्शेते तस्य महत्फलं सद्य एवावाप्यते[3] । तथा च—यो हि देवान् द्विजान् गोवृषभान् नृपान् मित्राणि समिद्धमग्निं साधुजनान् निर्मलानि सरांसि वा स्वप्नगतो पश्यति व्याधितोऽव्याधितो भवति, अव्याधितो वा शुभवस्तून्यवाप्नुयात् ।

यश्च स्वप्ने उच्चैः प्रासादान् सफलान् वृक्षान् वारणान् पर्वतान् वा समारोहेद् रुग्णः सन्नरोगो भवति, अरोगी च विपुलद्रव्याणि प्राप्नुयात् । कलुषोदकान् नदीनदसमुद्रांश्च स्वप्ने यस्तरेत् तस्य व्याधिरपगतो भवति कल्याणञ्च लभतेऽसौ । यञ्च स्वप्ने सर्पो भ्रमरो जलौको वा दशेत् तस्य चारोग्यलाभो धनलाभश्च भवति । एवंरूपान् शुभफलप्रदान् विजानीयात् ।[4]

**अशुभा दारुणाः स्वप्नाः**

स्वप्ने यस्योत्तमाङ्गे वंशगुल्मलतादयो जायन्ते तत्र च पक्षिणो नीडेषु निवसन्ति, दारुणोऽसौ स्वप्नः, यद्दर्शने रोगी पञ्चतामरोगी च रुग्णतामवाप्नोति ।

यश्च स्वप्ने गृध्रोलूकश्वकाकाद्यैः परिवार्यते, रक्षःप्रेतपिशाचादिभिश्च पराजितो भवति, स्वप्ने मुण्डितो वा भवति, वंशवेत्रलतापाशतृणकण्टकाकीर्णकान्तारे गच्छन् पतति, मूर्च्छामापद्यते, मार्गभ्रष्टो वा भवति, पांशुले पथि भस्मनि वल्मीके श्मशानायतने श्वभ्रे कलुषे सपङ्केऽम्भसि तमसाऽऽवृते कूपे वा पतति, शीघ्रवाहिस्रोतसा वा ह्रियते, स खलु रोगी चेत् कदाचिदेव जीवति, स्वस्थो वा व्याधितो भवति ।

स्वप्ने घृततैलादिस्नेहपानं तैलाद्यभ्यङ्गः वमनं विरेचनं हिरण्यलाभः कलहो बन्धनं पराजय उपानद्युगनाशो हर्षः प्रकुपितैश्च पितृभिरवभर्त्सनमशुभाय सम्पद्यते ।

स्वप्ने दन्तपतनम्, चन्द्रार्क-नक्षत्र-देवता-दीपपतनम्, नेत्रपतनम्, पर्वतानां भ्रंशनं वाऽनिष्टकरं भवति ।

यश्च स्वप्ने रक्तपुष्पसङ्कुलं वनं पापकर्मालयं चितां तमसाऽऽवृतां वा गुहां प्रविशत्यसावव्याधितो व्याधितो व्याधितश्च मृत्यवे प्रभवति । यो वा रक्तमाल्यानम्बरधर उच्चैर्हसन् दक्षिणां दिशं प्रयाति कपियुक्तो वा दारुणामटवीमभिव्रजति सोऽसुखान् भावानवाप्नोति ।

भयङ्कराकृतीनामसौम्यानां नग्नानां दण्डधारिणां काषायिणाम्, कृष्णवर्णानाम्, रक्तनेत्राणां पुरुषाणां वा स्वप्ने दर्शनमशुभावहम् ।

---

१. दृष्टः प्रथमरात्रे यः स्वप्नः सोऽल्पफलो भवेत् ॥ ( चरक०, इन्द्रिय० ५।४५ )

२. अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः ।
पश्येत् सौम्यं शुभाकारं तस्य विद्याच्छुभं फलम् ॥ ( चरक०, इ० ५।४६ )

३. न स्वप्ने यं पुनर्दृष्ट्वा स सद्यः स्यान्महाफलः ॥ ( च०, इ० ५।४५ )

४. सुश्रुतसंहिता, सूत्र० २९।७५–८१ ।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

स्वप्ने कृष्णानवदातवर्णा पापाचारा कलुषचरिता दीर्घनखा सुदीर्घकेशस्तनी मलिनवसना कषायवस्त्रावृता वनिता दृष्टिपथगा चेन्मरणाय रोगिणामरोगिणाञ्च रोगाय जायते।[1]

यदि चेद् स्वप्ने मुक्तमूर्धजा रक्ताम्बरधरा हसन्ती नृत्यन्ती स्त्री कमपि पुरुषं दक्षिणाशाभिमुखं कर्षति, स्वस्थः सन् व्याधितो भवति, व्याधितो वा मृत्युमृच्छति। यदि वा चाण्डालैः दक्षिणामुख आकृष्यते, प्रेतैः प्रव्रजितैः परिष्वज्यते, विकृतमुखैः श्वापदैर्मुहुराघ्रायते वा स्वप्ने तं गतासुं विद्यात्।

यश्च स्वप्ने पङ्केऽवसीदति मधु तैलं वा पिबति, पङ्कलिप्तगात्रो वा प्रहसेन्नृत्येच्च, दिगम्बरश्च शिरसि रक्तां स्रजं धारयति, सोऽपि स्वस्थः व्याधितो भवति, रुग्णो वा यमनिकेतनातिथिर्भवति।

स्वप्ने शाल्मली-पलाश-यूप-वल्मीक पारिभद्र( फरहद )काञ्चनारवृक्षारोहणं भूमिकम्पनञ्चाप्रशस्तम्। यश्च लवणं तिलान् पक्वमन्नं स्वप्नेऽश्नीत लभेत वा, सुरां वा पिबेत् स स्वस्थोऽपि रुग्णतां याति, रुग्णो वा म्रियते[2]।

**रोगारिष्टख्यापकाः स्वप्नाः**

ज्वरितानां शुना सख्यम्, शोषिणां कपिसख्यमुन्मादे राक्षसैरपस्मारे प्रेतैः प्रवर्तनम्, मेहवतामतिसारवताञ्च तोयपानम्, कुष्ठिनां स्नेहपानम्, गुल्मरोगे कोष्ठे वृक्षोत्पत्तिः, शिरोरुजि मूर्ध्नि वृक्षजननम्, छर्द्यां शष्कुलीभक्षणम्, श्वासे पिपासायाञ्चाध्वगमनम्, पाण्डुरोगिणो हरिद्राङ्कितं भोजनम्, रक्तपित्तजुष्टस्य शोणितपानमेतत् सर्वं स्वप्नदर्शनं रोगिणो विनाशसूचकं भवति[3]।

**अशुभस्वप्नदर्शने कर्तव्यनिर्देशः[4]**

पूर्वोक्तप्रकारानशुभान् स्वप्नान् दृष्ट्वा न च कस्मैचनाचक्षीत। प्रातश्चोत्थाय कृतनित्यक्रियोऽशुभस्वप्नदोषपरिहारार्थमुदारानाचारनियमान् परिपालयेत्। गो-विप्र-वृद्ध-सिद्धजनानर्चयेत्। स्वाचारो देवतापित्र्यतिथीन् पूजयेत्। माषान् तिलान् यथाशक्ति धातूंश्च विप्रेभ्यो दद्यात्। स्वेष्टदेवान् सपर्याभिः प्रसादयेत्। शुभान् मन्त्रान् गायत्रीं च जपेत्। देवालये रात्रित्रयं निवसेत्। विप्रांश्च सम्मानयेत्।

दुःस्वप्नजन्यबाधाप्रतीकारार्थञ्च दैवव्यपाश्रयं मन्त्रौषधिमणिमङ्गलवल्युपहारहोमनियमादिविधानं सेव्यम्।

एवञ्चात्र 'स्वप्नसम्प्रधारणा' नातिसंक्षेपविस्तरेण स्वालक्षण्यानुमानयुक्तिकुशलानामनुक्तार्थज्ञानार्थं सामान्यबुद्धीनाञ्च यथोक्तानुसरणार्थं वर्णिता भवति।

---

१. चरकसंहिता, इन्द्रिय० अ०, ५।२८–२९।
इत्येते दारुणाः स्वप्ना रोगी यैर्याति पञ्चताम्।
अरोगः संशयं गत्वा कश्चिदेव प्रमुच्यते॥

२. सुश्रुत० सूत्र० २९।५६–६६। ३. सुश्रुत० सूत्र० २९।६८–७०।

४. सुश्रुत० सू० २९।७१–७४

●●●

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# महाभारतयुद्धसमयसमीक्षणम्

डॉ० श्रीकृष्णमणित्रिपाठी
व्याकरणसाहित्यपुराणेतिहासाचार्यः
पुराणविभागाध्यक्षचरः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालस्य

विभज्य वेदं च तदर्थजातं चक्रे परामृश्य पुनः पुराणम् ।
तदीयमर्थञ्च विकृष्य दिव्यं यो भारतं तत्र मनो ममास्ताम् ॥

महाभारतयुद्धं हि प्राचीनभारतस्यास्ति एका महत्त्वपूर्णा घटना, यस्याः सम्बन्धो न केवलं भारतवर्षेण सह विद्यते, अपि तु समस्तेन एशियामहाद्वीपेन साकं वर्तते । प्राचीनं भारतीयं साहित्यमुत्खनने समुपलब्धानि वस्तूनि च दर्शं दर्शं कोऽपीतिहासज्ञः पुरातत्त्ववेत्ता वा पुरुषो नैतदस्वीकर्तुं शक्नोति यत् प्राचीनभारते एका उच्चतरा सर्वविधोन्नतशीला सभ्यता प्राय आसीत्, यत्र महाभारतयुद्धमपि सम्मिलितमस्ति ।

महाभारतयुद्धे भारतस्य तात्कालिकाः सर्वेऽपि नृपतयो भागमगृह्णन् । महायुद्धस्यास्य प्रभावस्तात्कालिकसाहित्यस्रष्टृष्वपि अजायत । विश्वस्य सर्वश्रेष्ठस्तात्कालिकः साहित्यस्रष्टा कृष्णद्वैपायनो महर्षिव्यासो द्वापरयुगस्यान्तिमे भागे पराशरमुनिद्वारा राज्ञ उपरिचरवसोर्वीर्यंजायां निषादराजस्य पोष्यपुत्र्यां मत्स्यगन्धायां नाम्ना सत्यवत्यां भगवतो विष्णोरंशेनावततार । तदुक्तं श्रीमद्भागवतस्य प्रथमे स्कन्धे चतुर्थाध्याये—

द्वापरे समनुप्राप्ते तृतीये युगपर्यये ।
जातः पराशराद् योगी वासव्यां कलया हरेः ॥

यो हि वेदमेकं चतुर्षु भागेषु विभज्य तदर्थजातश्चानुसन्धाय तदुपबृंहणार्थमष्टादशपुराणानि निर्माय महाभारतनाम्ना प्रसिद्धमितिहासं रचयाञ्चकार । तत्र महाभारतयुद्धस्य सर्वाङ्गीणं विवेचनं स्वकीये ऐतिहासिके ग्रन्थे महाभारते सोपष्टम्भं कृतवान् । महाभारतानुसारं महाभारतयुद्धे कुरुक्षेत्रस्य परिसरभूमौ समवेताया अष्टादशाक्षौहिणीसेनाया अष्टादशसु दिनेषु संहारो जातः । सम्भावये एषामष्टादशानां दिनानामाधारेणैव महाभारतेऽष्टादशपर्वणां गीतायाश्चाष्टादशाध्यायानामुल्लेखो विद्यते । एवमेवाष्टादशानां पुराणानामष्टादशानामुपपुराणानामष्टादशानां च स्मृतीनामपि निर्माणमजायत ।

ऐतिहासिकमिदं महत्त्वपूर्णं महाभारतयुद्धं कदाऽभवदित्येतदद्यत्वे तर्कवादिषु समालोचकेषु महतः कुतूहलस्य विषयो वरीवर्ति । भिन्नभिन्नतर्काणामाधारेण विभिन्नैर्विद्वद्भिर्भिन्ना भिन्ना धारणा व्यक्तीक्रियन्ते ।

महाभारतयुद्धस्य तिथिनिर्धारणकर्तॄणां समालोचकमनीषिणां प्रायः प्रमुखाः पक्षा दृश्यन्ते । तत्रैकः पक्षः पौराणिककथानकमक्षरशः सत्यं मनुते, द्वितीयः पक्षः पौराणिकमाख्यान-

CC-0. Sampurnanand University Collection. Digitized by eGangotri

मसत्यं स्वीकुर्वाणो बाह्यानामैतिहासिकसाधनानामाश्रयणं कुरुते, तृतीयश्च पक्षो भारतीयानां ज्योतिर्विदामस्ति, यो नक्षत्रगणनाया आधारेण महाभारतयुद्धकालं कलयते। एतेषु त्रिष्वपि मतेषु न परस्परं मतैक्यं दृश्यते। यथा हि—

**प्रथमं मतम्**

भारतीयपरम्परानुसारं महाभारतयुद्धं द्वापरयुगस्यान्तिमे भागे कलियुगस्य चारम्भेऽभवत्, यतो हि स्वयं महाभारतं महाभारतयुद्धसमयं सङ्केतयति—

अन्तरे चैव सम्प्राप्ते कलिद्वापरयोरभूत्।
समन्तपञ्चके युद्धं कुरुपाण्डवसेनयोः॥

अतः कलि—द्वापरयोर्युगयोः सन्धिकाले कौरवाणां पाण्डवानाञ्च सेनयोः कुरुक्षेत्रस्य विशालभूमौ भीषणं महाभारतजन्यमजनीति निश्चप्रचम्।

वस्तुतः प्राचीनभारतीयपरम्परा शास्त्रीयविचारपद्धत्यनुसारं भारतेऽन्यदेशवत् कालगणनाया न विचारोऽजायत, किन्त्वत्र कालस्य विवेचनं काष्ठा-निमेष मुहूर्त-तिथि-पक्ष-मास-ऋतु-वर्ष-युग-महायुग-मन्वन्तर-कल्प-पर-परार्द्धादिरूपेण जातमस्ति। वायुपुराणं हि स्पष्टं निर्दिशति यत् पुराणेषु युगमानं केवलं भारतवर्षस्य कृते एव कृतमस्ति——

चत्वारि भारते वर्षे युगान्याहुर्मनीषिणः। (५७।२२)

अतो भारतीयैर्मनीषिभिः परम्परामेनामेवानुसरद्भिः स्वासु स्वासु कृतिषु अस्या एव पद्धत्या उल्लेखः कृतः।

महाभारतयुद्धं यस्मिन् वर्षेऽभवत् तस्मिन् वर्षे एकः पक्षस्त्रयोदशदिनात्मक आसीत्, यस्याद्यन्तयोः शशिसूर्ययोर्ग्रहणद्वयं जातम्। अपि च सर्वे ग्रहा एकत्र मघानक्षत्रे एवातिष्ठन्, एवंविधो विचारो भारतीयशास्त्रेष्वेवास्ति। अतो भारतीयपरम्परानुसारं महाभारते कलिद्वापरयोः सन्धिकाले जातस्य महाभारतयुद्धस्यास्ति सङ्केतः।

महाभारतयुद्धं यस्मिन्नहनि समाप्तम्, तद्द्वितीये दिने धर्मराजस्य युधिष्ठिरस्य हस्तिनापुर-राज्यलाभोऽभवत्। भारतसावित्र्यामुल्लिखितमस्ति यद् हेमन्तर्तोः प्रथमे मासे मार्गशीर्षे शुक्लपक्ष-त्रयोदश्यां तिथौ भरणीनक्षत्रे महाभारतयुद्धस्यारम्भोऽभवत्। पौषमासस्य कृष्णपक्षीयामावास्यायां मध्याह्ने शल्यो निहतः, तथा तद्दिने एव सन्ध्याकाले गदायुद्धे भीमद्वारा दुर्योधनस्य वधो जातः—

हेमन्ते प्रथमे मासे शुक्ले पक्षे त्रयोदशीम्।
प्रवृत्तं भारतं युद्धं नक्षत्रे यमदैवते॥
अमावास्यासु मध्याह्ने निहितः शल्य एव च।
अमावस्यासु सन्ध्यायां राजा दुर्योधनो हतः॥

एवं मार्गशीर्षशुक्लत्रयोदशीतो महाभारतयुद्धमारब्धम्। अष्टादशदिनानन्तरं पौषकृष्णामावस्याया मध्याह्ने शल्यस्य, सायंकाले च दुर्योधनस्य वधोऽभवत्। तस्य द्वितीये दिने च पौषशुक्लप्रतिपदि महाराजस्य युधिष्ठिरस्य राज्यलाभो जातः।

१. श्रीमद्भागवतम्—१।४।१४।
२. महाभारतम्—१।२।१३।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

महाभारतस्य मुसलपर्वणि लिखितमस्ति यद्धर्मराजयुधिष्ठिरेण स्वराज्यलाभात् षट्षष्टितमे वर्षे विपरीतदशायाः स्वप्नो दृष्टः—

षट्त्रिंशे त्वथ सम्प्राप्ते वर्षे कौरवनन्दनः ।
ददर्श विपरीतानि निमित्तानि युधिष्ठिरः ॥

एवं स्त्रीपर्वणः प्रसङ्गे प्रोक्तमस्ति यत् स्वकुटुम्बिनो मृतान् विलोक्य शोकातुरा विलपन्ती गान्धारी साक्रोशं निर्भर्त्सयन्ती भगवन्तं श्रीकृष्णमुवाच—अरे श्रीकृष्ण ! त्वया परस्परं प्रयुध्य म्रियमाणान् कौरवान् पाण्डवांश्चावलोक्य कथं तेषामुपेक्षा कृता । त्वमासीः शक्तिशाली, त्वयि उभौ पक्षौ प्रबोध्य युद्धाद् विरतीकरणाय सामर्थ्यमासीत् । सर्वविधसामर्थ्यवतापि त्वया नूनमुपेक्षिता एते विनष्टाः । अतस्त्वमसि महान् दोषी । केशव ! पतिव्रतया मया पतिदेवसेवया यत् किञ्चित्तप अर्जितम्, तेन दुर्लभेन तपोबलेन त्वां शपामि यदितः परं षट्त्रिंशे वर्षे समुपस्थिते तव कुटुम्बिनो मन्त्रिणः पुत्रपौत्रादयश्च सर्वे परस्परं प्रयुध्य विनंक्ष्यन्ति, तथा त्वमपि तेषां परोक्षमनाथवन्निधनं यास्यसि । ततो भरतवंशस्य स्त्रीवत् तव कुलस्यापि स्त्रियोऽपि विलपिष्यन्ति—

त्वमप्युपस्थिते वर्षे षट्त्रिंशे मधुसूदन ।
हतज्ञातिर्हतामात्यो हतपुत्रो वनेचरः ॥ ( २५।४४ )

एतदनुसारं महाभारतयुद्धात् षट्त्रिंशे वर्षे भगवान् श्रीकृष्णः स्वकीयं परधाममुपगतः, तदैव धर्मराजेन युधिष्ठिरेणापि विपरीतदशास्वप्नमालोक्य द्रौपद्या भ्रातृभिश्च साकं स्वर्गारोहणाय हिमालयमुद्दिश्य प्रयाणं कृतम् ।

श्रीमद्भागवतानुसारं यस्मिन् समये यदुवंशसमुद्भवो भगवान् श्रीकृष्णचन्द्र इमां भारतभुवं विहाय परलोकाय प्रस्थितः, तस्मिन्नेव समये तस्य कलियुगस्य प्रवेशोऽभवद्, यस्य समये जनानां पापकर्मणि प्रवृत्तिर्जायते—

विष्णोर्भगवतो भानुः कृष्णाख्योऽसौ दिवंगतः ।
तदाविशत् कलिर्लोकं पापे यद् रमते जनः ॥ ( १२।। २ । २९ )

अपि च—

यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव तदाहनि ।
प्रतिपन्नं कलियुगमिति प्राहुः पुराविदः ॥ ( १२ ।२ । ३३ )

विष्णुपुराणमपि समर्थयदेतदेव निर्दिशति यद् यदा भगवतोंऽशो वसुदेवकुले प्रादुर्भूतो भगवान् श्रीकृष्णः स्वर्जगाम, तदैव कलेरागमनं जातम्—

यदैव भगवद्विष्णोरंशो यातो दिवं द्विज ।
वसुदेवकुलोत्पन्नस्तदैव कलिरागतः ॥ ( ४।२।२४ )

कियतां विपश्चितां कथनमस्ति यत् कलेरागमनं तु भगवतः श्रीकृष्णस्य परलोकगमनात् पूर्वमेव जातमासीत्, परं यावत् स पृथिव्यामतिष्ठत्, तावत् तस्य प्रभावो नाभवत्, दिवंगते तस्मिन् स प्राभवत्—

यावत् स भगवान् विष्णुः पस्पर्शेमां वसुन्धराम् ।
तावत् पृथ्वीं पराक्रान्तुं समर्थो नाभवत् कलिः ॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

एभिः पौराणिकैः प्रमाणैः सुस्पष्टं भवति, यद् भगवान् श्रीकृष्णो महाभारतयुद्धात् षट्त्रिंशे वर्षे परलोकवासी बभूव । पाण्डवैश्चाभिमन्युपुत्रं परीक्षितं हस्तिनापुरस्य राज्यसिंहासनेऽभिषिच्य स्वर्गारोहणनिमित्तं हिमालये प्रस्थितम् ।

भातीयानुश्रुत्यनुसारं महाभारतयुद्धानन्तरं यौधिष्ठिरसंवत् प्राचलत् । ततो विक्रमसंवत आरम्भोऽभवत् । तदनन्तरञ्च शालिवाहनशकमारब्धम् । भारतीयज्योतिषगणनानुसारं कलेरारम्भो भाद्रपदे मासे कृष्णे पक्षे त्रयोदश्यां तिथौ रविवासरे भरणीनक्षत्रे व्यतिपातयोगेऽर्द्धरात्रिसमये मन्यते । भगवतः श्रीकृष्णस्य स्वर्गगमनं पाण्डवानाञ्च स्वर्गारोहणम् ३०४४ बि० सी० पूर्वं स्वीक्रियते । एतस्य पुष्टिः ६४७ वि० सी० समये समुत्कीर्णेन निधानपुरस्य ताम्रपत्रेणापि भवति ।

रविकीर्तिद्वारा लिखितात् पुलकेशिनद्वितीयशिलालेखतो नूनं स्पष्टं भवति यत् ततः पूर्वं महाभारतयुद्धात् ३७३५ वर्षाणि, तथा शकराजतः ५५६ वर्षाणि च व्यतीतान्यासन्—

त्रिंशत्सु त्रिसहस्रेषु भारतादाहवादितः ।
सप्ताब्दशतयुक्तेषु गुणेष्वेतेषु पञ्चसु ॥
पञ्चाशत्सु कलौ काले षट्सु पञ्चशतासु च ।
समासु समतीतासु शकानामपि भूभुजाम् ॥

शिलालेखस्यास्य समर्थनं सिद्धान्तशिरोमणितो ज्योतिर्मकरन्दतोऽपि भवति—

नन्दाद्रीन्दुगुणस्तथा शकनृपस्यान्ते कलेर्वत्सराः । ( सि० शि० )
शाको नवागेन्दुकृशानुयुक्तः कलेर्भवत्यब्दगुणो युगस्य । ( ज्यो० म० )

एतदनुसारम् ३७३५ बि० सी०तः ५५६ शकसंवतो न्यूनीकरणे कलिसंवत आरम्भः ३१७९ शाकाब्दपूर्वं भवति । तत्रापि शकविक्रमयोः अन्तर्भूतानाम् १३५ वर्षाणां वियोगेन ३०४४ बि० सी० वर्षसिद्धिर्भवति ।

तथा च भारतीयपरम्परानुसारं समेषां कर्मणामारम्भस्यावसरे सङ्कल्पोच्चारणे देशकालादीनां नामग्रहणस्य भवत्यावश्यकता । तदनुसारं भारतीयेषु पञ्चाङ्गेषु परम्परातः प्रतिवर्षं विक्रमसंवत उल्लेखो जायत एव । एवम् ३०४४ वर्षेषु वर्तमानविक्रमसंवतः २०३३ वर्षाणां योगेन ५०७७ वर्षसमयः सञ्जायते । तत्र कृष्णप्रयाणपाण्डवस्वर्गारोहणतः पूर्ववर्तिनाम् ३६ वर्षाणां सङ्कलनेन भवति कलियुगारम्भस्य निश्चितः ५११३ वर्षसमयः । यस्य स्पष्टीकरणमेवंविधमस्ति—

| | | |
|---|---|---|
| ( क ) महाभारताद् युधिष्ठिरस्वर्गारोहणं यावत् | ३६ | वर्षाणि |
| ( ख ) कलेरारम्य विक्रमसंवदारम्भपर्यन्तम् | ३०४४ | ,, |
| ( ग ) वर्तमानविक्रमसंवत्पर्यन्तम् | २०३३ | ,, |
| योगः | ५११३ | ,, |

इत्थं भारतीयज्योतिषगणनापरम्परानुसारं कलियुगस्यारम्भकालः पञ्चसहस्रवर्षपूर्वमेवाजायत । अतो भारतयुद्धमपि पञ्चसहस्रवर्षपूर्वमेव जातमिति निश्चप्रचम् ।

परं वराहमिहिरेण स्वकीयबृहत्संहितायां गर्गसंहिताया वचनमेकमुद्धृतं विद्यते, यस्य तात्पर्यमस्ति—यस्मिन् समये धर्मराजो युधिष्ठिरः पृथिव्यामस्यां शासनं कुर्वाण आसीत्,

CC-0. Sampurnanand University Collection. Digitized by eGangotri

तस्मिन् समये सप्तर्षयो मघानक्षत्रे विद्यमाना आसन् । अपि च शकसंवतो युधिष्ठिरस्य २५५६ वर्षाणि व्यतीतानि बभूवुः—

आसन् मघासु मुनयः शासति पृथिवीं युधिष्ठिरनृपतौ ।
षड्द्विकपञ्चद्वियुतः शककालस्तस्य राज्ञश्च ॥

एवं भारतीयानां ज्योतिर्विदां मतेन निर्द्धारिताः तिथयो न परस्परं सङ्घटन्ते । इमाः पुलकेशिनद्वितीयशिलालेखेऽङ्कितिथितो विचारे तु नितरां सन्देहास्पदा भवन्ति ।

**द्वितीयं मतम्**

पुराणसङ्कलनकर्तृभिरैतिहासिकसमालोचकैस्तु पुराणानामाधारेणैकाऽन्यैव दृष्टिः प्रस्तुताऽस्ति । वायुपुराणे प्रोक्तमस्ति यद् नन्दवंशस्य प्रथमाद् नृपतेर्महापद्मनन्दात् १०५० वर्षपूर्वं राज्ञः परीक्षितो जन्म जातमासीत्—

महापद्माभिषेकात्तु जन्म यावत् परीक्षितः ।
एतत् वर्षसहस्रं तु ज्ञेयं पञ्चाशदुत्तरम् ॥ ( ७२।३५ )

श्लोकस्यास्यार्थमैतिहासिकैः समालोचकैर्विभिन्नाभिर्दृष्टिभिः कृत्वा महाभारतयुद्धस्य तिथयो भिन्ना भिन्ना निश्चिताः सन्ति । एवंविधा द्विधा विद्वांसो विद्यन्ते एके भारतीया, अपरे च यूरोपीयाः । यूरोपीयेषु विद्वत्सु पार्जिटरमहोदयेन स्वकीये 'एंश्येन्ट इण्डियन हिस्टोरिकल ट्रेडिशन' नामके पुस्तके महाभारतयुद्धस्य समयः ९५० ई० पूर्वमभिमतमस्ति । कर्नलविल्फोर्ड-महोदयेन 'एशियाटिक रिसर्चेज' नामके पुस्तके १३७० ई० पू० स्वीकृतम् । एवं प्राटेन १२०० ई० पू०, बुकाननेन १३०० ई० पू०, विल्सन-कोलब्रुकाभ्यां च ई० पू० १४०० चतुर्दशशती स्वीकृतास्ति ।

भारतीयेषु विद्वत्सु लोकमान्यबालगङ्गाधरतिलकमहोदयेन स्वकीये 'ओरायन'नामके ग्रन्थे बृहद्रथवंशस्य ३२ परम्परां मत्वा १४०० ईसापूर्वं महाभारतयुद्धस्य कालोऽङ्गीकृतो विद्यते । काशीप्रसादजायसवाल-जयचन्द्रविद्यालङ्काराभ्याम् १४२४ ई० पू०, बाबूवङ्किमचन्द्र-चटर्जीमहोदयेन च १४३० ई० पू० स्वीकृतम् । जे० रावमतानुसारं युद्धमिदम् ३१३९ ई० पूर्वं जातम् । कल्हणेन स्वस्यां राजतरङ्गिण्यां काश्मीरस्येतिहासमङ्कयता महाभारतयुद्धस्य समयः २४४९ ई० पूर्वमभिमतम् । कतिपये च विद्वांसो वैदिकसाहित्ये वर्णितायाः परम्पराया आधार-मधिकृत्य महाभारतयुद्धस्य तिथिः १४०० ई० पू० स्वीकृतास्ति ।

बाह्यसामग्रीसाधनानामाधारेण विचारं कुर्वत्सु भारतीययूरोपीयेषु द्विविधेषु ऐतिहासिक-समालोचकेषु विद्वत्सु सर्वतो न्यूने पार्जिटरमहोदयस्य मते महाभारतयुद्धस्यारम्भकालः ९५० ई० पू० विद्यते । तत्र वर्तमानख्रीष्टीयसंवतः १९७७ वर्षयोजनेन भवति महाभारतयुद्धस्य समयः २९२७ वर्षपूर्वम् ।

**तृतीयं मतम्**

पुराणेषु वर्णिताया वंशावल्या आधारं मन्यमानैः पौराणिकैर्विद्वद्भिस्तु महाभारत-युद्धानन्तरं भाविनां नृपतीनां समयं गणयित्वा महाभारतयुद्धस्य कालं निर्द्धारयन्ति । श्रीमद्भा-गवत-विष्णुपुराण-वायुपुराण-मत्स्यपुराण-ब्रह्माण्डपुराणेषु महाभारतयुद्धानन्तरं भाविनां राज्ञां

CC-0. Sampurnanand University Collection. Digitized by eGangotri

वंशावल्याः कालस्य च स्पष्टमुल्लेखो विद्यते। पुराणेष्वेतेषु महाभारतयुद्धस्य महापद्मनन्दाभिषेकस्य च मध्ये चतुर्णां बृहद्रथवंश-प्रद्योतवंश-शिशुनागवंश-नन्दवंशानां पूर्वं विवरणं प्रदत्तमस्ति। एषां समेषां वंशानां राज्यकालः १६१० वर्षात्मकः प्रोक्तो विद्यते।

यथा युधिष्ठिरानन्तरमभिमन्युपुत्राद् राज्ञः परीक्षित आरभ्य क्षेमकपर्यन्तम् २८ राजभिः १००० वर्षाणि यावद् राज्यमकारि, तथैव धर्मराजस्य युधिष्ठिरस्य राजसूययज्ञोपक्रमे भीमद्वारा जरासन्धस्य वधो जातः, तथा महाभारतयुद्धे तत्पुत्रस्य सहदेवस्य मृत्युरजायत। ततः सहदेवपुत्रात् सोमापेः रिपुञ्जयपर्यन्तम् ३२ नृपतयोऽपि गिरिव्रजे १००० वर्षाणि यावद्राज्यमकुर्वन्। तथाहि महाभारतोत्तरं भविष्यद्राजवंशवर्णनप्रसङ्गे महर्षिर्व्यासो मत्स्यपुराणे—

सङ्ग्रामे भारते वृत्ते सहदेवे निपातिते।
सोमापिस्तस्य दायादो राजाऽभूत् स गिरिव्रजे॥ (२७०।१९)
द्वात्रिंशच्च नृपा ह्येते भवितारो बृहद्रथाः।
पूर्णवर्षसहस्रं तु तेषां राज्यं भविष्यति॥ ( २७०।२९ )

रिपुञ्जयस्यामात्यो मुनिकस्तं निहत्यात्मतनयं प्रद्योतं तत्स्थाने राजानं नियोजयामास। प्रद्योतवंशिनः पञ्च राजानः १३८ वर्षाणि राज्यमकार्षुः। तथाहि वायुपुराणे—

अष्टत्रिंशच्छतं भाव्याः प्रद्योताः पञ्च तु नृपाः। ( ९९।३१४ )

तदनन्तरं शिशुनागवंशीयाः १० नृपतयः ३६० वर्षपर्यन्तं राज्यमकुर्वन्—

शिशुनागा दशैवैते षष्ट्युत्तरशतत्रयम्।
समाः भोक्ष्यन्ति पृथिवीं कुरुश्रेष्ठ कलौ नृपाः॥ (श्री० भा० १२।२।७)

एवं महाभारतयुद्धानन्तरं सहदेवपुत्रात् सोमापेः शिशुनागवंशपर्यन्तम् ४७ ( ३२ × ५ × १० = ४७ ) नृपतयः १४९८ ( १००० × १३८ × ३६० = १४९८ ) वर्षाणि यावद् राज्यं चक्रुः। एषाम् १४९८ वर्षाणामाद्यन्तयोः कियन्तो मासा दिनानि च सम्भवितुमर्हन्ति, येषां सङ्कलनया १५१० वर्षाणि भवन्ति। एतदेव स्पष्टयता भगवता व्यासदेवेन श्रीमद्भागवते राजा परीक्षित् सुस्पष्टं समवोचि—

आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम्।
एतद् वर्षसहस्रं तु शतं पञ्चदशोत्तरम्॥ ( १२।२।२६ )

इतः परं नवभिर्नन्दैः १०० शतवर्षपर्यन्तं राज्यमकारि। तत्र २८ वर्षाणि महापद्मनन्देन तथा ७२ वर्षाणि तत्पुत्रैरष्टभिर्नन्दैश्च राज्यं कृतम्। सङ्कलनया नवनन्दानां राज्यकालः वर्षशतं भवति। तथाहि—

स एकच्छत्रां पृथिवीमनुल्लङ्घितशासनः।
शासयिष्यति महापद्मो द्वितीय इव भार्गवः॥
तस्य चाष्टौ भविष्यन्ति सुमाल्यप्रमुखाः सुताः।
य इमां भोक्ष्यन्ति महीं राजानः स्म शतंसमाः॥
नवनन्दान् द्विजः कश्चित् प्रपन्नानुद्धरिष्यति।
तेषामभावे जगतीं मौर्या भोक्ष्यन्ति वै कलौ॥ (श्री० भा० १२।१।१०-१२)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

मत्स्यपुराणे तु प्रोक्तमस्ति यत् शूद्रायां सञ्जातो महानन्दिपुत्रो महापद्मनन्दः कलिकांशजः सर्वक्षत्रान्तकर एकच्छत्रश्च राजा भूत्वा ८८ वर्षाणि यावद्राज्यं करिष्यति। ततस्तस्याष्टौ पुत्राः क्रमशः १२ वर्षेषु राजानो भविष्यन्ति। एवं शतवर्षानन्तरं तान् निहत्य कौटिल्यो मौर्यं चन्द्रगुप्तमभिषेक्ष्यति—

महानन्दिसुतश्चापि शूद्रायां कलिकांशजः।
उत्पत्स्यते महापद्मः सर्वक्षत्रान्तको नृपः॥
एकराट् स महापद्मः एकक्षत्रो भविष्यति।
अष्टाशीति तु वर्षाणि पृथिव्यां च भविष्यति॥
सकल्पादिसुता ह्यष्टौ समा द्वादश ते नृपाः।
महापद्मस्य पर्याये भविष्यन्ति नृपाः क्रमात्॥
उद्धरिष्यति कौटिल्यः समैर्द्वादशभिः सुतान्।
भुक्त्वा महीं वर्षशतं ततो मौर्यान् गमिष्यति॥ ( २७१।१७-२१ )

वायुपुराणानुसारं हि महापद्मद्वाराऽष्टाविंशतिवर्षपर्यन्तं राज्यकरणानन्तरं तत्पुत्रैः क्रमशो द्वासप्ततिवर्ष यावद्राज्यमकारि। एवं नन्दवंशद्वारा शतवर्षराज्यभोगानन्तरं कौटिल्यो मौर्यं चन्द्रगुप्तं राज्यसिंहासने स्थापितवान्। स च चतुर्विंशतिवर्षपर्यन्तं राज्यमकार्षीत्—

एकराट् स महापद्म एकच्छत्रो भविष्यति।
अष्टाविंशतिवर्षाणि पृथिवीं पालयिष्यति॥ ९९।३२६
चन्द्रगुप्तं नृपं राज्ये कौटिल्यः स्थापयिष्यति।
चतुर्विंशत्समा राजा चन्द्रगुप्तो भविष्यति॥ ९९।३३१

इत्थं सहदेवपुत्रसोमापित आरभ्य नन्दवंशपर्यन्तं ५६ राजानः १६१० वर्षाणि राज्यमकार्षुः। अत्र युधिष्ठिरराज्यकालस्य ३६ वर्षसंयोजनेन सिद्धयति यद् महाभारतयुद्धानन्तरं ५७ राजभिः १६४६ वर्षपर्यन्तं राज्यमकारि। तत्पश्चात् कौटिल्यद्वारा नन्दवंशप्रणाशानन्तरं चन्द्रगुप्तमौर्यस्य राज्यारोहणमजायत। तथा च पूर्वसङ्कलित १६४८ वर्षेषु चन्द्रगुप्तमौर्यस्य राज्याभिषेककालः ३२२ ई० पू० ईस्वी सन् १९७७ योजनेन भवति ३९४५ सङ्ख्या ( १६४६ × ३२२ × १९७७ = ३९४५ )।

इत्थं पुराणानुसारम् ३९४५ वर्षपूर्वं महाभारतयुद्धमजायत।

**पौराणिककालस्य स्पष्टीकरणम्—**

(क) महाभारतयुद्धतो नन्दवंशपर्यन्तम्— १६४६ वर्षाणि
(ख) चन्द्रगुप्तमौर्यस्य राज्यारोहणकालः— ३२२ ई० पू० व०
(ग) वर्तमानखीष्टीयसंवत् ( इसवी सन् )—१९७७
योगः— ३९४५

अनेन पौराणिककालेन वराहमिहिरस्य विषुवसाम्पातिकनक्षत्रस्यायनचलनगणितस्य च पूर्णतया सामञ्जस्यं जायते।

साम्प्रतं भूगर्भविद्याविशारदैरुत्खनने समुपलब्धानां वस्तूनामाधारेण यो हि महाभारतयुद्धस्य समयनिर्द्धारणाय प्रयासः क्रियते सोऽपि नास्ति सर्वथा विश्वसनीयः, यतो हि नित्यं नूतनानां



CC-0. Sampurnanand University Collection. Digitized by eGangotri

वस्तूनां भवति समुपलब्धिः। श्रूयते सम्प्रति हस्तिनापुरभग्नावशेषस्य यदुत्खननं समारब्धं तस्य चतुर्थांशोऽपि न पूर्णो जातः। इदानीं केवलमेकस्य कोणस्योत्खननं सम्पन्नम्। अतो यावदुत्खननं पूर्णं न भवेत्, तावद् महाभारतयुद्धसम्बन्धे किमपि निश्चितं मतं व्यक्तीकर्तुं न समीचीनं प्रतिभाति।

**उपसंहारः**

इत्थङ्कारं महाभारतयुद्धसम्बन्धे साम्प्रतं विभिन्नविचाराणामाधारेण भिन्नानि मतानि व्यक्तीक्रियन्ते। केषामपि मतानां न केनापि मतेन सामञ्जस्यमुपलभ्यते।

वस्तुतो यदा सहस्रद्वयादप्यल्पीयसि समये समुत्पन्नस्य ईसाईमतसंस्थापकस्य इसामशीहस्य जन्मदिवससम्बन्धे विश्वस्यैतिहासिका विद्वांसो नैकमताः सन्ति, तर्हि ईसातो बहुपूर्वजातस्य प्राचीनतमस्य महाभारतयुद्धस्य तिथौ सन्देहकरणं नाश्चर्यजनकं प्रतिभाति।

मदीयन्तु मतमस्ति यद् वेदवाङ्मयस्य सम्यगनुशीलनं विधाय महाभारतयुद्धस्य समयनिर्द्धारणमधिकमुपयुक्तं सेत्स्यति, यतो हि वैदिकं साहित्यं न तावत् सन्देहास्पदं विद्यते यावदन्यत् साहित्यम्। वेदस्य सर्वमान्यतायां द्वौ तर्कौ स्तो महान्तौ, सशक्तौ च।

(क) एकतर्कानुसारं वैदिकसाहित्यं विश्वस्मिन्नस्मिन् सर्वतः प्राचीनं साहित्यमस्ति,

(ख) द्वितीयतश्च वेदस्य मूलपाठे कथमपि विकृत्युत्पादनं न शक्यमस्ति, यतो हि तत्र पद-घन-क्रम-जटा-माला-शिखादिपाठद्वारा एवंविधा सुदृढा व्यवस्था कृतास्ति, यत् तत्र किमपि परिवर्तनं कर्तुं न शक्यते।

वैदिकसाहित्ये महाभारतवर्णितानां कियतां नृपतीनां परीक्षिद्वंशस्य च भूयो भूय उल्लेखो विद्यते, यत्र विदेहजनकस्यापि चर्चा विद्यते। यत्सभायां समवेता महान्तो मानिन ऋषयो महर्षयो मनीषिणश्च परीक्षिद्वंशविषये विचारं कुर्वन्ति स्म। अतो यदि वैदिकवाङ्मयस्य गभीरमनुशीलनं विधाय समीक्षात्मको विचारः क्रियते, तर्हि वेदाधारेण महाभारतयुद्धस्य प्रामाणिकं सर्वमान्यं च सङ्केतं समुपलब्धुं शक्येत। यतो वेदस्य उक्तीनां पुष्टिः मोहनजोदड़ो-हड़प्पाप्रभृतिषु जायमानैरन्वेषणैरपि समये समये जायत एव। सिन्धुघाटीसभ्यता तु वैदिकसभ्यताया साम्यं बिभर्ति।

संसारस्य समस्तानां देशानामितिहासस्तत्रत्यैर्विवेकिभिर्विद्वद्भिस्तत्रत्यप्राचीनानां साहित्यानामाधारेण निर्मीयते, परं पराधीनभारतस्येतिहासस्तैर्विदेशीयैर्विद्वद्भिर्विशेषेण समुपलब्धछिन्नभिन्नलेखानामुपकरणानाञ्चाधारेणैव लिखितुं प्रयासः कृतोऽस्ति।

येषां लेखकानामस्माकं शास्त्रेषु नैपदपि विश्वास आसीत्, तथा तेषामुद्देश्यं वेदा मेषचारकाणां गीतम्, पुराणानि चोपकथा, धर्मशास्त्राणि पक्षपातपूर्णानि, इतराणि शास्त्राणि कपोलकल्पितानि परस्परमसम्बद्धानि च कथयित्वाऽस्माकं परमप्राचीनायां भारतीयसंस्कृतौ सन्देहोत्पादनमात्रमासीत्। फलतः एवंविधैरितिहासैरस्मत्प्राचीनशास्त्राणामाधारे आधृता भारतीया विश्वकल्याणकारी संस्कृतिः संशयमापन्ना सती दोषदृष्ट्या द्रष्टुं प्रयत्यते उपेक्ष्यते च। अतोऽस्माकं शास्त्राणां तैः कल्पितैर्विदेशीयैरुपकरणैः सह न भवति सामञ्जस्यम्। अतो भारतीयपरम्परायां भारतीयशास्त्राणाञ्चाधारे भारतीयेतिहासस्य निर्माणं नितान्तमावश्यकम्।

● ● ●

CC-0. Sampurnanand University Collection. Digitized by eGangotri

लघुग्रन्थमाला—२७

पण्डितरमानन्दपतित्रिपाठिविरचितं

# रसिकजीवनम्

सम्पादकः

प्रो० करुणापतित्रिपाठी

कुलपतिः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वै० सं० २०३४

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# विषयानुक्रमणी



CC-0. Sampurnanand University Collection. Digitized by eGangotri

CC-0. Sampurnanand University Collection. Digitized by eGangotri

## अथ द्वितीयतरङ्गस्थविषयानुक्रमणी



## अथ तृतीयतरङ्गस्थविषयानुक्रमणी



CC-0. Sampurnanand University Collection. Digitized by eGangotri

## अथ चतुर्थतरङ्गस्थविषयानुक्रमणी



## अथ पञ्चमतरङ्गस्थविषयानुक्रमणी



## अथ षष्ठतरङ्गस्थविषयानुक्रमणी



## अथ सप्तमतरङ्गस्थविषयानुक्रमणी



—:०:—

CC-0. Sampurnanand University Collection. Digitized by eGangotri

श्रीशौ वन्दे

# प्रस्तावना

ब्राह्मीं बिन्दुमयीं वन्दे पराख्यां नादरूपिणीम् ।
विद्याज्योतिस्समुद्दीप्तां प्रतिभोल्लासभास्वराम् ॥

स्रवन्मदघटासक्तसङ्गुञ्जदलिसङ्कुलः ।
लसत्सिन्दूरपूरोऽसौ जयति श्रीगणाधिपः ॥

* * *

## नायिकाभेदो रसिकजीवनञ्च

**उपक्रमः ( मूलस्रोतः, नाटचशास्त्रम् )**

यद्यपि साहित्यशास्त्रे नायिकाभेदप्रसङ्गः शृङ्गाररसस्यालम्वनत्वेन परवर्त्तिकाले दृक्पथमवतरति, तथापि भरतनाट्यशास्त्रे विषयोऽयं मूलतः चर्चितः, यत्र हि वीजरूपेण प्रकीर्णोऽयं विषयोऽनेकत्र सन्दर्भे उल्लिखितः। कृत्स्नस्यास्य विषयस्य परिचयस्तु पश्चाद् न्यक्षेण वक्ष्यते। अत्र तु नाट्यशास्त्रीयरसप्रसङ्गे भूमिकारूपमधोलिख्यमानं विवेचनमवधेयम् ।

नाट्यशास्त्रे षष्ठाध्यायतो रसादीनां स्वरूपविवरणादि प्रारभ्यते, ततः पूर्वं पञ्चसु अध्यायेषु केवलं नाट्यशास्त्रीयविषयाणामवतारणायाः पौराणिकी सांस्कृतिकी च भूमिका प्रस्तावना वाऽस्ति, अस्या भूमिकायाः स्वरूपं पश्चाद् वक्ष्यते। इदमत्र वक्तव्यम्—नाट्यशास्त्रे हि नायिकानामन्येषाञ्च नाट्यगतपात्राणां चर्चाः प्रामुख्येण द्वाविंशतितमेऽध्याये, ततः परस्मिन् वा, रसस्तु षष्ठेऽध्याये चर्चितः। तत्र इदम्प्रथमतया प्रमुखतत्त्वरूपो रस इति ।

नायिकानां नायकानाञ्चाहार्याभिनयान्तर्गतत्वमित्येष नाट्यशास्त्रसमयः ।

नाट्यशास्त्रीयविषयावतरणप्रसङ्गे महर्षिणा भरतेन वक्ष्यमाणाः पञ्च पक्षाः सङ्केतिताः—

(क) सङ्ग्रहः
(ख) कारिका
(ग) निरुक्तम्
(घ) रसः
(ङ) भावश्च ।

सन्दर्भेऽत्र रसानां रसाङ्गानाञ्च नामग्राहमुल्लेखः कारिकासु कृतः। तथा च अष्ट रसान्निर्दिशन् भरत आह—

CC-0. Sampurnanand University Collection. Digitized by eGangotri

'शृङ्गार-हास्य-करुण-रौद्र-वीर-भयानकाः ।
बीभत्साद्भुतसञ्ज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥
एते ह्यष्टौ रसाः प्रोक्ता द्रुहिणेन महात्मना ॥ इति ।

अत्रेदमाकूतम्—औपनिषदोऽयं खलु राद्धान्तः 'रसो वै सः' इति । एनं सिद्धान्तमुपजीव्य रसस्तावद् आध्यात्मिकभूमिकास्थितः 'ब्रह्माभिन्नः' 'ब्रह्मानन्दसहोदरः' वेति प्रतिष्ठां भजते । पक्षोऽयं किल अर्वाचीनैः आनन्दवर्धनभट्टनायकाभिनवगुप्तपादमम्मटाद्याचार्यैस्समर्थितः, परं भरतसिद्धान्तवर्णितो रसस्तावद् नाट्याश्रितलौकिकानन्दभूमिप्रतिष्ठित आस्वादनरूपः । अदसीयं मूलं हि सांस्कृतिकी मङ्गलकामनापरम्परैव । लोकव्याप्तग्राम्याचारतो मानवसमाजं पृथक्कृत्य सदाचरणाय धर्माचरणाय च प्रेरणैवास्य प्रथमं लक्ष्यम् ।

रसतत्त्वस्यास्यैष महिमा दृश्यश्रव्योभयविधकाव्ये प्रतिष्ठितः पश्चात् । तथा चायं निष्कर्षः—

यद्यपि आख्यानकप्रसिद्धपरम्परानुसारं नाट्ये 'रसतत्त्वस्य' प्रवर्तको द्रुहिण इति महर्षिणा भरतेन व्याहारि, तथापि शास्त्रस्वीकृतसिद्धान्तप्रतिपादनशैल्या रसस्य सर्वप्रथमं निरूपणं नाट्यशास्त्र एव दृश्यते, अतश्च महर्षिभरतोऽयं 'रससिद्धान्तप्रवर्तकः' इत्येव व्यावहारिकी दृष्टिरित्यत्र नाऽस्ति काचिदापत्तिः ।

इति तु जानन्त्युररीकुर्वन्ति च भारतीयसाहित्यशास्त्रानुशीलयितारो यद् भरतेन नाट्याङ्गभूतोऽयं रसप्रस्तावस्योपक्रमः ।

अतश्च तेन त्रयोदशविधानां नाट्यसङ्ग्रहाणामादौ 'रसः' प्राथम्येन निर्दिष्टः, तत्रैव च तेन सह भावाभिनयादयोऽपि पश्चान्निर्दिष्टाः[१] ।

एतत्तु आञ्जस्येन व्याहर्तुं पार्यते यन्नाट्यशास्त्र एषामेव नाट्यसङ्ग्रहभूततत्त्वानां विवेचनं मुख्यं प्रतिपाद्यम्, ततश्च एतेषां साङ्गोपाङ्गविवेचनैः सविस्तरं निरूपणैर्भेदादिकथनैश्च नाट्यशास्त्रस्य महान् विस्तरो जात इति ।

उक्तमेतत्—नाट्यशास्त्रे आदितोऽध्यायपञ्चकं हि केवलं प्रस्तावना भूमिका

---

१—रसा भावा अभिनया धर्मी वृत्तिप्रवृत्तयः ।
सिद्धिस्वरास्तथाऽऽतोद्यं गानं रङ्गश्च सङ्ग्रहः ॥
उपचारस्तथा विप्रा मण्डपश्चेति सर्वशः ।
त्रयोदशविधो ह्येष ह्यादिष्टो नाट्यसङ्ग्रः ॥

द्र० नाट्यशास्त्रम् ६।१०—११ ( काव्यमाला ४२, निर्णयसागरसंस्करणम् १९४३ )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

वा। वस्तुनः तत्र पौराणिकशैल्या नाट्यस्य उद्भवः, विकासः, उपयोगिता, प्रयोजनम्, प्रवर्तनम्, उद्देश्यमित्यादयो विषया निरूपिताः। प्रेक्षागृहम्, रङ्गः, रङ्गदेवता, तत्पूजनञ्चेत्यादिविषया वर्णिता निर्णीताश्च। ततः परं यथाविस्तरं तत्तन्नाट्यानां नृत्यानाञ्च प्रयोगं निरूप्य पूर्वरङ्गविधानं विवेचितम्। एवञ्च अध्यायपञ्चकेऽत्र निर्णीत उक्तो विषयो वस्तुतस्तु नाट्यशास्त्रस्य प्रस्तावनात्मिका भूमिकैव।

शास्त्रस्यास्य मुख्यस्य प्रतिपाद्यवस्तुनो निरूपणं तु षष्ठाध्यायत एव प्रारभ्यते, तत्र च प्रासङ्गिकानां समेषां सिद्धान्तानाम्, तत्सम्बद्धविषयाणां च विवेचनं तात्कालिकविश्वकोषशैलीमनुसृत्य सविस्तरं कृतम्।

ग्रन्थेऽत्र विषयविवेचनपरिधिः तथा व्यापको विशालश्च वर्त्तते यथा तत्र तत्र प्रसङ्गे समग्रं विवेच्यं वस्तु विनिरूपितं जातम्। तत्र न किमप्यवशिष्यते। यथा––षष्ठसप्तमयोरध्याययो रसभावादि महता विस्तरेण व्याख्यातम्। विवेचनस्यास्य विशालताऽनेनैवोन्नेया यत्ततोऽर्वाचीना रसनिरूपका आचार्या महर्षिभरतनिर्दिष्टविचारवारिधिपरिधिवेलामतिवर्तितुं न प्रबभूवुः, अपि तु सर्वे तद्विचारमेवान्वगमन्।

रसाभिव्यक्तेः रसास्वादस्य च पद्धतिम्, तयोर्दार्शनिकीं पृष्ठभूमिं विचारसरणिमाश्रित्य च प्रायस्तरां शास्त्रार्थशैल्या रसो मीमांस्यते। 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति सूत्रस्य व्याख्यासु संयोगपदवाच्यस्य सम्बन्धस्य कल्पनासु च बुद्धिवैभवप्रदर्शनादि चानल्पं सर्वैरकारि। परं शास्त्रानुमोदिततत्त्वचिन्तनविचारेण नवीनप्रमेयपरिचेयपरम्परा सम्भवतो यदा कदैव विकसिता दृश्यते।

एवञ्च महर्षिणा भरतेन रसतत्त्वमिदमुच्चैस्तरां प्रतिष्ठापितमिति हि निष्कर्षः। तेन हि तत्त्वद्वयीमहत्त्वं खलु साभिनिवेशं पुरस्कृत्य प्रकटितम्। तच्च तत्त्वद्वयम्—(क) रसभावादि, (ख) अभिनयश्चेति।

अत्रापि किल द्वयोर्मध्ये 'रसः' एव नाट्ये प्राधान्यं भजते, केन्द्रभूतत्वसर्वाश्रयत्व––मुख्यसाध्यत्व-प्रधानास्वाद्यत्वहेतुभिः, नाट्यस्य प्राणत्वाच्च। रसस्य साधनम्, प्रतिपादनम्, रसनमास्वादनमधिगमनमभिव्यञ्जनञ्च 'अभिनय'-द्वारा एव जायन्ते।

एतत् खलु अभिनयस्य अभिनयत्वम्, यत्तद् ध्रुवमेव कलानुप्राणितम्, यथा सम्भवं च लोकाचारस्य यथार्थानुकरणं स्यात्, ततश्च अभिनयोऽयं लोकशास्त्रानुसारी भवेत्। अनुकृति-प्रतिकृत्योरुपयोजनविनियोजनाभ्यामित्थमभिनयस्य प्रयोगो विधेयो येन साध्यसम्पादने साफल्यं जायेत।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

यत्खलु नाट्यशास्त्रस्य केन्द्रात्मस्थानीयसाध्यरूपत्वादेव विवेक्तव्यं वस्तु रस-भावादि, तस्यारम्भश्च षष्ठाध्यायस्य रसप्रकरणतो भवति, तत्र कारणं रसभावादिवस्तुनो **मुख्यसाध्यत्वम्।**

रसतत्त्वमिदं तावद् वाचा, अङ्गेन, सत्त्वेन च युक्तैस्तैस्तैरभिनयैर्व्यञ्जितस्य स्थायिभावस्यास्वादनरूपमिति प्राह तत्रभवान् आचार्यभरतः। सुमनसां सहृदयानां (सामाजिकानाम्) प्रेक्षकाणां कृते हि यदा तैस्तैः पूर्वोक्तैर्विशेषैरभिनयोऽत्र आस्वादनीय-कोटिमाटीकते, अनुभूयते च हर्षादि, तदैव ते स्थायिभावा 'नाट्यरसाः' इत्यभिख्यां लभन्ते।[1]

एतदत्र विशेषतोऽवधेयं यच्छ्रीमद्भिर्भरताचार्यैरनुपदं प्रतिपादितस्य तत्त्वस्यैव नाट्यरसात्मकत्वमङ्गीकृतम्, ततश्चायमर्थो निर्गलितो यद्—नाट्यप्रसङ्ग एवाचार्येण रसो विख्यापितः, एवं वाचिकेन, आङ्गिकेन, सात्त्विकेन चाभिनयेन विशेषेण ध्रुव-मुपेतस्य भावाभिनयस्य रसव्यञ्जकत्वमभिहितमिति।

विषयोऽयं खलु बहुभिः प्राच्यैः पाश्चात्त्यैश्च विद्वद्भिर्यथाविस्तरं विचारपथ-मानीतः। अतो हेतोरत्र पुनरुक्तिमविधाय इदमेव निवेदनीयं यदाचार्येण भरतेन यत्तत्त्वं दृश्यकाव्यसन्दर्भ एव नाट्याङ्गभूतमेव च प्रतिष्ठापितम्, तदेव पश्चात् श्रव्यकाव्यस्यापि केन्द्रस्थानीयं तत्त्वमङ्गीकृतं विद्वद्भिरालङ्कारिकैः।

**नायिकाभेदाः**

यत् खलूपरिष्टाद् रसविषये नाट्यशास्त्रीयनिरूपणस्य प्राधान्यमभिहितं नायिका-भेदविषयेऽपि तत्प्राधान्यं परिलक्ष्यते। एतत् खलु स्पष्टं प्रतिभाति यन्नायिकाभेदस्या-प्युत्पत्तिस्रोतोऽपि नाट्यशास्त्रोपज्ञमेव। ततः प्रारभ्य च अब्दानां पारेसहस्रं समतीत्य हिन्दीसाहित्येतिहासविख्यातरीतिकाले अयमपि विषयो बहुशाखोपशाखादिरूपैः प्रकाममुपबृंहितः।

---

१—"'नानाभावाभिनयव्यञ्जितान् वागङ्गसत्त्वोपेतान् स्थायिभावानास्वादयन्ति सुमनसः प्रेक्षकाः, हर्षादींश्चाधिगच्छन्ति तस्मान्नाट्यरसा इत्यभिव्याख्याताः। अत्रानुवंश्यौ श्लोकौ —

यथा बहुद्रव्ययुतैर्व्यञ्जनैर्बहुभिर्युतम्।
आस्वादयन्ति भुञ्जाना भक्तं भक्तविदो जनाः॥
भावाभिनयसम्बद्धान् स्थायिभावांस्तथा बुधाः।
आस्वादयन्ति मनसा तस्मान्नाट्यरसास्स्मृताः।

(द्र० नाट्यशास्त्रम्, काव्यमालासंस्क० अ० ६, पृ० ६६)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

आभिजात्यमण्डितेषु विलासप्रियेषु साहित्यरसिकेषु सामाजिकेषु नायिकाभेदो हि रसानुभूतिविभावव्याजेन मनोरञ्जनस्य कलामयं साधनं बभूव। धनिनां विलासिनां हि विलासससाधनेषु नायिकाभेदविषयस्तावत्परं प्रथिमानमभजत। क्षियोऽयं काव्यात्मकतया कलामयतया च अन्यविलाससाधनापेक्षयाऽधिकतरं महामहिमानम्, आभिजात्यवर्गीयत्वं च लेभे।

गुप्तशासनसमये हि कृत्स्नेऽपि भारते शास्त्रकाव्यादिपरिशीलनेन साकं रसिकसमाजे क्रीडाविलासभावादयोऽपि अतीव व्यापकरूपेण पर्याप्तमवर्धन्त विद्वद्वर्गेषु पण्डिताभिरूपेषु।

हर्षवर्धनसमये ततः परवर्त्तिशताब्दीषु वैलासिकस्य वृत्तिभावस्य सन्तर्पणप्रवृत्तिरपि कलात्मकानुरञ्जनमाध्यमेन निरन्तरं नितरामभिवर्द्धते स्म। तदानीन्तना आभिजात्यवर्गीयसहृदयसामाजिकाः काव्यसाहित्यस्य भावाभिभूतकारिणं काव्यानन्दं निर्विकल्पकसविकल्पकविचित्रं समास्वादनं कुर्वन्ति स्म। तदा च रस एव काव्यसर्वस्वरूपप्राणभूतोऽभवत्। तद्द्वारा शृङ्गारविलासोऽपि परामुन्नतिकाष्ठां भेजे। काव्यजगति प्रविश्यात्मानं विस्मृत्य रसानन्दास्वादनमेव तदा काव्यसर्वस्वमासीत्; परन्तु तदा साहित्यिकानुरञ्जनविधौ संवेदनागाम्भीर्यग्रह एव रसिकत्वस्याधारः स्वीक्रियते स्म।

हर्षवर्धनतः परवर्त्तिकाल एषा प्रवृत्तिः काव्यरसिकताधारभूमिरूपा क्षीणतामुपगता। शनकैश्च भोजदेवसमये शृङ्गारो भौतिकविलासभाववृद्धया सह रसराजतां भेजे। अत एव शृङ्गारप्रकाशस्य चिन्तनानुगुणदार्शनिकपक्षोद्भावने अचेतनं विलासि मन एव प्रभावि कारणमिति प्रतिभाति। अतः परं पारतन्त्र्यकलुषिते देशे राजानः पण्डिताः कलाविदश्च काव्यानुशीलनद्वारा मनस्तोषं जोषमेव लेभिरे। एवञ्च 'रीतिकाले' काव्यस्य कलापक्षे न्यूनता व्याप्ता, वासनापरकसन्तोषप्रवृत्तिरेव वृद्धिं गता। भावनागाम्भीर्यमपहाय मनोरञ्जनैकशरणैः रसिकैर्नारी सङ्केतदासीकृता।

फलतश्च मोहम्मदीयशासनकाले (तथोक्तरीतिकाले च) विगलितवेद्यान्तरस्पर्शशून्यताकारी रसानुभवः शृङ्गारालम्बनविभावरूपनायिकासम्पृक्तवासनाकेन्द्रितो भूत्वा रसास्वादनस्य दार्शनिकीं भूमिकां तत्याज। भौतिक-शारीरिकविलासभावनाभावितो भूत्वा रसेषु शृङ्गारस्य, तत्रापि चालम्बनविभावस्य, तत्रापि कामोपभोगसहायकरूपस्य नायिकाभेदशास्त्रस्य सीमातिक्रामी विस्तारो जातः, विशेषतो लोकभाषावाङ्मये।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**नायिकाभेदस्यारम्भिकं विवरणम्—**

उपर्युक्तविवरणस्योद्देश्यं साहित्यिकानां पुरस्ताद् नायिकाभेदनिरूपणगतदृष्टि-विस्तारभेदपरकविषयस्य समुपस्थापनम्। इत्थं च सूच्यते यद् नाट्यशास्त्रगतो नायिका-भेदपरक उल्लेखः स्पष्टतो दृश्यकाव्येनाभिनयेन चानिवार्यतः सबद्ध आसीत्। यत्तु हिन्दीभाषायां रीतिग्रन्थेषु नायिकाभेदोल्लेखः, तन्मूलं यद्यपि नाट्यशास्त्रमेव, परम-भिनयोपकारित्वेन न, अपि तु शृङ्गारानुगुण्येनेति।

**धनञ्जयरुद्रटयोः सिद्धान्तवैभिन्न्यम्—**

पश्चात्कालिककाव्यशास्त्रोक्तनायकनायिकाभेदास्तु भरतोक्तनाट्यशास्त्रीयभेदेभ्यो मनाग् भिन्नाः परिलक्ष्यन्ते। नायिकाभेदस्य साम्प्रतिकी शैली रुद्रटीयकाव्यालङ्का-रम्, धनञ्जयीयदशरूपकम्, रुद्रभट्टीयशृङ्गारतिलकञ्चानुहरति। शृङ्गारतिलकोऽयं दशरूपकतोऽपि प्राचीनतर इति केचित्, परं नात्र दृढतरं प्रमाणं पश्यामः। अस्तु तावत्, विषयोऽयं पश्चाच्चर्चामर्हति। अत्र त्वेतदेवानुसन्धेयम्—शृङ्गारतिलकीयश्लोकानां ग्रन्थान्तरेषु दर्शनान्न किल किमपि निर्णयास्पदमारोढुमीष्टे। एतत्तु निश्चितम्—शृङ्गार-तिलकोऽयं काव्यानुशासन-शार्ङ्गधरपद्धति-साहित्यदर्पणेभ्यः पूर्वकालिक इति। परम-थापि भरताचार्यतः परम्, आचार्यधनञ्जयेनेव नायिकाभेदाः प्रौढ्या शैल्या निरूपिताः। सा च शैली ततः परेषामाचार्याणां नायिकाभेदव्याख्यातॄणामुपजीव्यत्वं गता। प्रसङ्गोऽयं पश्चाद् विस्तरेण वक्ष्यते।

दशरूपकग्रन्थश्चतुःप्रकाशात्मकः। तत्राद्ये—साङ्गोपाङ्गं वस्तु (कथावस्तु) विवेचितम्। द्वैतीयीके नायकनिरूपणप्रसङ्गे नायिकाभेदास्तत्सम्बद्धविषयाश्च प्रपञ्चिताः। तार्तीयीके नाट्यानुषङ्गिकविषयान्तराणि विवेचितानि। तुर्ये च रसः, रसाङ्गानि, तन्निष्पादनप्रक्रियादि प्रौढसरण्या निरूपितम्। सन्दर्भेऽत्र नायिकाभेदास्ता-वन्नैव शृङ्गारालम्बनरूपमवलम्ब्य चतुर्थप्रकाशे कृताः; अपि तु नेतृभेदनिरूपणमव-लम्ब्य कृता इति यत्किञ्चिदेतत्तत्, पश्चात्तु साडम्बरं वक्ष्यते। अस्तु—एतत्तु न विस्मर्तव्यम्, 'रीतिकालिकम्' नायिकानिरूपणं हि विलासमनोरञ्जनादिप्रेरितम्, परं दशरूपके तु शास्त्रीयपक्ष एव सविशेषं व्याहृतः।

परं रुद्रभट्टस्य शृङ्गारतिलकस्तु 'रीतिकालिक'—मनोवृत्तिसाम्यं प्रकाममाद-धाति। यत्र समये नारीणां कोमलता, जन्मगतं रामणीयकम्, अवलता विवशता च सर्वैः स्वीकृतम्, तत्र शृङ्गारतिलकरचनाऽजायतेति। नारी च अवला कामिनी रमणी वा अमन्यत। ततश्च नारी हि विलासशृङ्खलाबद्धा सती विलासकारापिहिता बभूव।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

पुरुषाणां कृते सा विलासस्य साधनभूताऽभूतेति। अतश्च शृङ्गारतिलके शृङ्गार-मनोरञ्जनमतीव स्फुटम्। अनेनैव विद्वद्गोष्ठीषु काव्यं प्रकामं प्रतिष्ठामभजत[1]।

शृङ्गारतिलकग्रन्थे परम्परामनुसृत्य रसप्रामुख्यमुद्घोष्य रुद्रभट्टो रस-स्थायि-भाव-सञ्चारिभावादीनां नामग्राहं गणनां विधाय संक्षेपेण नायकनिरूपणं सम्पूर्य, सरभसं धावं धावमिव काव्यनायिकानिरूपणप्रसङ्गे व्यग्रतामभजत्। किञ्च, तत्रैव स रंरम्यत इव। ततस्तत्र तदानीन्तनमाभिजात्यसमाजमनुकूलयन् तन्मनोवृत्त्यनुगामितया नायिका-शृङ्गारविषयांश्च परिच्छेदयुगले यथाविस्तरं यथोदाहरणं विभज्य निरूपयति। तत्परि-पाटीमनुसरता एव तेनेदमपि साग्रहमभ्यधायि यत् पूर्वोक्तशृङ्गारविषयमुपजीव्यैव काव्यं रचनीयम्, अन्यथा नीरसत्वापत्तिः स्यात्[2]। अहो, ग्रन्थकर्त्तुः शृङ्गारपारतन्त्र्यम्। ग्रन्थकारस्तावद् रसमेनं प्रधानं रसराजमङ्गीकुर्वन् काव्ये तन्निवेशस्यापरिहार्यता-माचष्टे। एषैव प्रवृत्ती रीतिकालेऽपि परिलक्ष्यत इति।

शृङ्गाराभिभूतपूर्वोक्तमनोवृत्तिप्राबल्याधीनतया श्रव्यकाव्येष्वपि रसस्यापरि-हार्यतां परिख्यापयन् रुद्रभट्टेनोक्तं यद् भरतादिभिराचार्यैर्दृश्यकाव्येष्वेव रसस्थि-तिरुररीकृता। मया तु स्वमत्यनुसारं श्रव्येष्वपि सा संयोज्यते[3]।

अतश्चात्रैतद् व्याहर्त्तुं प्रभवामो यत्—

'रीतिकाल'-स्वीकृतानां नायिकाभेदानां मूलं हि भरतनाट्यशास्त्रम्, सुश्रृङ्खलः खलु तद्विस्तरो दशरूपके, शृङ्गारतिलके च तदीयप्रेरणामूलकवासनानुप्राणितमनोवृत्त्याः साटोपं रूपं दृश्यते। अधिकन्तु नाट्यशास्त्रे दृश्यश्रव्यकाव्यानां सर्वस्यापि विचार-जातस्य मूलं सन्निहितम्[4]।

---

१—तस्माद्यत्नेन कर्तव्यं काव्यं रसनिरन्तरम्।
अन्यथा शास्त्रविद्गोष्ठ्यां तत्स्यादुद्वेगदायकम्॥ (द्र० शृ० ति० १।८)

२—इत्थं विरचनीयोऽयं शृङ्गारः कविभिः सदा।
अनेन रहितं काव्यं प्रायो नीरसमुच्यते॥ (शृ० ति० २।६६)

३—प्रायो नाट्यं प्रति प्रोक्ता भरताद्यै रसस्थितिः।
यथामति मयाप्येषा काव्यं प्रति निगद्यते॥ (शृ० ति० १।५)

४—रसः, भावः, अभिनयः, अङ्गचेष्टाः, नृत्यम्, चारी, नाट्यवृत्तयः, भरतनाट्यम्, चित्राभिनयः, सिद्धिव्यञ्जनम्, वाद्यविधानम्, सङ्गीतविधानम्, ध्रुवपदविधिः, वाद्याध्यायः, चतुर्विधाभि-नयः, सम्भाषणविधिः, नाटकाङ्गपरिचयः, लास्यम्, साङ्केतिवृत्तम्, वृत्तिः, नायिकानिरूप-णम्, प्रकृतिविचारः, छन्दोविचारः, काव्यस्य गुणदोषाः, उपमादीपकाद्यलङ्काराः, संस्कृत-प्राकृतापभ्रंशादिभाषाणामुल्लेखश्च।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

नाट्यशास्त्रस्येदं मौलिकं तत्त्वमनुध्यायता डा० हजारीप्रसादद्विवेदिमहोदयेनापि 'हिन्दी साहित्य की भूमिका' ग्रन्थे 'नायिकाभेदस्य' चर्चाप्रसङ्गे इदमुदलेखि यत्—'पश्चात्कालिकानि समस्तनायिकाभेदशास्त्राणि नाट्यशास्त्रस्यैकाङ्गस्य सार्वजनीनं भाष्यमात्रम्। तत्र च नायिकाभेदा नाट्यशास्त्रीया एव, तद्व्यवहारपक्षश्च कामशास्त्रगत इति'। द्विवेदिमहोदयानां वचसस्तात्पर्यार्थबोधाय नाट्यशास्त्रतः पश्चात्कालिकेषु प्राथमिककाव्यशास्त्रेषु प्राप्तानामेतदीयसिद्धान्तानामनुशीलनमवश्यकर्तव्यम्[1]।

**संस्कृतकाव्यशास्त्रे नायिकाभेदोपकरणानि नाट्यशास्त्रञ्च—**

इतिवृत्तगतानि सन्ध्यङ्गानि निरूप्याचार्यभरतो विंशतितमाध्याये भारती-सात्वती-कैशिक्यारभटीत्याख्यं वृत्तिचातुर्विध्यं निरूपितवान्। उक्तानां वृत्तीनां परिचयप्रसङ्गे तेनेत्थं चर्चितम्—

**पुनर्नाट्यप्रयोगे च नानाभावरसान्विता।**
**वृत्तिसञ्ज्ञा कृता ह्येषा नानाभावरसाश्रया॥**

एतेन सूच्यते यद् वृत्तयो हि भावरसयोराश्रिता इति भरतसङ्केतः, निरूपयंश्चैता आङ्गिकवाचिकसात्त्विकाहार्यरूपमभिनयचातुर्विध्यवैशिष्ट्यमपि निरूपितवान्। तत्र आहार्याभिनयप्रसङ्गे नाट्योपकरणचर्चा विदधद् भरतो दिव्या-मानुषीप्रभृतिनायिकाः, उत्तममध्यमाधमांस्तद्भेदांश्चोल्लिलेख। किञ्चात्र प्रसङ्गे तेन वागङ्गसत्त्वजन्योऽभिनयः सामान्याभिनयोऽस्तीत्यपि कथितम्। प्रकरणेऽत्रैव शृङ्गारोऽपि चर्चितः—

**यः स्त्रीपुरुषसंयोगो रतिसम्भोगकारकः।**
**स शृङ्गार इति ज्ञेयो ह्युपचारकृतः शुभः॥**

---

१—एतत्खलूपरिष्टाद् वर्णितमस्ति यन्नाट्यशास्त्रीयनायिकाभेदचर्चाप्रसङ्गे भरतोक्तानां नायिकानां भेदा भेदकभेदाद् भिद्यन्ते। तासां वर्गीकरणं नानाधारमूलम्। यथा—मनःकाययोनिभेदान्नायिकाभेदः' इति प्रथमः कल्पः।
रुचि-शील-प्रभृतिभेदादिति द्वितीयः कल्पः। भोजनाच्छादनवेशभूषाशृङ्गारादिभेदादिति तृतीयः कल्पः। ऐष्वेव केचन भेदाः कामशास्त्रीये नायिकाभेदनिरूपणे चतुर्विधभेदानां प्रेरकहेतव इति बोध्यम्।

**अत्रेदं साग्रहमवधेयम्—**
कामशास्त्रीयग्रन्थेषु विशेषतः कोकप्रणीते कामशास्त्रे यत्खलु लोकप्रियम्—पद्मिनी-शङ्खिनी-चित्रिणी-हस्तिनीत्याख्यं नायिकाचातुर्विध्यमुपलभ्यते, नैतत् खलु वात्स्यायनीयकामशास्त्रे दृश्यते। तत्र नायकस्य नायिकायाश्च त्रैविध्यमेतदुक्तम्—शशः, वृषः, अश्वः, अन्यत्र मृगी, वडवा, हस्तिनी। इति।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

सर्वः प्रायेण लोकोऽयं सुखमिच्छति सर्वदा ।
सुखस्य च स्त्रियो मूलं नानाशीलधराश्च ताः ॥
( द्र० भरतनाट्यशास्त्रम्–२२।९३–९४ )

सन्दर्भेऽस्मिन् स्त्रीणां सुखमूलत्वं प्रोक्तम्, 'नानाशीलधराश्चैता' इत्यपि भणितम् । शीलचर्चापि चाग्रे तत्रेत्थमस्ति–

देवतासुरगन्धर्वरक्षोनागपतत्त्रिणाम् ।
पिशाचयक्षव्यालानां नरवानरहस्तिनाम् ॥
मृगीमीनोष्ट्रमकरखरसूकरवाजिनाम् ।
महिषाजगवादीनां तुल्यशीलाः स्त्रियः स्मृताः ॥

अत्र देवशीलाङ्गनासुरशीलाङ्गनेत्यादिद्वाविंशतिभेदा नायिका उक्ताः । अत्र तत्तद् योनिषूत्पन्नानां जीवानां शीलचरितान्यपि उक्तानि, येन तत्तच्छीलानां नायिकानां लक्षणं स्पष्टं भवेत् । नैतादृग् विभाजनं पश्चात्कालिकेषु साहित्यशास्त्रग्रन्थेषु परिलक्ष्यते । अत्रायं हेतुरनुमीयते–'कदाचिन्नैते भेदाः शीलाश्रिताः साहित्यशास्त्रमुपकुर्वन्ति, अपि तु कामशास्त्रमेवेति मन्वानैर्विचारकैः शीलविभाजनमिदमत्याजि ।

कोक्कोककृते रतिरहस्ये, ततः पश्चात्कालिके कामशास्त्रग्रन्थेऽपि एतेषां भेदानां चर्चा दृश्यते । रतिरहस्ये तूपर्युक्तभरतीयभेदानां गन्धमात्रमनुभूयते, तत्र अनेके भेदाः परित्यक्ताः, अपरत्र काकसत्त्वेति नवीनो भेदो दृश्यते ।

स्त्रीपुंसावाश्रित्य नाट्यधर्मिणः कामोपभोगस्य भेदद्वैविध्यं निर्दिशन् पुनरग्रे अङ्गनायास्त्रयो भेदास्तत्रेत्थमुक्ताः—

( क ) बाह्या ( ख ) आभ्यन्तरा ( ग ) बाह्याभ्यन्तरा चेति ।

तत्र कुलीना आभ्यन्तरेति कथिता । अस्य तात्पर्यं सम्भवतः 'कुलवधूः' अर्थात् स्वीयेति प्रतिभाति । बाह्या तु वेश्या सामान्या वेति स्पष्टमेव । बाह्याभ्यन्तरा तु कृतशौचेति कथिता, यदर्थो नावगतः । अत्र पाठभ्रंशोऽनुमीयते । यद्वा—नाद्यत्वेऽस्यार्थोऽवगम्यते । 'कुलम् अपावयित्री' अयमर्थोऽस्यासीदिति सम्भावयितुं शक्यते ।

एतेन सूच्यते यद् व्याहृतैर्व्याहरिष्यमाणैश्च हेतुभिः सुस्पष्टं सिद्धमेतद् यन्नाट्यशास्त्रे नायिकानिरूपणं नानादृष्टिभिर्विविधपक्षतश्चाजायत । तत्रभवान् भरतो नाट्यस्याभिनयस्य च विविधस्थितिप्रयोजनानुरूपं तत्तद्दशानुगुणं नायिकानामङ्गनानां च निरूपणं क्रियासमभिहारेण अनेकप्रसङ्गेषु अनेकरूपैश्च कृतमिति । तथाहि—

कुत्रचित् प्रकृतिमाश्रित्य उत्तमाधगमध्यमा गुणधर्ममाश्रिता, अन्यत्र नायिकाभेदा



CC-0. Sampurnanand University Collection. Digitized by eGangotri

उक्ताः । अत्रैव प्रकरणे राजोपचारनिरता महादेवीदेवीप्रभृतिनार्योऽपि[1] अन्तःपुरमूलिका निरूपिताः ।

कुत्रचित्तु—धीरोद्धत-धीरललित-धीरोदात्त-धीरप्रशान्तात्मकनायकचातुर्विध्यानुगुणं दिव्या-नृपपत्नी-कुलस्त्री-गणिकारूपनायिकाचातुर्विध्यमपि उल्लिखितम् । एतासां प्रकृतिलक्षणानुरूपा धीरा-ललितोदात्ता-निभृतारूपभेदचतुष्टय्यपि तत्रैव वर्णिता। एतद्भेदचतुष्टयी च (पश्चात्कालिकेषु नाट्यशास्त्रीयग्रन्थेषु यत्रतत्र) उपलभ्यत इति ।

प्रकरणेऽत्र प्रसङ्गवशात् कुलजा-गणिका-प्रेष्यादयोऽपि सपरिचयमभिहिताः । नायिकानामेतद्भेदत्रितयी तथा इतिहासदिशा महत्त्वमावहति, यथा परकालिकसाहित्येषूक्तनायिकाभेदस्यैषा मूलप्रेरणा स्वीक्रीयेत ।

अतः परं यैराचार्यैः नायिकाभेदग्रन्थलेखकैः, स्वकीया-परकीयादिनामभेदमुपजीव्य नायिकाभेदाः साटोपं निरूपिताः, नायिकाभेदपरकविस्तृतप्रौढरूपस्य च यः किल मूलाधारः प्रतीयते तन्मूलमेतस्मिन् भरतकृतप्रासङ्गिकनायिकाभेद एवेति सम्भाव्यते । कुलजावेश्या-प्रेष्यादिभेदा अपि भरतेन प्रसङ्गान्तरे चर्चिताः । अग्रे सैव

---

१—कामोपभोगो द्विविधो नाट्यधर्मे विधीयते ।
बाह्यश्चाभ्यन्तरश्चैव नारीपुरुषसंश्रयः ॥
आभ्यन्तरः पार्थिवानां कर्तव्यः स च नाटके ।
बाह्यो वेश्याङ्गनानां तु स च प्रकरणे भवेत् ॥
त्रिविधा प्रकृतिस्त्रीणां नानासत्त्वसमुद्भवा ।
बाह्या चाभ्यन्तरा चैव स्याद् बाह्याभ्यन्तरा परा ॥
कुलीनाभ्यन्तरा ज्ञेया बाह्या वेश्याङ्गनाकृते ।
कृतशौचा च या नारी सा बाह्याभ्यन्तरा स्मृता ॥
(द्र० नाट्य० २२। काव्यमाला १४१)

१—स्त्रीविभागं प्रवक्ष्यामिह्युपचारं तथैव च ।
महादेवी तथा देवी स्वामिनी स्थायिनी तथा ॥
भोगिनी शिल्पकारी च नाटकीयार्थनर्तकी ।
अनुचारी तथा युक्ता तथा च परिचारिका ॥
तथा सञ्चारिणी चैव तथा प्रेषणकारिका ।
महत्तरा प्रतीहारी कुमारी स्थविरा तथा ॥
आयुक्तिकास्तु भूपानामेष आभ्यन्तरो गणः ।
.... .... .... .... ।
एतदष्टादशविधं प्रोक्तमन्तःपुरं मया ॥
(द्र० ना० अ०—२४।५४–५७)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

प्रेष्या सामान्यरूपेण दूतीति कथिता । परमिदमपि सम्भाव्यते यत् 'परकीया' विचार-स्यापि बीजमेतस्मिन्नेव सन्दर्भे स्यात् ।

सन्दर्भान्तरे च 'लुब्धा-पण्डिता-चतुरा-भामिनी-पुरुद्वेषिणी-वाला-गर्वितोदात्तादि-भेदा उक्ताः । सङ्गमप्रसङ्गे भेदकगुणधर्मावनुसृत्य विरक्ताऽनुरक्तेति भेदद्वयी अप्युक्ता । दृष्टिबिन्दुभेदात् तत्तत्प्रसङ्गेषु बारं बारमुत्तममध्यमाधमेति त्रिभेदाः कथिता वर्त्तन्ते । नाट्यशास्त्रे ( द्र०-काशी-संस्कृतसीरिज-६० ) तु शीलवैविध्यादपि इमे भेदाः पुनः नामग्राहं सलक्षणमुपपादिताः । तत्रैवाग्रे प्रकृत्यनुसारमपि उत्तमादिभेदाः सलक्षणं विवृताः, केचन भेदा कर्मानुसारिणोऽपि तत्रोक्ताः ।

**मुग्धा-मध्या-प्रौढाः—**

'रीतिकालिक'–नायिकाभेदसाहित्ये स्वीयानायिकानां मुग्धा, मध्या, प्रौढा (प्रगल्भा) इति त्रिभेदानां यल्लक्षणं रूपासवमदमुग्धैः रसाब्धिमवगाह्य विलासभावनावशीभूतैः भावतरङ्गविह्वलैराचार्यैः कविभिश्चित्रितं तस्य मूलं नाट्यशास्त्रमेव । परं या खलु प्रकारान्तरेण नाट्यस्य अभिनयस्यानुकूला समग्रा सामग्री प्रकरणान्तरे व्यवस्थितपरिधौ व्यवस्थाप्य निरूपिता, सा तु रसनिरूपकाचार्यैः पश्चात्कालिकैः शृङ्गारालम्बनपरिधि-मध्ये प्रतिष्ठाप्य नायिकायाः भेदा चिराय निर्धारिता इति ।

क्रमिकसोपानेषु महर्षिणा भरतेन अङ्गनानामुत्तममध्यमाधमचर्चानुषङ्गे नायि-कायां यौवनमपि चतुर्धा विभक्तम्—( क ) प्रथमयौवनम्, ( ख ) द्वितीययौवनम्, ( ग ) तृतीययौवनम्, ( घ ) चतुर्थयौवनञ्च[1] ।

प्रथमयौवनस्य यौवनलाभस्य प्रथमावस्थाया वा पर्यायभूतोऽयं नवयौवन-शब्दोऽपि उक्तः । यौवनलाभस्य यौवनक्रमस्य वा इमाश्चतस्रो दशाः सन्ति । तत्र मुग्धा-मध्या-प्रौढा इति नायिकानामवस्थाः, न तु तत्त्वतस्तासां भेदाः । इमा एव सहृदयानां मनोरञ्जिका नायिका नायिकाभेदग्रन्थेषु साहित्यरसिकजनेषु च मधुर-तमरूपिण्यः सत्यः प्रमोदमावहन्ति । चतुर्थयौवनं तावत् शृङ्गारशत्रुभूतमिति मत्वा नेदं मनोरञ्जकमिति च भरतेन तिरस्कृतम्, अतो न सहृदयहृदयमारोढुमोष्टे । ततश्च परकालिकसाहित्येषु नैतादृशाया गलिततारुण्याया नायिकायाः कैरपि नामापि गृहीतम् ।

---

१—सर्वासामपि नारीणां यौवनलाभा भवन्ति चत्वारः ।
नेपथ्यरूपवेषैर्गुणैस्तु शृङ्गारमासाद्य ।। ( द्र० नाट्यशास्त्रम् २३।४० )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**प्रसिद्धा अष्टधा नायिकाभेदाः**

नाट्यशास्त्रे हि नायिकानां सलक्षणास्ते अष्टभेदा अपि विद्यन्ते, ये हि उपरिष्टात् 'रीतिकाले' सविस्तरं निरूपिताः। महर्षिणा भरतेन नायिकानां किलाष्टभेदा उक्ताः–( १ ) वासकसज्जा, ( २ ) विरहोत्कण्ठिता, ( ३ ) स्वाधीनपतिका, ( ४ ) कलहान्तरिता, ( ५ ) खण्डिता, ( ६ ) विप्रलब्धा, ( ७ ) प्रोषितभर्तृका, ( ८ ) अभिसारिका चेति लक्षणोक्तिपूर्वकाणां भेदानाञ्चैतेषां मूलं त्ववस्थैवेत्यप्युक्तम्। ( द्र०- नाट्यशास्त्रम्--२२।२०३-२०४, काव्यमालासंस्क० )। तत्रैव चेमे नायिकाभेदा नाटकाश्रया इत्यप्युक्तम्--

'आस्ववस्थास्तु विज्ञेया नायिका नाटकाश्रयाः'। इति।

ततश्च स्पष्टमेतत्—अदसीयोऽपि सम्बन्धः पूर्वोक्तसामान्याभिनयेनैवेति। तथा च संक्षिप्य पूर्वोक्तानामर्थानामेष निष्कर्ष :--

( क ) काव्यशास्त्रीयनायिकाभेदानां नाट्यशास्त्रमेव मूलस्रोतः। यतस्तत्रैव ऐदम्प्राथम्येन स्वीया-परकीया-सामान्याः, मुग्धा-मध्या-प्रगल्भाः, वासकसज्जाद्यष्टविधनायिकाश्च साक्षात्परम्परया वा सम्यग्वर्णिताः सन्तिः। परवर्त्तिसाहित्येषु तस्यैव प्रसारो विस्तरश्चाभवत्।

( ख ) नाट्येन सामान्याभिनयेन च नायिकानिरूपणं साक्षात् सम्बद्धम्।

( ग ) नाट्यशास्त्रे हि शृङ्गाररसस्य तस्याङ्गोपाङ्गस्य च महिमा सङ्केतितोऽपि नाट्याभिनययोरेव प्रसङ्गे तदौचित्यं प्रतिपादितम्।

( घ ) नाट्याभिनययोः प्रसङ्गे नायिकानामितरेऽपि एतादृशा भेदा निर्दिष्टा, येषामनुपयोगित्वमवगम्य पश्चादुपेक्षिताः।

( ङ ) नायिकाभेदाः साक्षात् शृङ्गाररसावलम्बनरूपेण न चर्चिताः।

किञ्च कामतन्त्रमपि क्रियासमभिहारं नामग्राहं चर्चितम्। अतश्चैतदपि सूच्यते-भरतोक्ततत्तद्विवरणेषु कामशास्त्रीयसिद्धान्तप्रभावः प्रकामं वर्वर्ति।

**ग्रन्थान्तरेषु नायिकाभेदाः**

**( अग्निपुराणे, काव्यालङ्कारे, शृङ्गारतिलके च )**

अग्निपुराणे शृङ्गारतिलके च; इमौ एतादृशौ ग्रन्थौ यत्र आलम्बनविभावान्तर्गतं नायिकानायकभेदनिरूपणं किमपि नावीन्यमाधत्ते।

श्रव्यकाव्यप्रसङ्गेऽपि रसस्यापरिहार्यत्वं महत्त्वं श्रीरुद्रटेन ऐदम्प्राथम्येन स्वी-

CC-0. Sampurnanand University Collection. Digitized by eGangotri

कृतम्। अतस्तेन स्वोपज्ञकाव्यालङ्कारग्रन्थे श्रव्यकाव्यस्य रसयोजनासमन्वितत्वमावश्यकम् इत्यभ्यधायि—

**तस्मात्तत् कर्तव्यं यत्नेन महीयसा रसैर्युक्तम्॥** ( काव्यालङ्कार० १२।२ )

तेनैव च तत्र शान्तस्य नवमरसत्वम्, स्नेहस्थायिभावात्मकप्रेयोरसस्य दशमरसत्वं वर्णितम्। परं तथापि नायकस्य नायिकायाश्चालम्बनरूपप्रतिष्ठाविषये न तेन किमपि स्पष्टं निर्दिष्टम्। तेन हि 'तत्र स्यान्नायकः ख्यातः' इति व्याहरता शृङ्गारस्याधारभूतौ नायिकानायकौ च स्वीकृतौ, तद् भेदाश्च सङ्क्षिप्य निरूपिताः, परं नायकादीनामालम्बनत्वमवलम्ब्य सुस्पष्टं रसप्रसङ्गस्य तत्र नोल्लेखः।

अग्निपुराण ऊनचत्वारिंशदुत्तरे त्रिशततमाध्याये—

**विभाव्यते हि रत्यादिर्यत्र येन विभाव्यते।**
**विभावो नाम स द्वेधाऽऽलम्बनोद्दीपनात्मकः॥**
**रत्यादिर्भावविवर्गोऽयं यमाजीव्योपजायते।**
**आलम्बनविभावोऽसौ नायकादिभवस्तथा।** ( ३५-३६ )

उपर्युक्तमुक्त्वा आलम्बनविभावकारणरूपेण नायका नायिकाश्चानिर्दिष्टाः। अग्रेऽपि—

**स्वकीया परकीया च पुनर्भूरिति कौशिकः।**
**सामान्या न पुनर्भूरित्याद्या बहुभेदतः॥** (अग्नि० ३३९।४१)

एतस्मिन् पद्ये च 'स्वीया' 'परकीया' 'पुनर्भूः' इति तिस्रो नायिका नामग्राहं गृहीताः।

अत्र किञ्चित्—सत्स्वपि एषु विशेषेष्वाग्नेयपुराणस्य प्राचीनत्वं विवादकोटिमाटीकते, अतश्च नेदं पुराणं तादृङ् महत्त्वं भजते। एतत्तु सारभूतं यद् भारतीयविश्वकोषरूपस्यास्य ग्रन्थस्य सङ्ग्रहो महता कालेन सम्पन्नः।

महाराजभोजदेवकृते सरस्वतीकण्ठाभरणे शृङ्गारप्रकाशे वा पुराणस्यास्य सिद्धान्तार्थसन्निवेशः, शृङ्गारप्राकर्ष्ये तदाभासता च नास्य पुराणस्य पूर्णतः प्राचीनत्वं साधयितुमीशाते। अतो नायकस्य नायिकाया वा भेदविषये तत्पुराणोक्तमालम्बनसाहित्यं किमपि मौलिकत्वमावहतीति नास्ति निश्चयस्थानम्।[१] एतदनुमीयते कैश्चिद्यत्सम्भवतः

---

१—'अग्निपुराण का काव्यशास्त्रीय भाग' नामको हिन्दीग्रन्थो वर्तते, यत्र अग्निपुराणगता साहित्यशास्त्रीयविषया न्यक्षेण विवेचिताः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अग्निपुराणस्योक्तोंऽशो भोजपरवर्त्तिकालरचित इति। एतदपि प्रतीयते यत् पुनर्भू-नायिकारूपभेदस्य स्रोतः कामशास्त्रीयमासीत्।

परं शृङ्गारतिलकग्रन्थे कृतं कृत्स्नमपि विवेचनं प्रकामं तथा स्पष्टं वर्तते, यथा रुद्रभट्टकालो यदि असन्दिग्धरूपेण निर्णीतो भवेत्, तर्हि नायिकाभेदविषये यत्किमपि पश्चात्सिद्धान्तितम्, तन्मूलं शृङ्गारतिलक एवेति वक्तुं पार्यते।

ग्रन्थस्यास्य प्राचीनत्व-नवीनत्वविषये अन्तःसाक्ष्याधारेण किमपि यथाप्रमाण-मुपरि सङ्केतितम्। किञ्च, प्रमाणान्तरेणापि कलिकालसर्वज्ञश्रीहेमचन्द्रसूरितः पूर्वं शृङ्गारतिलकस्थितिः सप्रमाणा भवति, तथाहि--श्रीहेमचन्द्रेण शृङ्गारतिलकीयमाङ्ग-लिकपद्यमुद्धृत्य तत्खण्डितम्। ततश्च सिद्धमेतद् यद् द्वादशतमशताब्द्याः पूर्वार्धतः पूर्वमेव ग्रन्थोऽयं निर्मितः, परमेवमपि दशरूपकतः पूर्वं रचनाऽस्य जातेत्यत्र नास्ति दृढं प्रमाणम्।

एष किलानुमानविषयो यद्--भरतनाट्यस्य व्याख्याया अभिनवभारत्याः, ध्वन्यालोकलोचनस्य च कर्तृभ्योऽभिनवगुप्तपादेभ्यो दशरूपकस्य च कर्तृभ्यो धनञ्जयेभ्यश्च (यौ द्वौ प्रायःसमकालिकौ) पश्चात् शृङ्गारतिलकरचना जातेति।

**रुद्रटो रुद्रभट्टश्च—**

एतत्तु काव्यालङ्कारशृङ्गारतिलकयोरनुशीलनेन निश्चीयते यत्—शृङ्गारतिल-कीयं कृत्स्नमपि प्रतिपाद्यं वस्तु रुद्रटकृतकाव्यालङ्कारस्य द्वादशाध्यायतः पञ्चदशाध्याय-पर्यन्तस्यांशस्य पुनराख्यानमात्रमस्ति, न किञ्चित्तत्र नवीनत्वम्। श्रव्यकाव्येषु रसस्या-परिहार्यता सरसतोपपत्तये रुद्रटेन प्रवर्तिता। रुद्रभट्टेनाप्येतदेवानूदितम्। रुद्रभट्टस्य च रुद्रटापेक्षयाऽर्वाचीनत्वेन किं नामात्र नूतनम्। इत्थमेव शृङ्गारस्य विस्तृतं वर्णनम्, नायकनायिकाभेदविमर्शः, तद्विस्तरश्चेति सर्वमपि रुद्रटस्य पन्थानमेवानुहरति।

**किञ्चान्यदपि—**

श्रव्यकाव्येष्वपि नाट्यशास्त्रीयप्राचीनशैलीदिशा एव नायकनायिकानां प्रस्तुतिः दर्शिता। उभावपि स्पष्टतः शृङ्गारप्रसङ्ग एव नायकाद्यवतरणं निरूपितवन्तौ।

एतदेव तत्रोक्तं यत् शृङ्गारस्य संयोगविप्रलम्भरूपभेदद्वयी भवति, यत्र हि प्रणयानुरक्तस्त्रीपुंसयोः प्रणयपूर्वव्यापारवर्णनं भवति।

---

१—'रसादेः स्वशब्दोक्तिः'....इत्यादिसन्दर्भे रसादिपदं स्वशब्दाभिधानदोषस्योदाहरणे शृङ्गार-तिलकीयमङ्गलाचरणपद्यमुद्धृतम्।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अत्र गुणौत्तम्यविशिष्टनायकानां चातुर्विध्यं नायिकास्तु त्रिविधा एवोक्ताः– (क) आत्मीया, (ख) परकीया, (ग) सर्वाङ्गना[1]।

यत्तु विभावनिरूपणे शृङ्गारालम्बने नायिकाभेदा रुद्रभट्टेन ऐदम्प्राथम्येन निरूपिता इति केचित्, तत्तु सर्वथा भ्रान्तिमूलकमेव प्रतिभाति।

अत्रेदं तत्त्वम्—भरतेन नाट्यशास्त्रे विभावानुभावादीनां लक्षणं न वर्णितम्, किन्तु तत्र तेन कथितं यल्लोकसिद्धत्वात्तेषां लक्षणकथनमनावश्यकमिति। तथा च तदुक्तिः– 'लोकस्वभावोपगतत्वाच्चैषां लक्षणं नोच्यते' इति। 'परमथापि—विभाव इति कस्मादुच्यते। विभावो विज्ञानार्थः। विभावः कारणं निमित्तं हेतुरिति पर्यायाः। विभाव्यन्तेऽनेन वागङ्गसत्त्वाभिनया इति विभावाः। यथा विभावितं विज्ञातमित्यनर्थान्तरम्...' इत्युक्तम्। एतेन तेन विभावो व्याख्यातः, परन्तु तत्रालम्बनविभावस्य तस्य भेदोपभेदानां वा साक्षादुल्लेखो नाकारि।

बहोः कालादनन्तरं सम्भवतो भट्टनायकाभिनवगुप्तधनञ्जयादिभिः प्रमाणानुगतैः प्रमेयैः ससाहित्यिकाभिनिवेशं रसास्वादनविधिः विस्तरपूर्वकं साङ्गोपाङ्गं निरूपितः।

नायिकाभेदविषये तु इदमुक्तमेव यद् दशरूपकीयो विमर्शः प्रकामं प्रतिष्ठां महत्त्वं च भजते। अभिनवगुप्तपादैककालिकत्वेन धनञ्जयस्य प्राचीनत्वमपि सुष्ठु पर्यवस्यति तद्विमर्शोऽपि शास्त्रीयोऽप्यस्ति, विवेकपुष्टश्च।

---

१–उक्तं हि रुद्रटेन—

व्यवहारः पुंनार्योरन्योन्यं रक्तयो रतिप्रकृतिः।
शृङ्गारः स द्वेधा संयोगो विप्रलम्भश्च॥
..................तत्र स्यान्नायकः ख्यातः।
एवं स चतुर्धा..............................॥
.......................तस्य स्युर्नायिकाश्चेमाः।
..............................................॥

उक्तं च रुद्रभट्टेन—

चेष्टा भवति पुंनार्यो रत्युत्था ह्यतिरक्तयोः।
संयोगो विप्रलम्भश्च शृङ्गारो द्विविधो मतः॥
..........................................।
................स्त्रीणामभीष्टस्त्विहनायकस्स्यात्॥
.........इत्थमत्र चत्वारो भेदाः क्रिययोच्यन्ते।
स्वकीया च परकीया च सामान्यवनिता तथा।
कलाकलापकुशलास्तिस्त्रस्तस्येह नायिकाः॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

यद्यपि धनञ्जयेन नायिकानां शृङ्गारालम्बनान्तर्गतत्वं न प्रपञ्चितम्, उपर्युक्त-नाट्यशास्त्रवचनमुद्धृत्य लोकप्रसिद्धत्वादेव विभावानुभावादयोऽपि न निरूपिताः, परन्तु रसनिष्पत्तिप्रसङ्गे विभावस्य प्रामुख्यं महन्महत्त्वं चोररीकृतम्। नायकनायिकादयो हि आलम्बनत्वेन विभाव्यमाना इत्यपि तेनैव तत्रोक्तम्। आलम्बनविभावस्योदाहरणमप्येक-मुपस्थापितम्।[१]

धनञ्जयेन नायिकादयः शृङ्गारान्तर्गतत्वेन न निरूपिताः, तत्र हेतुस्तु—दश-रूपकस्य नाट्यशास्त्रीयग्रन्थत्वम्। नाट्यशास्त्रं प्रारम्भ एव वस्तु-नेतृ-रसाश्चेति नाट्यस्य त्रितयं मूलमभिहितम्, तत्प्रसङ्ग एव नायकनिरूपणसंसिद्ध्यै नायिकाभेदा अपि उक्ताः। अतो नायिकानायकादीनां पुनर्निरूपणमनावश्यकमासीत्। साहित्यदर्पण-रस-मञ्जर्यादिग्रन्था नायिकानिरूपणविषये दशरूपकीयां पद्धतिमनुहरन्ति। एषा पद्धति-श्चेत्थम्—लक्षणान्युल्लिख्य उदाहरणोल्लेखनम्। उदाहरणान्यपि अन्यदीयान्येव।

दशरूपके खलु शास्त्रीयदिशा प्रौढ्या शैल्या विषया विवेचिताः। गद्येन क्वचित्, कुत्रचिच्च पद्येनेति यथासंक्षेपं विषयाः प्रतिपादिताः। आनन्दवर्धन-वामन-मम्मटा-दयोऽपि शैलीमेनामनुहरन्ति।

रुद्रटीया पद्धतिश्च सम्यग् वर्गीकृता भामहदण्डिशैलीमनुहर्रात। परन्तु सा सुव्य-वस्थिततरा चास्ति।

रुद्रभट्टेन शृङ्गारतिलके पद्येषु लक्षणान्येव शास्त्रचिन्तामपास्य निर्दिष्टानि, किन्तु तेनाप्युदाहरणानि त्वन्यदीयान्येव।

तथा चायं निष्कर्षः—रुद्रभट्टस्य कृत्स्नमपि विवेचनं तादृगेव, यथा खलु पश्चाद् हिन्दीकाव्ये 'रीतिकालिक'—रचनासूपलभ्यत इति।

---

१— ज्ञाप्यमानतया तत्र विभावो भावपोषकृत्।
आलम्बनोद्दीपनत्वप्रभेदेन स च द्विधा॥

'एवमयम्' 'एवमियम्' इत्यतिशयोक्तिरूपकाव्यव्यापाराहितविशिष्टरूपतया ज्ञायमानो विभाव्यमानः सन्नालम्बनत्वेनोद्दीपनत्वेन वा यो नायकादिरभिमतदेशकालादिर्वा स विभावः। यदुक्तम्—

"'विभाव' इति विज्ञातार्थ इति, तांश्च यथास्वं यथावसरं च रसेषूपपादयिष्यामः। अमीषां (विभावानां) चानपेक्षितबाह्यसत्त्वानां शब्दोपधानादेवासादिततद्भावानां सामान्यात्मनां स्वस्वसम्बन्धित्वेन विभावितानां साक्षाद्भावकचेतसि विपरिवर्तमानानामालम्बनादिभाव इति न वस्तुशून्यता"।

(द्र० दशरूपकम् ४।२)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

शृङ्गारतिलकस्य रचनाया नायिकानिरूपणस्य च ग्रन्थोक्तं लक्ष्यं पश्चात्कालिकं साहित्यं परिपुष्णाति। यथा हि—प्रथमपरिच्छेदान्ते तेनोक्तम्—पूर्वोक्तसम्भोगशृङ्गार-सन्तानवितानैकतानः कविर्विदग्धगोष्ठीवनितामनोज्ञो भवति। तृतीयपरिच्छेदान्ते चोक्तम्—व्युत्पत्तयेऽभिजनैर्हि ग्रन्थोऽयं निषेवणीय इति। किञ्च शृङ्गारतिलकमपास्य कुत्र नाम काव्यकथा स्यात्; कुत्र च वैदग्ध्यम्, रसागमो गोष्ठीमण्डनं वा सम्भवतु ?[१] इति।

इत्थं भूयः परीक्षणेनैतत्सिद्ध्यति—रुद्रभट्टस्य शास्त्रज्ञानापेक्षया कवित्वमधिकतर-मासीत्। तदीया पद्धतिश्च विलासोल्लसित—'रीतिकालिक' हिन्दीकविमतं पूर्वमेव प्रदर्शयति रचनादिशा लक्ष्यदिशा च। किञ्च—दशरूपकतोऽर्वाचीने काले, यदा हि नवीना रचनादृष्टिरुद्भूता, तदाऽयमेव रुद्रभट्ट आचार्यत्वं भेजे।

एतावदवधि यत्खलूक्तं तस्य निष्कर्षः—

(क) रुद्रभट्टसमयो हि न निश्चयेन निर्धारितुं पार्यते। ग्रन्थोक्तदिशा रुद्रटो धनञ्जयतोऽप्ययमर्वाचीन इति भाति। हेमचन्द्रकृतकाव्यानुशासनरचनाकाले रुद्रभट्टीय-ग्रन्थाः प्रसिद्धा जाताः।

(ख) श्रव्यकाव्येषु रसस्थितिः रुद्रटेनैवादौ प्रवर्तिता, तदपरिहार्यता च साधिता। एतेन नायकनायिकाभेदा अपि उक्ताः। एतच्च न साक्षाद्विचारितम्, अपि तु शृङ्गार-रसस्य नायिका नायकाश्चेति पक्षमाश्रित्य तद्भेदानां विवरणं कृतं वर्त्तते। नाट्य-शास्त्रेऽपि सामान्याभिनयप्रसङ्ग एषा रीतिरनुसृता। रीतिरियं रुद्रटरुद्रभट्टसमयं यावत्-प्रचलिता।

---

१– अनेन मार्गेण विशेषरम्यं सम्भोगशृङ्गारमिमं वितन्वन्।
भवेत्कविर्भावरसानुरक्तो विदग्धगोष्ठीवनितामनोज्ञः॥
[ शृङ्गारतिलके प्रथमपरिच्छेदान्ते ]

इति मया कथितेन पथाऽमुना रसविशेषमशेषमुपेयुषा।
ललितपादपदासदलङ्कृतिः कृतधियामिह वाग्वनितायते॥
शृङ्गारतिलको नाम ग्रन्थोऽयं ग्रथितो मया।
व्युत्पत्तये निषेवन्तु कवयः कामिनश्च ये॥
कान्या काव्यकथा कीदृग्वैदग्ध्यं को रसागमः।
किं गोष्ठीमण्डनं हन्त शृङ्गारतिलकं विना॥ (द्र० शृ० ति०–३।५४-५७)



CC-0. Sampurnanand University Collection. Digitized by eGangotri

(ग) रुद्रभट्टस्य शृङ्गारतिलकोऽपि एतां पूर्वोक्तां सरणिमनुहरति। रुद्रटदिशमनुकुर्वता एव तेन काव्यालङ्कारवत् शृङ्गारालम्बनसन्दर्भपक्षमुपेक्ष्य सविस्तरं शृङ्गाररसस्य नायिका नायकाश्च सोदाहरणा उक्ताः। विषयदिशा तु रुद्रभट्टस्य रचनेयं काव्यालङ्कारीया कतिपयानध्यायानेव विस्तरेण पुनर्निर्वक्ति। उदाहरणानि विहाय किमप्यन्यन्नवीनत्वं नास्ति।

(घ) दशरूपकीया विषयविवेचनशैली शास्त्रानुगता प्रौढा प्रकृष्टा वैदुष्यमण्डिता चास्ति। रसनिष्पत्तिप्रसङ्गोऽपि धनञ्जयीयं पाण्डित्यप्राकर्ष्यं परिचाययति। अत्र यद्यपि नायिकाभेदा नेतृ–(पात्र) निरूपणप्रसङ्ग उक्ताः, तथापि यथास्थलम् आलम्बनविभावनिरूपणप्रौढ्या तद्वैशिष्ट्यं पृथग्विभाति।

(ङ) अग्निपुराणस्य एतद्विषयकोंऽशः प्रकामं संक्षिप्तः, साधारणश्च, किञ्च तद्रचनाकालोऽपि सन्देहास्पदमिति कृत्वा न खलु तदीयसिद्धान्ताः किमपि वैशिष्ट्यमावहन्ति।

(च) ततश्चायं निष्कर्षः—नायिकाभेदास्तावद् भरतनाट्यशास्त्रोपज्ञमेव। रुद्रटेन श्रव्यकाव्येष्वपि शृङ्गाररसप्रसङ्गे तस्यावश्यकता प्रतिपादिता। धनञ्जयकृतरूपकसन्दर्भितविमर्शैर्नायिकाभेदाः प्रौढित्वमभजन्त। रुद्रटोऽपि खलु भरतपथमाश्रित्य लक्षणानि सविवरणानि कविताश्च निर्माय उल्लिलेख। शृङ्गारतिलके[1] दशरूपके च आदौ लक्षणानि, तत उदाहरणानि उद्धृत्य विषयविवेचनस्य पद्धतिर्लक्ष्यते॥

**भोजदेवकृता नायिकाभेदाः—**

एतावता यदुक्तं तत्सर्वं खलु नायिकाभेदगतं नायिकाभेदनिरूपणस्य प्रथमावस्था मङ्गलाचरणमात्रं वा। यदा हि नायिकाभेदा दृश्यकाव्यमधिकृत्य श्रव्य-

---

१. शृङ्गारतिलके हि रक्ताया विरक्तायाश्च नायिकाया वर्णनमधिकं दृश्यते, नैतत्काव्यालङ्कारेऽस्ति। तत्रत्या निरूपणशैली च नहि प्रौढं पाण्डित्यं प्रकटयति। दशरूपके च मुग्ध-मध्य-प्रगल्भानां विविधा भेदा उपलभ्यन्ते। तत्र मुग्धाया यथा–वयोमुग्धा, काममुग्धा, रतौ वामा, मृदुकोपा च। मध्याया यथा—उद्यद्यौवना, कामवती, मोहान्तसुरतक्षमा, धीरा, अधीरा, धीराऽधीरा चेति। प्रगल्भाया यथा–'यौवनान्धा', 'स्मरोन्मत्ता', 'गाढयौवना' 'भावप्रगल्भा', 'रतिप्रगल्भा' प्रभृतयः। किञ्च—धीराऽधीरादिभेदत्रयी प्रगल्भाया अपि। मध्यायाः प्रगल्भायाश्च ज्येष्ठा कनिष्ठेति द्वौ भेदावपि भवतः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

काव्यान्यपि अधिजगृहुः, तदा खलु उदाहरणात्मकानि लक्ष्यपद्यान्यपि लक्षणकथनैः सहैव उद्धृतानि । स्पष्टञ्चैतद् भोजदेवकृते सरस्वतीकण्ठाभरणे[1] शृङ्गारप्रकाशे[2] च ।

ग्रन्थद्वयेऽपि नायिकाभेदा निरूपिताः, तत्राभरणे समासेन प्रकाशे च प्रपञ्चेन । आभरणे हि पञ्चमे परिच्छेदे संक्षेपेण नायिकाभेदा रसनिरूपिकाभिः कारिकाभिरुक्ताः । अग्रे च सप्तत्रिंशदुत्तरैकशततम—( १३७ ) कारिकासु रसविषयकं मतं विनिर्दिश्य 'अथैषां लक्षणोदाहरणानि' इत्युक्त्वा रससिद्धान्ताः प्रकामं निरूपिताः । तत्रैव यथास्थानं यथाक्रमञ्च नायिकानां लक्षणान्युदाहरणानि च अतिसंक्षेपतः प्रस्तुतानि सन्ति ।

तत्रभवता महाराजश्रीभोजेन 'आभरणे' नायिकाभेदा भरतपथमाश्रित्यानेकैः प्रकारैर्निरूपिताः । रसप्रसङ्गे चाभिमानाऽहङ्कारशृङ्गारादिवत् 'पुनर्भूः' अपि कथिता । 'पुनर्भूः' नायिका कामशास्त्रानुगता, अग्निपुराणानुमोदिता च । महाराजभोजदेवेन सरस्वतीकण्ठाभरणे स्वीया-परकीया-सामान्याः, पुनर्भूश्च चर्चिताः । ग्रन्थेऽत्र नायिका-भेदप्रसङ्गोऽधोवक्ष्यमाणरीत्या नायिकाविभाजनस्य विविधां दिशं व्यनक्ति—

गुणतो नायिकाऽपि स्यादुत्तमामध्यमाधमा ।
मुग्धा मध्या प्रगल्भा च वयसा कौशलेन वा ॥
धीराधीरा च धैर्येण स्वान्यदीयापरिग्रहात् ।
ऊढानूढोपयमनात् क्रमाज्ज्येष्ठा कनीयसी ॥
मानर्द्धेरुद्धतोदात्ता शान्ता च ललिता च सा ।
सामान्या च पुनर्भूश्च स्वैरिणी चेति वृत्तितः ॥

---

१. आभरणे शृङ्गारप्रकाशे च 'शृङ्गारो रसराज' इति भोजेन महत्या युक्त्या परोक्षरूपेण साधितः । शृङ्गाररस एव सर्वरसानां निदानम्, आदिरसो वेत्यपि स मेने । स एव रसः 'अभिमानरूपः' 'अहङ्काररूपः' वेत्यपि स एव । तत्सङ्गादेव काव्ये रामणीयकमुद्भवति—

रसोऽभिमानोऽहङ्कारः शृङ्गार इति गीयते ।
योऽर्थस्तस्यान्वयात् काव्यं कमनीयत्वमश्नुते ॥
( द्र० सरस्वतीकण्ठाभरणम् ५।१ )

शृङ्गारस्य सर्वोत्कृष्ट्यसाधनार्थमेव शृङ्गारप्रकाशग्रन्थो भोजेन निरमायीत्यपि सम्भाव्यते । रसनिष्पत्तिविषये रसभावसम्बन्धे वा तदीयसिद्धान्तः पूर्वाचार्याद् भिद्यते । डा० राघवेण 'भोजस्य शृङ्गारप्रकाशनामके' प्रबन्धे विषयोऽयं न्यक्षेण विवेचितः ।

२. अत्रत्यं कृत्स्नमपि विवेचनं शृङ्गारप्रकाशस्याप्राप्त्या डॉ० राघवीयकृतितः सङ्गृहीतम् इति सधन्यवादं निवेदयामि ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

आजीवतस्तु गणिका रूपाजीवा विलासिनी ।
अवस्थातोऽपराश्चाष्टौ विज्ञेयाः खण्डितादयः ॥
( द्र०—सरस्वती० ५।११०-११३ )

अतः परं पूर्वाचार्यकृतं नायिकाभेदं शृङ्गारप्रकाशं वोपजीव्य आभरणोक्त-लक्षणानि लघूनि स्पष्टानि स्थूलरूपाणि च सन्ति । यथा हि—

(क) सर्वगुणसम्पद्योगादुत्तमा ।

(ख) पादोनगुणसम्पद्योगाद् मध्यमा ।

(ग) अर्धगुणसम्पद्योगादधमा ।

(घ) वयःकौशलाभ्यामसम्पूर्णा मुग्धा ।

(ङ) वयसा परिपूर्णा मध्या ।

(च) वयःकौशलाभ्यां सम्पूर्णा प्रगल्भा ।

शृङ्गारप्रकाशीया नायिकाभेदा विस्तृता व्यवस्थिताश्चेति राघवमहोदयः । ग्रन्थेऽत्र अधमा ज्येष्ठा च नायिके नोक्ते । स्वीयापरकीययोश्च प्रत्येकं दशोपभेदाः—

(१) उत्तमा, (२) मध्यमा, (३) कनिष्ठा, (४) ऊढा, (५) अनूढा, (६) धीरा, (७) अधीरा, (८) मुग्धा, (९) मध्या, (१०) प्रगल्भा च ।

एतेषां भेदोपभेदानां परस्परं सङ्कलनया नायिकानां प्रत्येकं त्रयश्चत्वारिंशदुत्तरैक-शतं ( १४३ ) भेदा भवन्ति ।

नायिकायास्तृतीयो भेदः 'पुनर्भूः' इति । तस्याश्च चत्वार उपभेदाः । यथा—
(अ) अक्षता, (आ) क्षता, (इ) यातायाता, (ई) यायावरा च ।

सामान्याया नायिकायाः पञ्चोपभेदाः—

(१) ऊढा, (२) अनूढा, (३) स्वयंवरा, (४) स्वैरिणी, (५) वेश्या च ।

**तत्र वेश्याया मुख्यास्त्रय उपभेदाः**

गणिका-विलासिनी-रूपाजीवा चेति ।

अत्र सामान्यायाः पुनर्भ्वाश्च उत्तमादिभेदादन्येऽपि भेदा न साक्षान्निर्दिष्टा अपि त्वनुमेया एव ।

मानानुसारेण मध्याप्रगल्भयोर्धीराधीराख्यस्तृतीयो भेदो भोजेन स्वग्रन्थेषु क्वापि नोक्तः । किञ्च भोजः कान्तस्य प्रियतमां ज्येष्ठामनङ्गीकृत्य पूर्वानूढामेव ज्येष्ठा-मूरीचक्रे, वात्स्यायनहेमचन्द्राद्युक्तदिशेति ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

पुनर्भ्वाः सामान्यायाश्च अवान्तरभेदप्रसङ्गे भोजेन यदपूर्वमुक्तम्, तदिह चर्च्यते–पुनर्भ्वा उपभेदेष्वाद्यास्त्रयो धर्मशास्त्रोदिता एव[1]। तत्र 'अक्षता' नाम–या उद्वाहतः पूर्वमेव प्राप्तसम्भोगा, यथा शान्तनुपत्नी सत्यवती। या तूढा प्राप्तसम्भोगा मृतपतिका पुनरूढा सा पुनर्भूः 'क्षता' इति निगद्यते, यथा—मन्दोदरी। या तु पुरुषान्तरव्यभिचरिता परप्रिया पुनः प्राप्तपतिका सा यातायाता, यथा—बृहस्पतिपत्नी तारा (सा खलु चन्द्रपरिगृहीता सती तेन सह अवसत्—बुधजन्मानन्तरं च पुनर्बृहस्पतिसकाशं प्रत्याजगाम) इति। या त्वटनस्वभावा सा यायावरा। एषा हि भ्रमणप्रसङ्गे पूर्वं पूर्वं पतिं परित्यज्य नवं नवं कान्तं स्वीकरोति, यथा—माधवीति भोजेनोक्तम्। माधवी हि विश्वं भ्रमन्ती तत्र तत्र पुरुषचतुष्टयमुपयेमे। यथाक्रमं च प्रत्येकं कान्तेन पुत्रमेकं सुषाव, ततश्च सम्पाद्य उद्वाहचतुष्टयीं गत्वा विन्ध्याटवीं तपश्चचार। एतत्सर्वं शापानुग्रहवशाज्जातम्। अत एव प्रत्येकस्मात् प्रसवात्परं वरदानप्रभावात् तस्याः कुमारीत्वमव्याहतमासीदिति पौराणिकसमयः। पुनर्भ्वा नायिकायाः, तदवान्तरभेदानाञ्चोल्लेख ऋते अग्निपुराणात् साहित्यशास्त्रीयग्रन्थेषु नवीन उपक्रमः।[2]

सामान्याया अभिधेयार्थमपहाय यौगिकार्थ एव भोजेन स्वीकृत इति तत्कृतविवरणतो ज्ञायते। धर्मविवाहपरिणीता भार्या स्वीया, परपुरुषगृहीता च परकीया, पुनरूढा पुनर्भूः। आसां सम्बन्धादि न सार्वजनीनम्।

विवाहसम्बन्धेन शरीरसम्बन्धेन वा (स्वयंवरादिहेतोर्वा) यस्यां कस्यापि एकस्य पुंसो नास्त्यधिकारः, सा सामान्या। अत्रोदाहरणानि द्रौपदीसीतेन्दुमतीप्रभृतयः। अनियतानेकोपभोग्या सामान्येति आभरणे भोजः। सामान्याया भेदद्वयी—ऊढा, अनूढा चेति। उदाहरणं यथाक्रमम्–द्रौपदी सीता च। तत्र द्रौपदी सामान्या ऊढा, यतः सा धर्मतः पञ्चभिः परिणीतेति। अनूढा सामान्या सीता, यतो विवाहतः पूर्वं धनुर्भङ्गपणं प्रपूर्य केनापि परिणेतुं शक्याऽऽसीदिति जनकसमयो बभूव। उपभेदोऽयं पणस्वयंवरे वरणीयाया नायिकायाः कृते सर्वत्र स्वीकृतः। स्वयंवरासामान्याया उदाहरणं यथा—इन्दुमती। अत्र भेदो यथा—निश्चितं पणं प्रतिज्ञां वा सम्पाल्य वीर्यशुल्केन वरेण नायिका वोढुं शक्या प्रथमा। एषा (स्वयंवरसामान्या)

---

१—पुनर्भूरक्षताक्षतायातायातायायावरा च। (शृ० प्र० १५ प्रकाशः)

२—वात्स्यायनेन कामसूत्र उक्तम्—

"विधवात्विन्द्रियदौर्बल्यादातुरा भोगिनं गुणसम्पन्नं च या पुनर्विन्देत् सा पुनर्भूः" (काम० ४।२।३९) इति।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

च मध्ये स्वयंवरं समागतानां वराणां मध्ये यथेच्छं वरयित्री, अत्र वरणेच्छा नायिकागता। भोजकृतमेतत्सामान्या विवेचनात्मकवर्गीकरणं काव्यालङ्कारशास्त्रे किमप्यपूर्वतां भजते[१]।

सामान्यायास्तुर्यः पञ्चमश्च भेदौ स्वैरिणी वेश्या चेत्युक्तं प्राक्। नात्र किञ्चनापि वैशिष्ट्यं प्रतीयते। तत्र मर्यादां विहाय स्वेच्छाचारिणी स्वैरिणीति आभरण उक्तम्। वेश्या तु सामान्याया मुख्यं स्वरूपम्। तत्राधिकमनुल्लिख्य तदवान्तरभेदा विव्रियन्ते।

तत्र चतुष्षष्टिकलाज्ञा वेश्या गणिका, कुट्टमितादिहावभावज्ञापयित्री सा विलासिनी, रूपयौवनमात्रोपजीविनी सा रूपाजीवेति। अत्र भोजेन वासकसज्जाद्यष्ट-भेदेषु किमपि नूतनं नाभ्यदायि।[२]

अतः परं मन्दारमरन्दचम्पूकृता कृष्णकविना क्षताऽक्षतादयो निरूपयता भोजस्योल्लेखो विहितः, परं यातायातानायिकाया द्रौपदीत्युदाहरणं तदीयभ्रमपारा-धीन्यं प्रकटयति। तथाहि—

> **अक्षता च क्षता यातायातायायावरेत्यपि।**
> **पुनश्चतुर्धा कथिताः पूर्वैर्भोजादिभिर्बुधैः॥**
> **यातायाता तु युगपदूढानेकैस्तु भर्तृभिः।**
> **यथा पाण्डुसुतैरूढा द्रुपदस्य कुमारिका॥ इति।**

**हेमचन्द्रकृतकाव्यानुशासनगता नायिकाभेदाः—**

ग्रन्थेऽत्र नायिका यथासंक्षेपं निरूपिताः। लक्ष्यानि लक्षणानि चात्र सङ्कलितानि।

हेमचन्द्रदिशा मध्यामुग्धाप्रगल्भानां प्रत्येकं भेदद्वयी। तन्मूलं वयः कौशलञ्च। यथा—वयसा मुग्धा, कौशलेन मुग्धा। एवं वयसा मध्या कौशलेन मध्या। वयसा प्रगल्भा कौशलेन प्रगल्भा चेति। मध्यादीनां धीराऽधीरादिभेदा अपि स्वीकृताः।

---

१—अत्र सामान्याया 'ऊढा' 'अनूढा' 'स्वयंवरा' इति भेदत्रयी स्वयंवरे क्षत्रियकुमारीणां कृत एवेत्यनुमानविषयः। तत्रोढानूढ्योः परिणयस्तु वीर्यशुल्कं प्रपूर्य एव भवितु-मर्हति। तृतीया च स्वेच्छया वरवरणे शक्तेति।

२—सरस्वतीकण्ठाभरणे नायिकानां नायकानां च रूपप्रतिरूपयोः भेदेन सङ्कलनं कृतम्। तत्र नायकप्रतिनायकोपनायकानुनायका नायककोट्यः। नायिकाप्रतिनायिकोप-नायिकाऽनुनायिकाश्च नायिकाकोटयः। किञ्च—नायिकाभासनायकाभासोभयाभासा अपि निरूपिताः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अत्रापि भरतोक्तदिशा पूर्वमूढा ज्येष्ठा, पश्चादूढा च कनिष्ठा कथिता। नायकस्य प्रियतरा-प्रियतमा वा ज्येष्ठा स्वल्पस्नेहभागिनी कनिष्ठेति परवर्त्तिसिद्धान्तो नात्र स्वीक्रियते।

एवमेव हेमचन्द्रेण दशरूपकीयालोकव्याख्योक्तदिशा नायिकाया अष्टविधभेदेषु परकीयायास्त्रैविध्यमेवोररीकृतम्—(क) विरहोत्कण्ठिता, (ख) अभिसारिका, (ग) विप्रलब्धा चेति।

अतः परं वाग्भटस्य (प्रथमस्य द्वितीयस्य च) वाग्भटालङ्कारे, काव्यानुशासने, प्रतापरुद्रयशोभूषणे च नायिकाभेदा निरूपिताः, किन्त्वत्र सर्वत्र न किञ्चिद्वैशिष्ट्यं नवीनत्वं खलूद्भावने वा दृश्यश्रव्यकाव्यसम्बद्धो नायिकाभेदशास्त्रीयप्रथमावस्थातुल्य एवं नायिकानिरूपणप्रकार एतेषु ग्रन्थेषु प्रायेण प्रचलति स्म। शृङ्गारालम्बनविभाव-रूपेण नायिकानां विवेचनं नाभूत्। लक्षणैः सह लक्ष्याण्यपि तत्रोदाहृतानि, परन्तु न स्वरचितानि। तत्र वाग्भटेन चतस्रो नायिका उक्ताः—अनूढा (कन्यका), स्वकीया, परकीया, पराङ्गना (सामान्या) च। जिनवर्धनाख्येन टीकाकृता परकीयात्रैविध्य-मुपपादितम्—सधवा—(जीवितभर्तृका), परकीया, विधवापरकीया, केनापि स्वीकृता विधवा (पुनर्भू) परकीया चेति।

अतः शारदातनयकृतं भावप्रकाशनम्, शिङ्गभूपालकृतं रसार्णवसुधाकरम्, द्वौ नाट्यशास्त्रीयौ ग्रन्थौ आस्ताम्, तथा च विश्वनाथकविराजकृतं साहित्यदर्पणम्, भानुदत्तकृतं रसमञ्जरीञ्चाश्रित्य नायिकाभेदाश्चर्च्यन्ते।

**भावप्रकाशने नायिकाभेदाः—**

भावप्रकाशनग्रन्थे भरत-रुद्रभट्ट-रुद्रट-धनञ्जयभोजदर्शितदिशा नायिकाभेदा उक्ताः। शारदातनयेनैव भरतमतमाश्रित्य नायिकानां देवशीला-दैत्यशीला-गन्धर्व-शीला-यक्षाङ्गना-राक्षसशीला-पिशाचशीला-नागशीला-मर्त्यशीलादिभेदास्तत्तद्भेदोद्धरण-सहिता दर्शिताः। भोजञ्चानुश्रित्य उदात्तोद्धताशान्ताललिताश्चतस्रो नायिका उक्ताः। परं नैष भेदो भोजीयं मानऋद्धिसिद्धान्तमपेक्षते, अपि तु धीरोदात्तादिप्रसिद्ध-गुणसिद्धान्तमेवापेक्षते। प्रसङ्गेऽत्र चतसृणामपि नायिकानां वेषभूषाशीलादिभेदवगुण-धर्मादिविन्यासा अप्युक्ताः। किञ्च वासकसज्जाद्यष्टविधविमर्शोऽपि अभिनेयत्वदिशा, अभिनयदिशा च यथातर्कमुक्तः।

एतास्वष्टविधासु नायिकादशासु परकीयानां कृते दशात्रयी एवापेक्ष्यत इति केचित्, इत्यपि भावप्रकाशनकृता चर्चितम्। ताश्च तिस्रो दशाः—(क) विप्रलब्धा,

CC-0. Sampurnanand University Collection. Digitized by eGangotri

(ख) विरहोत्कण्ठिता, (ग) अभिसारिका च। भावप्रकाशनदर्शितदर्शनदिशा तु एतत्-सङ्ख्या यथा—[ १३ ( स्वीया ) + २ ( परकीया ) + १ ( सामान्या ) ] = १६ × ८ = ( वासकसज्जादि ) १२८ × ३ = ( उत्तममध्यमाधमभेदात् ) ३८४ चतुरशीत्युत्तर-त्रिशतं पर्यवस्यति। एतच्च रुद्रटमतमित्युच्यते। अत्र भेदप्रसङ्गे उदात्तोद्धतादयो नाट्योपयोगिनो न धृताः।

भरतोक्तप्रथमयौवनादिभेदचतुष्टयी अत्राप्यङ्गीकृताः। एतत्सर्वमपि नाट्य-दिशाऽभिनयशिल्पदिशा च विस्तरेणात्र ग्रन्थे विचारितम्। नात्र विमर्शे किञ्चनापि अभिनवत्वम्, परमद्यापि नाट्यशास्त्रोक्तिदिशा तु तत्परिचायकं साटोपं सर्वं निरूपितम्।

कृत्स्नमप्येतद्विचारजातं रसालम्बनप्रकरण एव जातम्। शृङ्गाररसावलम्बन-सन्दर्भे च नायिकाभेदाः, नायकभेदाः, शीलचेष्टादयश्च निरूपिताः। भावप्रकाशनग्रन्थे च लक्षणं तत्परिचयश्च न्यक्षेण वर्तेते, परमत्रोदाहरणानि न सन्ति।

**रसार्णवसुधाकरः—**

नाट्यशास्त्रीयग्रन्थेषु रसार्णवसुधाकरः, साहित्यशास्त्रीयग्रन्थेषु साहित्यदर्पणं च नायिकाभेदनिरूपणे सर्वान् अतिशयाते, ययोश्च नायिकाभेदस्य द्वितीयं सोपानं सुस्पष्टं लक्ष्यते। अत्र साक्षाच्छृङ्गारावलम्बनप्रसङ्ग एव नायिकादिभेदा विस्तरेण निरूपिताः। एतत्पूर्वग्रन्थेषु यद्यपि नायिकादय आलम्बनरूपेणोक्तास्तथापि नायिकानायकभेद-निरूपणं तु कथावस्त्वाद्यपेक्षयैवाभ्यधायि। परन्तु सुधाकरे दर्पणे च पूर्वोक्तप्रकारा-द्भिन्नः क्रमो वर्त्तते। अत्र रसान्तर्गतविभावनाप्रसङ्गे तन्निरूपणं जातम्। अनयो रचना-कालोऽपि प्राय एक एव। आलम्बनविभावप्रसङ्गे शृङ्गारावलम्बनं परिचाययता रसार्णवकृता प्रोक्तम्—

आधारविषयत्वाभ्यां नायको नायिकापि च।
आलम्बनं मतं तत्र नायको गुणवान् भवेत्॥

अत्रोक्तगुणाश्च—महाभाग्यौदार्यदाक्ष्यौज्ज्वल्यधार्मिकताकौलीन्यवाग्मिता-कृतज्ञतानयज्ञत्वशुचित्वमानशालित्वतेजस्विताकलावत्ताप्रजारञ्जकत्वानि।

इमान् गुणान् लक्षयित्वा, उदाहृत्य च सामान्यनायकस्य त्रयो भेदा उक्ताः—उत्तममध्यमाधमा इति। ततश्च धीरोदात्तादिगुणभेदा उक्ता उदाहृताश्च। ततश्च सर्वरससाधारणस्य नायकस्य विनिगमनात्मकं परिचयं विज्ञाप्य शृङ्गारमपेक्ष्य त्रयो नायका यथाक्रमं स्वीयानुरागपात्रं पतिः, परकीयानुरागपात्रमुपपतिः, सामान्या-

CC-0. Sampurnanand University Collection. Digitized by eGangotri

नुरागपात्रञ्च वैशिकः (पत्युपपतिवैशिका इति त्रयो भेदा निर्दिष्टाः)। नायकाश्च चत्वारः-- अनुकूल शठ-धृष्ट-दक्षिणभेदात् । अत्र नायकगतं शाठ्यम्, धाष्ट्र्यम्, दाक्षिण्यं च ऊढासु सपत्नीषु निहितम् । ग्रन्थेऽत्र उपपतेर्दाक्षिण्यमानुकूल्यं धाष्ट्र्यं वा अनित्यत्वहेतुकमनुचित-मित्युक्त्वा तस्य शाठ्यस्य लक्ष्यलक्षणे उपस्थापिते । ततो वैशिकनायकस्य गुणा उत्तममध्यमाधमभेदानां च लक्षणानि एवोक्तानि, नोदाहरणानि । एवञ्चात्र रस-सामान्यनायकाः शृङ्गारनायकाश्च सपरिचयं सुस्पष्टं सोदाहरणं च यथा निरूपिताः, न तथान्यत्र बहुधा दृश्यते ।

अत्र नायिकाभेदप्रसङ्गे शृङ्गारानुगता एव ता निरूपिताः । तत्र स्वीयाया मुग्धामध्याप्रौढेति विख्यातास्त्रयो भेदाः सन्ति । तत्रापि मुग्धाया वयोमुग्धा-नव-कामा-रतौवामा-मृदुकोपा-सलज्जरतिशीला क्रोधेनाऽप्रभाषमाणा रुदती चेति षडुपभेदाः सोदाहरणं समुद्धृताः । मध्यायाश्च त्रयो भेदाः-समलज्जामदना-प्रोद्यत्तारुण्यशालिनी मोहान्तसुरता चेति । मानवृत्त्या च मध्याया अन्ये त्रयो भेदा धीरा, अधीरा, धीराधीरा चेति । प्रगल्भाया द्वौ भेदौ-सम्पूर्णयौवनोन्मत्ता प्ररूढमन्मथा चेति । अस्या अपि मान-वृत्तिपक्षतो धीरादिभेदत्रयी स्वीकृता । अत्र सर्वेषां भेदानां लक्षणान्युदाहरणानि च लभ्यन्ते ।

परकीयाया द्वौ भेदौ–कन्या (अनूढा) परोढा[1] चेति । तत्र कन्या नाटकेष्वादृता, परं परोढा तु ( सदाचारमूलकरसाभासताबुद्ध्या ) आर्यासप्तशत्यादिक्षुद्रग्रन्थ एव निरूपणीयेति, न नाटकेष्विति पर्यवसितम् । एतच्च रसाभासत्वभियैवेति अनुमीयते । अनूढा, कन्या च मुग्धाया एव वैशिष्ट्यमनुहरतीत्यप्युक्तम् ।

सामान्याया अपि द्वौ भेदौ रक्ता विरक्ता चेति । तत्र रक्ता नाटकोपयुक्ता, विरक्ता च प्रहसनभाणाद्युपयुक्ता । गणिका च गुणवन्तमपि नायकं नानुषज्जत इति रसा-भासत्वेन अरक्तापि सा नाट्यवर्ण्यानुपयुक्ता इति पूर्वाचार्यमतमुद्धृत्यापि नैतच्छिङ्ग-भूपालमतमित्युक्तम् । तन्मते च सामान्या वर्ण्या एवेति । अतः परं प्रोषितभर्तृकादि-भेदाष्टकं सोदाहरणमुत्तमामध्यमाधमाश्चेत्युपसंहारे प्रतिपादितम् ।

ग्रन्थेऽत्र नायिकानिरूपणप्रकरणं पूर्वाचार्यमतसङ्ग्रहात्मकमपि पूर्वोक्तविवरणेन प्रौढविवेचनागर्भत्वं पाण्डित्यपरिमण्डितत्वं च सुस्पष्टं परिलक्ष्यते ।

---

१. परोढा तु परेणोढा अन्यसम्भोगलालसा ।
लक्ष्या क्षुद्रप्रबन्धे सा सप्तशत्यादिके बुधैः ॥ १।१०६ ।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

**साहित्यदर्पणः—**

ग्रन्थोऽयं प्रौढ्या चिन्तनया संस्कृतसाहित्ये लक्षणग्रन्थेषु परं प्रथिमानमाभजते। नायिकाभेदाश्चात्र वैदुषीमण्डितया शैल्या निरूपिताः। रसगता अपि तद्भेदा उक्ताः। मुख्या भेदाः पूर्वोक्ता अपि उपभेदा नवीनाः सन्ति।

स्वीयाया भेदोपभेदनिरूपणं यथा—

**(क) मुग्धा**—१—प्रथमावतीर्णयौवना, २—प्रथमावतीर्णमदनविकारा, ३—रतौ वामा ४—माने मृदु, ५—समधिकलज्जावती। (अत्रोपभेदा नाम्ना एव, सिद्धान्तास्तु पूर्वस्वीकृताः सन्ति)।

**(ख) मध्या**—१—विचित्रसुरता, २—प्ररूढयौवना, ३—प्ररूढतारुण्या, ४—ईषत्प्रगल्भवचना, ५—मध्यमव्रीडिता च।

**(ग) प्रगल्भा**—१—स्मरान्धा, २—गाढतारुण्या, ३—समस्तरतकोविदा, ४—भावोन्नता, ५—स्वल्पव्रीडा, ६—आक्रान्तनायका चेति।

किञ्च मध्याप्रगल्भयोर्धीरादिभेदत्रयी अपि उक्ताः। किञ्चैतयोर्ज्येष्ठा कनिष्ठा चेत्युपभेदा अपि स्वीकृताः।

ततश्च मध्यायाः प्रगल्भायाश्च द्वादशभेदाः, मुग्धाया एको भेदः, स्वीयायास्त्रयोदशभेदा मुख्यतः सन्ति। परकीयाया द्वौ भेदौ—कन्या परोढा चेति। सामान्यायाश्चैक एव भेदः, तथा सङ्कलनया षोडशविधा नायिकास्सन्तीति। इमाश्चावस्थित्यनुसारं स्वाधीनभर्तृकाद्यष्टभेदवत्यः। पुनश्च उत्तममध्यमाधमभेदेन त्रिधेति। तथा—१६ × ८ = १२८ × ३ = ३८४, सङ्कलनया चतुरशीत्युत्तरत्रिशतं शृङ्गाररससम्बद्धा नायिकाः पर्यवस्यन्ति। रुद्रटेन, शारदातनयेन, शिङ्गभूपालेन चापि इयत्य एव नायिका ऊरीकृताः। परमथापि प्राचीनाचार्यदर्शितदर्शनदिशा परकीयायाः भेदत्रयी एव यथायुक्ति स्वीकृता—

१–विरहोत्कण्ठिता, २–अभिसारिका, ३–वासकसज्जा च। तथाप्युक्तम्—

> **त्र्यवस्थैव परस्त्री स्यात् प्रथमं विरहोन्मनाः।**
> **ततोऽभिसारिका भूत्वाऽभिसरन्ती व्रजेत् स्वयम्॥**
> **सङ्केताच्च परिभ्रष्टा विप्रलब्धा भवेत् पुनः।**
> **पराधीनपतित्वेन नान्यावस्थात्र सङ्गता॥**

(द्र०-सा० द० ३।१६०)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

दर्पणकृताऽपि तृतीयपरिच्छेदे द्वाविंशत्युत्तरैकशततमकारिकातः परम्, अन्यदीयमतमाश्रित्य परोढाविषये कन्यकाविषये चैतन्मतमुपपादितम् ।

**ततश्चायं निष्कर्षः—**

रसार्णवसुधाकरस्य साहित्यदर्पणस्य चापि किमपि साम्यमस्ति । यथा हि दर्पणस्य प्रौढिः आभासते, तथैव रसार्णवस्य सर्वरससामान्यात्मकत्वम्, शृङ्गाररसावलम्बन-निर्धारणीकृतविभक्तीकृतवर्णनं वैशिष्ट्यं किमपि स्फुटमभिव्यनक्ति । उभयत्र ग्रन्थयोः लक्ष्यलक्षणगर्भा निरूपणशैली प्रौढा वर्तते । तत्रोदाहरणानि लक्ष्यभूतानि प्रायस्तरां प्राचीनान्येव । रसादिनिरूपणप्रसङ्गे साहित्यदर्पणस्य शैली रसार्णवमतिशेते । प्रायो न खल्वत्र ग्रन्थे प्रतापरुद्रयशोभूषणग्रन्थ इवोदाहरणानि स्वकर्तृकानि[1] ।

इमौ द्वौ ग्रन्थौ एतस्मादेव कारणाद् नायिकाभेदनिरूपणात्मकालङ्कारशास्त्रीय-वाङ्मये द्वितीयसोपानारूढौ कथ्येते, यतोऽनयोः शृङ्गाररसनिरूपणप्रसङ्ग आलम्बन-विभावरूपरसाङ्गविवेचनक्रमे नायिकानायकयोरालम्बनस्थानीयत्वं निर्धार्य तद्भेदानां निरूपणं कृतं वर्त्तते । पूर्वग्रन्थेषु प्रायः स्पष्टरूपेण नायिकादीनां प्रस्तावना नालम्बन-सन्दर्भे प्रकरणे च निर्धारितासीत् । अत्र च विवेचने प्रायः पूर्वोक्तलक्ष्योदाहरणोप-स्थानेन आचार्यस्य भावयित्री प्रतिभा प्रौढेति सूच्यते । तत्र ललित-रसपूर्णलक्ष्य निर्माणरचनाचातुर्यप्रदर्शने स्वरचिते नौत्सुक्यं लक्ष्यते ।

## भानुदत्तकृतरसमञ्जरीग्रन्थे नायिकाभेदः—

ग्रन्थोऽयं रसमञ्जरीत्याख्योऽपि शृङ्गारमञ्जरीत्येव प्रतिभाति । तत्र प्रारम्भ एवाचार्य आह—'तत्र रसेषु शृङ्गारस्याभ्यर्हितत्वेन तदालम्बनविभावत्वेन नायिका तावन्निरूप्यते' । संक्षेपतः कथयितुं शक्यते यद्रसेषु शृङ्गारस्य महनीयत्वं श्रेष्ठत्वं च । रसाङ्गेषु च तथैवालम्बनविभावस्य, तत्रापि च नायिकायाः । अतस्तस्या निरूपणं प्रामुख्येन वर्णनीयम् ।

**इहादौऽवधेयम्—**

रसमञ्जरीकृता रसशास्त्रविषयकः स्वतन्त्रो रसतरङ्गिणीग्रन्थोऽन्योऽपि व्यरचि । रसमञ्जरी हि रसतरङ्गिण्याः परिशिष्टरूपा एव ।

---

१. अभिसारिके हि द्वे इति दर्पण उक्तम्—अभिसारयित्री—अभिसरणकर्त्री चेति । एवं प्रवासोऽपि भूतभवद्भविष्यमाणभेदात् त्रिधेति दर्पणमतम् ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

तरङ्गिण्या रसोहि यथाशास्त्रं यथाटोपं च निरूपितो गद्यशैल्या, परमुदाहरणानि काव्यगतलालित्यं परिचाययन्ति। यद्यपि रसमञ्जर्यां विषयसंक्षेपाच्छास्त्रीयविवेचनं न पर्याप्तविस्तारेण प्रकटीभूतम्, परं तावतापि तस्य गाम्भीर्यं व्यज्यत एव। अत्र लक्ष्याण्यपि स्वीयान्येवेति। अतः कवेः काव्ये लालित्यमञ्जुलतापरा प्रतिभा सुतरां प्रकाशिताऽस्ति।

गद्यभाषा सहकृतविवेचनोपादानेन तत्र शास्त्रीया गम्भीरता, स्पष्टता, प्रौढता च दृश्यन्ते नायिकादीनां मान-चेष्टा-हावभावादीनां भेदकगुणधर्मसहितं सोदाहरणं भेदोपभेदनिरूपणं ग्रन्थकर्त्तुः शास्त्रीयं पाण्डित्यं प्रकामं प्रकटीकरोति।

भानुदत्तीया रसमञ्जरीयं नायिकाभेदविषये किमपि नावीन्यमाधत्ते। एतस्मात् पूर्वं ( मुख्यतः श्रृङ्गारतिलकं विहाय ) नायिकादिनिरूपणे पूर्वस्वतन्त्रग्रन्थरचनायाः परिपाटी नासीत्, अपि तु रसनिरूपणे नाट्यशास्त्रीयग्रन्थे वा यथास्थानं नायिकाभेदा विवृताः। श्रृङ्गारे तदालम्बने वा अवश्यमेव आसक्तेराभासः तद्विस्तरस्य प्रामुख्यं लक्ष्यते। परमद्यापि नायिकाभेदमाधृत्य भानुदत्तेनैव ऐदम्प्राथम्येन ग्रन्थ आरचित इति नानुचितं वक्तुं प्रतिभाति।

एतदनन्तरं संस्कृते हिन्द्यां भाषान्तरेष्वपि एवमनेके ग्रन्था रचिता, यत्र नायिकाभेद एव मुख्योऽभवत्।

तद्युगीनवैलासिकमनोवृत्त्यनुरूपं वर्गविशेषवासनातर्पणसाधनभूतं 'हिन्दी—रीतिकालिक'—-नायिकानिरूपणवाङ्मयमतिविस्तृतं जातम्। एतस्या नवीनशास्त्रीयनायिकानिरूपणपरम्परायाः प्रामुख्येन परिपाटीप्रवर्त्तक आचार्यो भानुमिश्र इत्यपि निगदितुं शक्यते।

तद्युगीनविलासमनोवृत्तिमनुसरती विलासप्रियाभिजात्यवर्गीयभावनामनुगच्छन्ती एषा नायिकाभेदनिरूपणप्रमुखा शैली समुपबृंहिता बभूव। फलतश्च लोकभाषासु तदनुरूपसाहित्यस्य प्राचुर्यं दरीदृश्यते। अस्याः प्रवृत्तेः मुख्यतो विख्यातः प्रवर्त्तको भानुमिश्र एवेति कथयितुं शक्यते।

---

१. भानुदत्तमिश्रेण रसपारिजाताख्यं किमपि ग्रन्थान्तरमपि व्यलेखीति। ग्रन्थोऽयं मोतीलालबनारसीदासप्रकाशनेन लाहौरनगरे सप्तत्रिंशदुत्तरैकोनविंशतितमख्रैस्ताब्दे प्रकाशितः। ग्रन्थेऽत्र दुर्दिनाभिसारिकेति नवीन उपभेदोऽपि दृश्यते। किञ्च—कामशास्त्रदिशा पद्मिनीप्रभृतिभेदा अप्यत्रादृताः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

रसमञ्जरीदिशा नायिकाभेदाः पूर्वोक्ता एव—स्वीया-परकीया-सामान्या चेति। तत्र स्वपत्यनुरक्ता स्वीया, यस्या मुग्धादिभेदत्रयी प्रसिद्धैव। अत्र 'अङ्कुरितयौवन-रूपम्' यद्वैशिष्ट्यम्, तदेव मुग्धाया भेदकं परिचायकं वेति बोध्यम्। प्रसङ्गेऽत्र चातुर्विध्यं लभ्यते—१—अज्ञातयौवना, २—ज्ञातयौवना, ३—नवोढा, ४—विश्रब्ध-नवोढा चेति।

अत्रेदं स्पष्टं न प्रतिभाति यद् अन्त्यं भेदद्वयम्, अज्ञातयौवनमुग्धायाः, ज्ञातयौवन-मुग्धायाः, स्वतन्त्रं वास्ति, यद् वा आद्यभेदद्वयस्यैवोपभेदाविमाविति। केचित्तु ज्ञातयौवनाया उपभेदाविमाविति स्वीचक्रुः, परं स्वतन्त्राविमाविति बहवः। उदाहरणानुसारं चतुर्णां पार्थक्यं स्पष्टमेव। चतुर्णां नामग्रहणपूर्वकं पृथक् पृथग् उदाहरणदर्शनात्। परं नायिकाभेदस्य प्रस्तारगणनानुसारं मुग्धा नानेकविधेति पश्चादुपपादयिष्यामः। ग्रन्थेऽत्र मध्या समानलज्जामदनेत्यभिहिता, अतिविश्रब्धनवोढे-त्यपि नूतनाख्या समुपदिष्टा च। प्रगल्भा च पतिमात्रविषयकेलिकलाकलाप-कोविदेति लक्षणेन निर्दिष्टास्ति। अस्याश्च यथाचेष्टं रूपद्वयी—(क) रतिप्रीतिमती, (ख) आनन्दसम्मोहिता च। प्रस्तारगणनासु नास्त्यासामाकलनं वर्त्तते।

मध्यायाः प्रगल्भायाश्च—धीरा, अधीरा, धीराधीरा चेति प्रत्येकमुपभेदाः सन्तीति, तयोः षाड्विध्यं पर्यवस्यति। तत्रापि ज्येष्ठा कनिष्ठा चेति भेदेन मध्याप्रगल्भयोः द्वादश भेदाः, मुग्धा चैकविधा। ततश्च स्वीयायास्त्रयोदशभेदाः। एतत्सर्वं साहित्यदर्पणा-नुगतं पूर्वाचार्यसम्मतं च।

परकीयाया द्वौ भेदौ—(क) परोढा (ख) कन्यका च। एतदुपभेदौ भानुदत्ते-नापि पूर्वाचार्यसदृशौ स्वीकृतौ। परन्तु एतद्भेदाः (प्रस्तारगणनाकृताः) षट् सङ्ख्यकाः प्रदर्शिताः सन्ति।

१—गुप्ता (सुरतगोपना, वृत्तसुरतगोपना—वर्त्तिष्यमाणसुरतगोपना—वृत्त-वर्त्तिष्यमाणसुरतगोपनेति भेदात्त्रिविधा)। २—विदग्धा (वाग्विदग्धा क्रियाविदग्धा च) ३—लक्षिता ४—कुलटा ५—अनुशयाना (एषा त्रिविधा), क—वर्तमानस्थानविघटना-दनुशयाना, ख—भाविस्थानाभावशङ्कया अनुशयाना, ग—स्वानधिष्ठानसङ्केतस्थलं प्रति भर्त्तुर्गमनानुमानादनुशयाना। ६—मुदिता चेति।

परकीयाया एतेषां स्वरूपभेदानां परिकल्पना अंशतः कदाचिदाभिजात्यवर्गीय-जनानां कामशास्त्रानुगतविलासहेतुतः, अंशतश्च, तन्त्रोक्तपञ्चमकारोपासनाफलतः,

CC-0. Sampurnanand University Collection. Digitized by eGangotri

सर्वतोऽधिकं च गीतगोविन्दादिषु समुक्तकृष्णोपासनागतं परकीयारतिवर्णनप्रभानुकरणतश्च प्रचलितेत्यनुमातुं शक्यते ।

अन्यैरप्याचार्यैः यथासन्दर्भमिमे भेदा उल्लिखिता इति[1] । अतश्च रसमञ्जरीकृताऽभाणि-'गुप्ता-विदग्धा-लक्षिता-कुलटा-अनुशयाना-मुदिताप्रभृतीनां परकीयायामेवान्तर्भावः' बोधव्य इति ।

हिन्दीसाहित्यस्य रीतिकालिकसाहित्ये नायिकाभेदविस्तरप्रसङ्गे भानुदत्तमतं प्रकामं महत्त्वमभजत । आभिजात्यवर्गीयाणां वैलासिकीं रुचिमनुसरता, उच्चवर्गीयाणां कलानुरञ्जनं कुर्वता कामुकतापूर्णां तेषां मनोवृत्तिं प्रदर्शयता नायिकाभेदनिरूपणेन यः साहित्यविस्तारः कृतः, स किल तात्कालिकीं वर्गविशेषस्य सामाजिकीमभिरुचिं सूचयति स्म । सा च समाजाभिरुचिः प्रकारान्तरेण नागरिकधनिकसामाजिकानां कलात्मकसहृदयत्वस्य सहजरूपेण प्रदर्शकमभवत् ।

सामान्या चैकप्रकारेति रसमञ्जरीकारोऽपि पूर्ववद् मेने । सङ्कलनया षोडशधा नायिकाः; ताश्च नायिकाः पुनस्त्रिविधाः—१—अन्यसम्भोगदुःखिता, २—वक्रोक्तिगर्विता, ( एषा द्विविधा—क—प्रेमगर्विता, ख—सौन्दर्यगर्विता ), ३—मानवती ( एषा त्रिविधा—क-लघुमानवती, ख—मध्यमानवती, ग—गुरुमानवती ) ।

इत्थं च नायिकासामान्यषोडशभेदाः—( १३ स्वीयायाः+२ परकीयायाः+१ सामान्यायाश्च—१६ भेदाः । प्रत्येकभेदस्य च प्रोषितभर्तृकाद्यष्टावस्थाभेदाद् नायिकानामष्टाविंशत्युत्तरैकशतम् ( १२८ ) उत्तममध्यमाधमभेदाच्च चतुरशीत्युत्तरत्रिशतम् (३८४) वा भेदाः पर्यवस्यन्ति । सङ्ख्येयं भानुमिश्रेणापि स्वीकृता । पुनश्च दिव्याऽदिव्यदिव्यादिव्यादिभेदाश्च द्वापञ्चाशदुत्तरपञ्चशताधिकैकादशशतं ( ११५२ ) नायिकाः सिद्ध्यन्ति । परमेष भेदो जातिभेदकृत इति भानुमिश्रेण नाङ्गीकृतम् ।

प्रोषितभर्तृकाद्यष्टविधभेदातिरिक्तः प्रवत्स्यत्पतिकाख्यो नवमो भेदोऽपि ग्रन्थकृदाचार्येण उररीकृत्योपस्थापितः । सयुक्तिकपक्षोऽयं ग्रन्थकर्त्तुराचार्यस्य नवीनोद्बोधनकर्तृत्वं ज्ञापयति । किञ्च, प्रवत्स्यत्पतिकाख्यो भेदो भविष्यद्वर्तमानभेदेन पुष्पितो बभूव । एतस्मात् परस्मिन् काले संस्कृतसाहित्ये हिन्दीसाहित्ये चैतद्विषयकवर्णने एतद्भेदस्यातिप्रभाववशाद् नवीनभेदस्योद्भावकतया भवत्प्रवासभविष्यत्प्रवासभेदावपि सम्मेल्य नायिकावस्थाभेदा दश सञ्जाताः । ततश्च 'रसमञ्जरी' तावद् हिन्दीसाहित्यं संस्कृतसाहित्यं चोपजीवयतीति निष्कर्षः ।

१—तत्तदाचार्यकृतग्रन्थेषु उपलब्धा एतद्भेदा यथास्थानं चर्चिताः ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

इत्थं च एतदपि कथयितुं पार्यते यद् भानुमिश्रस्तस्य रसमञ्जरी रसतरङ्गिणी चेति द्वयोरपि परवर्त्तिसंस्कृतहिन्दीसाहित्यशास्त्रे नायिकाभेदनिरूपणसन्दर्भे महद्वैशिष्ट्यम् ।

**गौडीयवैष्णवभक्तिपरम्परायां नायिकाभेदा :—**

कृष्णभक्तिसम्प्रदायानुगतास्तत्रापि विशेषतो गौडीयसम्प्रदायाचार्या नायिकाभेदान् वैचित्र्येण निरूपितवन्तः । अत्र दर्शने श्रीकृष्णः, तं प्रति प्रीतिरतिप्रेमानुरक्तिभक्तिमधुररत्यादयो भावाश्च निरूपिताः । अत्र तु, श्रीकृष्ण एव एकः सर्वोत्कृष्टो नायकः, सम्बद्धाः सर्वा नायिकाः सभेदोपभेदमाडम्बरेण निरूपिताः । उज्ज्वलनीलमणिनामको ग्रन्थ एतत्सम्प्रदाये सर्वानतिशेतेतराम् । श्रीरूपगोस्वामिचरणैरारचितोऽयं ग्रन्थो भक्तिसम्प्रदाये महान्तं महिमानं बिभर्ति । ग्रन्थेऽत्र प्रारम्भ एव आलम्बनविषय उक्तम्—

**'अस्मिन्नालम्बनाः प्रोक्ताः कृष्णस्तस्य च वल्लभाः'** इति ।

सर्वरसराजभूते मधुररसे सदैव कृष्णस्तस्य चाग्रे निरूपिता वल्लभा एव सदाऽऽलम्बनत्वं भजन्ते । धीरोदात्तादयश्चत्वारो नायकभेदाः, तेषां पुनर्द्वाविपभेदौ–पतिरुपपतिश्चेति ।[1] ततो नायकस्य भेदोपभेदनिरूपणतः पश्चात् नायिकाभेदा

---

१. विषयोऽयं सप्रसङ्गोऽत्र समुल्लेख्यः । तथाहि कन्यायाः पाणिगृहीता धर्मानुसारं परिणीय तस्याः पतिर्भवति । यथा—श्रीमती सीता रामचन्द्रस्य, तत्रभवती रुक्मिणी च कृष्णस्येति । आह चात्र व्याख्याकाराः श्रीजीवगोस्वामिचरणाः—पतिः पुरवनितानाम्, द्वितीयो ( उपपतिः) व्रजवनितानाम् । उपपतिविषये चोक्तम्—

रागेणोल्लङ्घयन् धर्मं परकीया वलार्थिना ।
तदीयप्रेमवसतिर्बुधैरुपपतिः　　स्मृतः ॥

अस्यायमर्थः—परकीयाया नायिकायाः कामुकः, रतिवशाद् धर्मं परित्यज्य, परकीयाः प्रेमास्पदं नायको लीलावेषधारी रसमूर्त्तिः श्रीकृष्ण एव मधुराख्ये भक्तिरसे उपपतिः परकीयानायको वेति साधारणतः ।

गौडीयसम्प्रदायदर्शनदिशा तु श्लोकस्यास्यायमर्थः—परकीयाया अबलाया इच्छुकं रागान्मधुररतितो धर्मञ्चोल्लङ्घयन् परनायिकाप्रेमस्थानं लीलापुरुषोत्तमो मधुरोज्ज्वलरसमूर्तिः श्रीकृष्ण एव मधुराख्यभक्तिरसे उपपतिरिति ।
अग्रे चोक्तम्—

'अत्रैव परमोत्कर्षः शृङ्गारस्य प्रतिष्ठितः' इति ।

अस्यायं यथासम्प्रदायमर्थः—औपपत्यविषयकप्रेमप्रसङ्गेऽत्रैव व्रजवनिताभिः पराङ्गनाभिः सह सर्वरसलीलालवालस्य भगवतो मधुरशृङ्गारस्य, उज्ज्वलाख्यरसस्य चरमोत्कर्षत्वं प्रतिष्ठितम्, अर्थात्—भगवतो व्रजाङ्गनानां च परस्परं जाराभिमतशृङ्गारकेलिष्वेवोज्ज्वलशृङ्गारः प्रकाममौत्कृष्ट्यं भजते । तथाहि—परकीयारतिर्हि सततं बहुवारिता, यत्र

CC-0. Sampurnanand University Collection. Digitized by eGangotri

उल्लिखिताः। तत्र मधुररसे केवलं कृष्णवल्लभा एव नायिका इति मधुररससमयः। तत्र तु द्वावेव भेदौ—स्वकीया परकीया चेति। न तत्र सामान्यायाः तृतीयो भेदः। तयोर्दास्यः, सख्यश्च स्वकीयापरकीययोरेवान्तर्गता।

गोकुलकन्यासु या बालाः श्रीकृष्णे पतिभावेनानुरक्तास्ताः स्वकीया एव बोद्धव्याः। भगवति पतिनिष्ठायां सत्यां तासां विषये स्वीयाया एवौचित्यात्।

परकीया च द्वेधा--कन्या परोढा चेति। अतः परं कृत्स्नमपि विवेचनमेतत्-सम्प्रदायानुरूपमेव। तत्र नायिकानां त्रय उपभेदाः—'साधनपरा', 'देवी' (देव्यः), 'नित्य-प्रिया' चेति। आद्याया द्वौ भेदौ-'यौथिकी' 'अयौथिकी' चेति। श्रीकृष्णोपनिषदुक्तदिशा पूर्वजन्मनि श्रीरामचन्द्ररूपमाधुर्यमुग्धा मुनयो भगवन्तं पतित्वेन कामयाञ्चक्रुः। ते च संहत्य स्त्रीत्वं प्राप्य गोकुले समुद्भूताः। एकशो भगवद्रागरञ्जिताः साधनपरायणा ये मुनयो यथासमयं व्रजे नारीत्वं भेजिरे, ताः साधनपराः। याश्च सुरयुवतयो भगवत्-प्रेमबद्धा व्रज उद्भूतास्ता देव्यः। राधा-चन्द्रावली-विशाखा-ललिता-श्यामा-पद्मा-शैव्या-धनिष्ठा-भद्रिका-तारा-विचित्रा-पालिकाद्याऽङ्गना यूथाधीश्वर्यः। इत्थं शताधि-कानि रमणीयूथानि सन्ति, यत्र सर्वा आनन्दकन्दस्य भगवतो नित्यप्रियाः सन्ति।

गौडीयवैष्णवपरम्परागतनिष्ठाश्रद्धावनुश्रुतीश्चोपजीव्य भेदोपभेदान् विस्तर-पूर्वकं परिचाय्य एतदुक्तम्—पञ्चधा वृन्दावनेश्वर्याः सख्यः—'सखी', 'नित्यसखी', 'प्राणसखी', 'प्रियसखी', 'परमश्रेष्ठसखी' चेति। अत्र सर्वञ्चैतत्साटोपं न्यरूपि। परं तत्तु सर्वं सम्प्रदायानुगतमिति प्रकृतानुयोगादुपेक्ष्य अत्रेदमेव व्याहरणीयं यत्--

---

कामुकत्वं च प्रच्छन्नम्, नायकनायिकयोः समागमोऽपि तत्र नितरां दुर्लभ इति, अतश्च तस्यां परकीयारतौ रसस्य परमोत्कर्षत्वं सिद्धयति। एषा च व्याख्या गौडीयवैष्णव-भक्तमतानुगता एव। परं व्यवहारेषु तदानीमर्थस्याध्यात्मभावमुपेक्ष्य समाजे विलासि-जनेप्सितप्रदाः प्रादुरासीत्।

उक्तं हि श्रीरूपगोस्वामिचरणैः:—

लघुत्वं त्वत्र यत्प्रोक्तं तत्तु प्रकृतनायके।
न कृष्णे रसनिर्यासस्वादार्थमवतारिणि ॥ इति

अर्थात्— लोकव्यवहारमूलकधर्ममर्यादावशात् सामान्यलोकजीवने लौकिकशृङ्गारसन्दर्भे एव परकीयासम्बद्धोपपतिनिष्ठायाः परस्त्रीरतया अपकृष्टत्वं हेयत्वं च। न खलु तथाऽलौकिक-मधुररसप्रसङ्गे श्रीकृष्णसम्बन्धे। तेषां किलावतार एव गौडीयमतेन भक्तानामुज्ज्वलशृङ्गारस्या-स्वादनाय।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

उज्ज्वनीलमणिग्रन्थे नायकनायिकाभेदाः कृष्णभक्तिसम्प्रदायानुगताः सन्ति, यत्र पौराणिकी साम्प्रदायिकी च मताग्रहदृष्टिरभिनिविष्टा वर्तते। अत एवं तत्र नायिकाभेदाः समाजानुगता जीवनानुगताश्च न सन्ति, अपि तु एतत्सम्प्रदायानुगता एव। एवञ्च स्थूलदृष्टिमतिक्रम्य सम्प्रदायसिद्धान्तमनुहरन्तीति। तत्र वर्णितानां नायिका-नायकानां स्वरूपं न खलु लौकिकसमाजानुरूपम्, अपि तु तन्निरूपणं गौडीयमत-मान्यताऽनुसारि आध्यात्मिकभूमिकाप्रतिष्ठितं चेत्यलम्।

अतश्च नायिकाभेदनिरूपणप्रसङ्गे सामान्यायाः सत्तामस्वीकृत्य नायिकाभेद-सम्प्रदायसमयोऽप्येभिरुपेक्षितः। भक्तिरससमयानुसारं मधुरायाः प्रीतेः, प्रेम्णो रतेर्वा स्थायिभावरूपेण प्रतिष्ठात्र नितरामपेक्ष्यते। सत्यनन्ये गाढप्रेमणि एव सर्वतो-भावेन पतिरूपेण प्रियतमरूपेण वा भगवतो मधुरोपासनायां स्वीयाभावः परकीयाभाव एव वा सम्भवति, न सामान्याभावः। एतत्सिद्धान्तदिशा माधुर्यमेवैकमालम्बनम्, नायकोऽपि रसानन्दमूर्तिः केवलं व्रजेन्द्रनन्दन एक एव त्रिकालाबाधितः, तदतिरिक्तस्य नायकस्य यत्र सम्भावनापि न विद्यते, तत्र खलु का नाम सामान्यानायिका स्यात्। किञ्च लीलाविग्रहम्, आनन्दकन्दं व्रजचन्द्रं विहाय कोऽन्यो वात्र नायकः! एतदनुसारं सैरन्ध्र्यपि परकीया एव।

एवञ्चात्र नायिकाया द्वावेव भेदौ—स्वकीया-परकीया च। मुग्धामध्याप्रगल्भाः स्वकीयाभेदा इति बहवो नायिकाभेदाः, परन्तु मधुरोपासका रसाचार्यास्तु परकीयाया अपि एते भेदा इति व्याजह्रुः।

**क—मुग्धाया अवान्तरभेदाः—**

१—'नववयाः', २—'नवकामा', ३—'रतौ वामा', ४—'सखीवशा', ५—'सव्रीडरतप्रयत्ना', ६—'रोषकृतबाष्पमौना', ७—'माने विमुखी'।

**ख—मध्याया अवान्तरभेदाः—**

१—'समानलज्जामदना', २—'प्रोद्यत्तारुण्यशालिनी', ३—'किञ्चित्प्रगल्भ-वचना', ४—'मोहान्तसुरतक्षमा', ५—'माने कोमला', ६—'माने कर्कशा' ( धीराऽ-धीरा-धीराधीरेति भेदा एतदतिरिक्ताः)।

**ग—प्रगल्भाया अवान्तरभेदाः—**

१—'पूर्णतारुण्या', २—'मदान्धा', ३—'उरुरतोत्सुका', ४—'भूरिभावोद्गमा-भिज्ञा', ५—'रसाक्रान्तवल्लभा', ६—'अतिप्रौढवचना', ७—'अतिप्रौढचेष्टा', ८—'माने अत्यन्तकर्कशा', (मानवृत्त्यनुसारं धीरा, अधीरा, धीराधीरा चापि)।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

गौडीयवैष्णवपरम्परायां सर्वाधिकरसास्पदं खलु मध्यैव। तत्र कारणं हि मध्यायां मुग्धावन्मनोमोहनकारिणीत्वम्, प्रौढावच्च मादकप्रागल्भ्यमिति द्वयोः मिश्रणमत्र प्रकामं खलु परिलक्ष्यते। एवञ्च मौग्ध्यप्रागल्भ्ययोःस्सन्धिरूपा मध्यावस्था एव मधुररसे मनोरमतमा पूर्णतश्च रसास्पदम्।[1]

उढानूढयोर्मध्ये अनूढैव कन्या। कन्याया एक एव भेदः—मुग्धा इति। परं स्वीयायाः परोढाया वा पूर्वोक्तमुग्धादिभेदत्रैविध्यमस्त्येव।[2]

इमे सर्वे भेदा लक्ष्यलक्षणसहिता निरूपिताः। तदनन्तरम् [3]अभिसारिकाद्यष्टावस्था नायिका अपि विवृताः। अत्रापि विभागद्वयम्—(क) हृष्टा (ख) खिन्ना चेति। तत्र 'स्वाधीनपतिका' 'वासकसज्जा', 'अभिसारिका', इमास्तिस्रो नायिका हृष्टाः, आतश्चेमाः 'मण्डिता' ( 'सज्जिता' 'शृङ्गारसुभगा' वापि )। अवशिष्टाः पञ्च नायिकाः खिन्ना इति, ताश्च मण्डनवर्जिता एव।

व्रजेन्द्रनन्दनं प्रति सप्रेमभक्तेः, मधुराया रतेर्वा गाढतायास्तारतम्यानुसारेण नायिकाः—उत्तमामध्यमाकनिष्ठाः भवन्ति।

गौडसम्प्रदायानुगतरसपद्धत्यनुसारम्—यूथेश्वरी·दूती-( सा च द्विधा–स्वयंदूती, आप्तदूती च ) सखीदूती-सखी-सखीविशेषहरिवल्लभाप्रभृतीनां वर्णनं यथाविस्तरं तत्र कृतं वर्त्तते।

संक्षेपेण गौडसम्प्रदायाभिमतनायिकाभेदवैशिष्ट्यं निर्दिश्यते—

(क) कृष्णस्य तद्वल्लभानाञ्चालम्बनत्वम्। रसमूर्तिकृष्णस्य आध्यात्मिकं नायकत्वं गौडसम्प्रदायानुगतमेव। तत्र नायकस्यैक्यम्, नायिकानाञ्चानन्तता। तत्रापि अनन्तायां सत्यामपि ईर्ष्यां विहाय सर्वासाम् एकत्र भगवत्येव सर्वासामेकोन्मुखी गाढा मधुरा च रतिः, पत्युपपतिभावौ च।

१—सर्व एव रसोत्कर्षो मध्यायामेव युज्यते।
यदस्यां वर्तते व्यक्ता मौग्ध्यप्रागल्भ्ययोर्युतिः॥

२—सामान्यतो नायिकाः पञ्चदशधा—१–कन्या मुग्धा, २–स्वीया मुग्धा, ३–स्वीया धीरमध्या, ४–स्वीया अधीरमध्या, ५-स्वीया धीराधीरमध्या, ६–स्वीया धीरप्रगल्भा, ७–स्वीया अधीरप्रगल्भा, ८–स्वीया धीराधीरप्रगल्भा चेति। अत्र द्वितीयतोऽष्टमं यावत् सप्तोपभेदा परकीयाया अपि भवन्ति। तदेवं सङ्कलनया ८+७=१५ पञ्चदश भेदा जाताः, किञ्च अष्टावस्थाद्योतकाष्टसङ्ख्यया गुणिता (१५×८=१२०) विंशत्युत्तरैकशतं भेदाः सञ्जाताः। तत्रापि प्रत्येकम्-उत्तमा-मध्यमा-कनिष्ठादिभेदत्रैविध्येन (१२०×३=३६०) षष्ट्युत्तरत्रिशद्भेदाः पर्यवस्यन्ति।

३—गौडीयदर्शनेऽपि अभिसारिकाया द्वौ भेदौ—अभिसरणकर्त्री, अभिसारयित्री चेति स्वीकृतम्।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

२—अत्र सिद्धान्ते उपपतिर्नाम आलम्बनात्मिकायाः परकीयारतेर्मधुरश्रृङ्गारे परमोत्कर्षस्वरूपता। एवम् भगवद्विषयिकाया औपपत्यप्रीतेर्महनीयगौरवास्पदत्वं च।

३—सामान्याया अस्वीकारः, अथ च परकीयायामपि मुग्धामध्याप्रगल्भेति भेदत्रैविध्यस्वीकारः।

४—मध्यायां रसस्य सर्वोत्कृष्टत्वप्रतिपादनम्, किञ्च कृष्णं प्रति माधुर्यप्रीतेस्तारतम्येन नायिकागता उत्तमादिभेदाः।

५—नायिकादिसन्दर्भे पौराणिकानां गौडसाम्प्रदायिकानाञ्च गाथानामनुश्रुतीनां सिद्धान्तानाञ्च यथाभेदमाकलनम् इति।

वीरेन्द्र-रीसर्च-सोसाइटी–राजशाही, वंगाल-( सम्प्रतिवंगलादेश ) प्रकाशितं सम्प्रदायस्यास्य मुख्यं ग्रन्थान्तरमस्ति कविकर्णपूरविरचितमलङ्कारकौस्तुभम्।

श्रीकविकर्णपूरमतानुसारं हि रति-प्रीति-मैत्र्यादयो गुणास्तद् ( भगवद् )–रूपा एव। तत्र स्त्रीपुंसयोर्युगलीभूय व्यवहारं रतिः। सा च सम्प्रयोगविषया। या तु असम्प्रयोगविषया, सा प्रीतिरुच्यते। इत्थमेव मैत्रीसौहार्द्रदेवरतिप्रभृतिभावान् परिचाय्यपरिचाय्यं रसस्तावत् सुष्ठु निरूपितः। श्रृङ्गारनिरूपणं खलु श्रीमद्रूपगोस्वाम्युक्तदिशा कृतम्। सामान्या नाङ्गीकृता, स्वीयायाः परकीयायाश्च मुग्धादिभेदत्रैविध्यमङ्गीकृतम्। स्वोढापरोढारूपभेदयुगलीं, वासकसज्जाद्यष्टावस्थाश्चाश्रित्य द्व्यधिकैकशतं नायिकाः पर्यवस्यन्ति। कन्यारूपाया अनूढापरकीयायाश्चत्वार उपभेदाः—(क) ज्येष्ठा, (ख) कनिष्ठा, (ग) अत्यन्तमृद्वी, (घ) मध्यमृद्वी चेति। प्रकृत्यनुसारं चात्युत्तमोत्तमामध्यमा चेति त्रयो भेदाः। साधनोपासनानुसारं चान्येऽपि त्रयो भेदाः—'सिद्धा', 'सुसिद्धा', 'नित्यसिद्धा' इति। ततश्च संकलनया १३×२=२६, २६×८=२०८, २०८+४=२१२, २१२×३=६३६, ६३६×३=१९०८ अष्टोत्तरनवशताधिकैकसहस्रं नायिकाः पर्यवस्यन्ति।

अत्रायं निष्कर्षः—अत्र सिद्धासुसिद्धानित्यसिद्धेति त्रयो भेदा नवीना एव। किञ्च उत्तमामध्यमाकनिष्ठास्थानेऽत्युत्तमोत्तमामध्यमेत्याद्युक्ता इति।

**मन्दारमरन्दचम्पूः**[1]—

कृष्णकविविरचितेऽस्मिन् ग्रन्थे विशेषमहत्त्वस्य विषया नाधिकाः। अत्र मुग्धादित्रैविध्यं स्वीयागतमेव। मुग्धायाश्च ज्ञातयौवना अज्ञातयौवना चेति भेदद्वयी।

---

१. काव्यमाला ( सिरीज ५२ )।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

ग्रन्थकृता पुनरत्र भेदद्वैविध्यमूरीकृतम्—शुद्धनवोढा, विश्रब्धनवोढा चेति। मध्यागतं प्रौढागतं चात्र किमपि नावीन्यं नास्ति, केवलमनयोर्ज्येष्ठा कनिष्ठा चेत्युपभेदावुक्तौ।

**अत्रेदं सावधानेनावधेयम्**—सामान्या परकीया च द्वे अपि प्रौढे एवेति 'कृष्ण-कविमतम्। न ते मुग्धामध्ये।

**सामान्या परकीया द्वे प्रौढे इत्येव सम्मते।**

( द्र० काव्या० पृ० ८० )

किञ्च—वासकसज्जाद्यष्टभेदा मुग्धातिरिक्तानामन्यासां नायिकानामेव भवन्तीति स्वकीयं कृष्णकवेरभिमतं मतम्। केषाञ्चिन्मते मुग्धाया अपि इमे अष्टभेदा भवन्तीत्यपि स एव। किञ्च दिव्याऽदिव्यादिव्यादिव्येति त्रयो विभेदा अपि नायिकानां भवन्तीति तन्मतम्। एतन्मतं कैश्चन भरतादिभिरेवोक्तं न सर्वैरालङ्कारिकैः। उद्धतोदात्ता-ललिताशान्तेतिभोजीयभेदा अप्येतत्सम्मतम्। **"कथिता पूर्वैर्भोजादिभिर्बुधैः"**—इति व्याहरताऽनेन **क्षताऽक्षतायातायातायायावरेति** भेदा सोदाहरणं निरूपिताः। परमत्र ग्रन्थकृदुक्तिस्तु "युगपदनैकैरूढा यातायातेति स्वांकृता" इत्युक्त्वा च—द्रौपदी तेनोदाहृता। भोजविषये सोक्तिर्भ्रान्तिमूलैव। भोजेन बृहस्पतिपत्नी तारा याता-यातेत्युक्ता। पूर्वपृष्ठे तदुल्लिखितं वर्तते।

कामशास्त्राभिमता पद्मिन्यादिचतुर्भेदा अपि अनेन स्वीकृताः। किञ्च—आयुर्वेददिशा प्रकृतिभेदमुपजीव्य कफिनी-वातला-पित्तलेति भेदा अप्युक्ताः। अभिसारिका-प्रसङ्गे च दिवाभिसारिकाश्यामाऽ-( निशा ) भिसारिकेति भेदयुगली, तत्र श्यामाभि-सारिकायाः शुक्ला कृष्णा चेति पुनर्द्वौ भेदौ। किञ्च सरस्वतीकण्ठाभरणोक्तदिशा नायिका, प्रतिनायिका, उपनायिका, अनुनायिका चापि निरूपिताः

ग्रन्थोऽयं चम्पूः, अतो गद्यं पद्यं चात्र यथास्थानं विषयनिरूपणप्रसङ्गे दृश्येते एव। परमुपर्युक्तप्रकरणेऽस्मिन् पद्यमेवास्ति। तच्च प्रायशोऽनुष्टुम्मयम्। आदौ नायिकानां भेदोपभेदा नामग्राहं गृहीताः, ततः संक्षेपेण लक्षणान्युदाहरणानि च दृश्यन्ते। अत्र लक्ष्याणि यद्यपि कविकृतान्येव तथापि तानि लक्षणानुकूल्यप्रदर्शकान्येव, न तु काव्यरूपश्रृङ्गारविलासमनोरञ्जनवर्द्धकानीति न वा श्रृङ्गारपरककाव्योदाहरणानि।

**नाटकलक्षणकोशः—**

ग्रन्थेऽत्र नायिकानिरूपणं परम्परागतसरण्यपेक्षया किमपि नावीन्यमाधत्ते[२]।

---

१. काव्या० १०८०।

२. ( द्र० नाटकलक्षणरत्नकोशः )।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

ग्रन्थस्य कर्ताऽऽचार्यसागरनन्दी, खल्वादौ पूर्वाचार्यवत् स्वीयापरकीयासामान्येति भेदनिरूपणमपास्य प्रथमतः खण्डिताविप्रलब्धेत्याद्यष्टभेदनिरूपणप्राथम्येन विषयोपस्थापनं कृतवान् । किञ्च—अभिसारिका, कुलजा, वेश्या ( क्रमशः स्वीया, सामान्या ) चेति द्विधोक्ता । परकीयायास्तु चर्चैव नास्ति । तच्च कदाचिन्नाट्यसूत्रोपनिबद्धप्रसङ्गप्रभावात् ।

आचार्यभरतेनापि नानासत्त्वसमुद्भवा प्रकृतिस्त्रीणां विविधेत्युक्तम् । यथा—बाह्या, आभ्यन्तरा, बाह्याभ्यन्तरा चेति । तत्र बाह्या वेश्या, आभ्यन्तरा कुलीना, बाह्याभ्यन्तरा कृतशौचेति ।

तत्र बाह्याभ्यन्तरे नायिके विवृते, परं तृतीया कृतशौचाभिधा बाह्याभ्यन्तरा नायिका सम्भवतः नाट्यानुपयोगित्वेन न व्याख्याता, अतश्च न सा स्फुटमवगन्तुमर्हेत्युपपादितं प्राक् । किञ्च—अष्टावस्थानायिकाभेदप्रसङ्गान्तर्गताभिसरणसन्दर्भे वेश्या-कुलजा-प्रेष्याश्च चर्चिताः । 'परकीया' शब्दः भरतेन कुत्रापि नोक्तः । सागरनन्द्याचार्यकाले प्रेष्याशब्दो दूतीमभिधत्ते स्म । अतस्तत्रापि मुख्यतो द्वौ भेदावेव पर्यवस्यतः । स्यादेतत्—नाटकलक्षणरत्नकोशग्रन्थो यां परम्परामाश्रित्य प्रणीतः, तस्यां परम्परायां परकीया लोकसम्मता न भवेदिति तत्र स भेदो नोक्त इति प्रतीयते ।

अग्रे ग्रन्थकर्ता—भरतदिशा अभिसरणरीतिमुक्त्वा तदनुकूलान् नवसमयानपि व्याहरन् तत्र कुलजायाः कृते गोधूलिवेला सर्वथोपयुक्तेति केषाञ्चिन्मतमित्यवादीत् । यद्यपि कामबाणजर्जरितानां कृतेनास्ति कालप्रतिबन्ध इति रसिकसमयः । किञ्च उपर्युक्ताष्टातिरिक्ता सभ्या नायिकाऽपि नवमा स्वीकृता । सभ्या नाम सा या—पतिगृह एव निरन्तरं भीता शारीरिकसुखावसरं लब्ध्वापि यदा कदाचिद् हृद्येव निगडितमिव मनोऽभिलाषं संस्थाप्य तूष्णीमास्थिता । ( सभ्या च स्वीयाया एव भेदविशेष इति वक्तुं पार्यते ) ।

मानप्रसङ्गे चात्र ग्रन्थे मुग्ध-मनाङ्मुग्ध-समृद्धातिसमृद्धभेदा उक्ताः, परं लघुमाना-मध्यमाना-गुरुमानेतिभेदा नोक्ताः । नात्र किञ्चिदपरं वैशिष्ट्यम् ।

**शृङ्गारमञ्जरी—**

अयं 'बड़ेसाहेब' इत्यपराख्येन सन्त-अकबरशाहमहोदयेन रचितो ग्रन्थः । एष च पश्चात्कालिकोऽपि काव्यशास्त्रीयपरम्परायां महान्तं महिमानमाधत्ते । एष हि ग्रन्थः एकपञ्चाशदुत्तरैकोनविंशतिशततमख्रिस्ताब्दे हैदराबादराज्यस्य पुरातत्त्वविभागद्वारा प्राकाश्यमानीतः, डा० राघवमहोदयेन च सम्पादितः । ग्रन्थस्यास्य विशालपृष्ठका-

CC-0. Sampurnanand University Collection. Digitized by eGangotri

यस्य भूमिका षोडशाधिकशतपृष्ठात्मिका वर्तते, यत्र विदुषा सम्पादकेन महता परिश्रमेण तत्तत्पाण्डुलिपीरुपजीव्य ग्रन्थविषयाः प्रकाशिताः ।

कुतुबराज्यस्यान्तिमः शासकः 'अबुलहसन' आसीत्, यदीयो राजगुरुसन्तशाहराजू आसीत्, तज्ज्येष्ठपुत्रः सन्त-अकबरशाह आसीत्, यः खलु 'बड़े साहब' इति ससम्मानं व्याह्रियते स्म, तेनैव ग्रन्थोऽयं आन्ध्र—( तेलुगु ) भाषायामारचितः। ग्रन्थकारस्य पूर्णं नाम 'हजरत सइय्यद अकबरशाह हुसैनी' इति ।

स एव ग्रन्थः संस्कृतेऽनूदितो विद्वद्भिः, शृङ्गारमञ्जरीत्याख्यया विख्यापितः ।

अस्य नवस्य ग्रन्थस्य रचनाप्रयोजनं निर्दिशतादावेवोक्तम्—

**"रसमञ्जरी आमोदपरिमल-शृङ्गारतिलक-रसिकप्रिया-रसार्णव-प्रतापरुद्रीय-सुन्दशृङ्गार-नवरसकाव्य-दशरूपक-विलासरत्नाकर-काव्यपरीक्षा-काव्यप्रकाशप्रमुख-ग्रन्थान् विचार्य प्राचीनेषु यानि लक्षणानि युक्तियुक्तानि, तानि सङ्गृह्य अन्यानि परित्यज्य प्राचीनोदाहरणानुसारेण नायिकाभेदान् कल्पयित्वा, येषामुदाहरणानि न सन्ति तेषामुदाहरणानि विरचय्य, येषां नामानि न सन्ति तेषां नामानि स्थापयित्वा ......प्राचीनलक्षणेषु यान्युपयुक्तान्युदाहरणानि तानि तत्तन्नायिकास्थलेषु लिखित्वा चर्चाग्रन्थो गद्यरूपो लक्षणग्रन्थः, फक्किकारूप उदाहरणग्रन्थः, पद्यरूपो लक्षणोदाहरणे नायिकाभेदाः शृङ्गारः नवरसेषु शृङ्गारस्य प्राधान्यात् शृङ्गाररसालम्बनविभावा नायिकानायकाः, शृङ्गाररसानुकूलाः, सात्त्विकभावाः, पूर्वोक्तग्रन्थवर्णितपद्मिन्यादि-जातयो जातिसंस्कारो जातिभेदाश्चैवं सरसाशेषविशेषा निरूप्यन्ते[1]"** ।

अनया उपक्रमप्रस्तावनया विवेच्यग्रन्थस्य समस्तमुख्यवैशिष्ट्यं सूच्यते ।

१—एतस्य लेखकेन सम्बद्धविषयाणामनेकेषां ग्रन्थानां सम्यगालोडनं कृत्वैव विवेच्यग्रन्थस्य रचना कृता ।

२—प्राचीनानां ग्रन्थानां लक्षणोदाहरणानां विश्लेषणात्मके परीक्षणसंशोधने अपि कृते ।

३—यदा च विषयनिरूपणप्रसङ्गे आवश्यकता परिलक्षिता, तदा नवलक्षण-नवीनलक्ष्यविषयसम्बन्धिनूतनभेदोपभेदनवीननामकरणानि चापि विहितानि ।

४—विषयस्य गौणत्वं महत्त्वं वाऽनुसृत्य प्रसङ्गस्य संक्षेपणं विस्तारणं वा कृतम् ।

---

१. द्र० शृङ्गारमञ्जरी—पृ० २, ( हैदराबादपुरातत्त्व—विभागसंस्करणम् ) ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

५—नवरसेषु शृङ्गारस्य प्राधान्येन शृङ्गारसम्बन्धिनायिकानायकभेदानां शृङ्गाररसानुकूलसात्त्विकभावादीनां पद्मिनीचित्रिणीशङ्खिनीहस्तिनीप्रभृतिजातियोषितां च निरूपणं कृतम्[1] ।

६—प्रसङ्गेऽत्रेदमवधेयम्—उपर्युक्तग्रन्थविवरणे द्वौ हिन्दीभाषामयौ ग्रन्थावपि गृहीतौ—(क) केशवदासकृता 'रसिकप्रिया',(ख) सुन्दरदासकृतः 'सुन्दरशृङ्गारश्चेति ।

एतस्मिन् ग्रन्थे विषयाः सविस्तरं सम्यक् विवेचिता निरूपिताश्च । विषय-विवेचनस्य मुख्य आधारभूतो ग्रन्थः भानुदत्तस्य रसमञ्जरी, तस्याश्च द्वे अप्रकाशिते टीके—'आमोदपरिमले' । तत्रापि मुख्यत आमोदस्य सहायता उररीकृता । बहुपु स्थलेपु रसमञ्जरी मतानुसारि लक्षणं पूर्वपक्षरूपेण उपस्थापितम् । अव्याप्त्यतिव्याप्त्या-दिदोषनिराकरणसरण्या उत्तरपक्षरूपेणामोदकारसिद्धान्तमतोपस्थापनं सादरं उपन्यसता ग्रन्थकारेणोक्तम्—'आमोदकारास्तु' इति । बहुधा चामोदवर्णितपक्ष एव समर्थितः । यदा कदा च तस्य पक्षं प्रत्याख्यायता शृङ्गारमञ्जरीकारेण स्वतन्त्रं स्वमतमुपस्थापितम् ।

अस्मिन् व्याख्यात्मकसमालोचनप्रसङ्गे या सरणिः स्वीकृता, तस्यां विषयाणां लक्षणाख्याने वैशिष्ट्यं वर्तते, विषयविभाजने भेदोपभेदकथने वा सरणिगता विशिष्टता लक्ष्यते । यदा कदा च लक्ष्योदाहरणेष्वपि नवीनता सूचिता वर्तते ।

विवेच्यमान एतस्मिन् ग्रन्थे भेदोपभेदनिरूपणप्रसङ्गे केचन नवीना अपि उपभेदा उपस्थिताः, परन्तु तत्र नवीनोद्भावनापेक्षया तद्युगीनवासनात्मकविलासिताया एव सूचनं परिलक्ष्यते । परमत्र किञ्चिद् वैशिष्ट्यमपि परिदृश्यते । मुगलसम्राजां राज-सभासु, आभिजात्यवर्गेपु तस्मिन् युगे वैलासिक्या अभिरुच्याः प्रखरः प्रवाहः प्रवहमान आसीत् । नायिकाभेदविषयकहिन्दीभाषाग्रन्थकारैश्च तदा स्वस्वग्रन्थेपु विषयविवेचन-परकशास्त्रीयप्रौढिं विहाय अस्पष्टसंक्षिप्तलक्षणान्यभिधाय शृङ्गारप्रधानाः सुललिता उदाहरणभूताः समुद्दीपिकाः काव्यरचनाः कृताः, परन्तु अत्र शास्त्रीयपक्षनिरूपणं सम्यक् प्रौढत्वं भजते ।

---

१. इदानीं वात्स्यायनमतानुसारेण गुणैर्हस्तिन्यादिनायिकाभेदाः, भद्रादिनायकभेदाश्च निरूप्यन्ते । हस्तिनी-चित्रिणी-शङ्खिनी-पद्मिनीगुणेभ्यो भद्रदत्त-कुचमार-पाञ्चालगुणानामभिन्नत्वात् प्रत्येकमेपामुदाहरणानि (न) लिखामः । हस्तिन्यादिनायिकासु परस्परगुणसाङ्कर्येण जाति-सङ्कराः स्त्रियो जायन्ते ।

( द्र० शृङ्गारमञ्जरी पृ० ५४ )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**ग्रन्थेऽत्र नायिकाभेदाः—**

अत्र अज्ञातयौवना ज्ञातयौवना चेति मुग्धाया भेदद्वयम्। तत्र द्वितीयाया द्वौ उपभेदौ—(क) नवोढा (ख) विश्रब्धनवोढा चेति। अतिविश्रब्धरूपमध्याभेदस्यात्र सयुक्तिकं खण्डनं विद्यते। प्रच्छन्नमध्या प्रकाशमध्येति मध्याया द्वावुपभेदौ उक्तौ। इमौ च नवीनाविति प्रतिभाति। प्रगल्भाया द्वावुपभेदौ—(क) रतिप्रीतिमती, (ख) रत्यानन्दपरवशा चेति।

धीराधीरादिभेदविषये च कोपमुपजीव्य रसमञ्जरीकृता तौ भेदौ परकीयायाः सामान्याया अपि स्वीकृतौ, एतच्च शृङ्गारमञ्जरीकृतापि समर्थितम्। परं परकीयाया एको विशेषो भेद उद्बोधितेति, तस्या एव इमावुपभेदौ। एतच्च पश्चाद् व्याहरिष्यते।

एतद्ग्रन्थदिशा परकीयाया द्वौ भेदौ—अन्या परोढा च। द्वितीयस्याः पुनरुपभेदौ--उद्बुद्धा ( स्वयमनुरागिणी ) उद्बोधिता ( नायकप्रेरितानुरागवती ) चेति। उद्बोधितायाः पुनर्भेदाः---धीरा, अधीरा, धीराधीरा चेति। उद्बुद्धाया अपि तावन्त एव—गुप्ता, निपुणा, लक्षिता चेति। अत्र न खलु भानुदत्तवत् परकीयाषाड्विध्यमङ्गीकृतम्, अपि तु भेदत्रयमेव।

गुप्तायास्त्रयो भेदाः—-वृत्तसुरतगोपना-वर्तिष्यमाणसुरतगोपना-वृत्तवर्तिष्यमाणसुरतगोपनाभेदात्। निपुणाऽपि तावद्भेदवती एव--'वाङ्निपुणा', 'क्रियानिपुणा', 'पतिवञ्चननिपुणा' चेति। तत्राद्यौ भेदौ-पूर्वप्रसिद्धभेदयोर्वाग्विदग्धा-क्रियाविदग्धयोर्नामान्तरमेव, तृतीयस्तु नवीन एव। स च तात्कालिकमुस्लिमप्रासादेषु---राजपुत्रप्रासादेषु व्याप्तानाभिचारं परिचाययतीति अनुमीयते।

लक्षिताया द्वौ भेदौ--'प्रच्छन्नलक्षिता' 'प्रकाशलक्षिता' चेति।

परकीयाया ये अन्ये त्रयो भेदा उपर्युक्ताः पूर्वप्रसङ्गे मुख्यतो नामग्राहं नोक्ताः, ते तु प्रकाशलक्षिताया अवान्तरभेदा एव। प्रकाशलक्षिताश्चतस्रः--(क) कुलटा, (ख) मुदिता, (ग) अनुशयाना; (घ) साहसिका चेति। अनुशयानास्तिस्रः-—(क) 'विघटितसङ्केता', (ख) 'अप्राप्तभाविसङ्केता', (ग) 'शङ्कितसङ्केतजारगमना' चेति। अत्र एतत्सूचितं वर्तते, यद्यपि रसमञ्जरीकृता अनुशयानाया भेदत्रितयी एवोरीकृतास्तथापि आमोदकारदर्शितदिशा अधिकभेदाः सम्भवन्ति।

अत्र 'साहसिका' इति भेदो नवीन एव, तात्कालिकीं मनोवृत्तिं सूचयति। एतस्य लक्षणं तत्र वर्तते--साहसकृतजारसम्भोगा साहसिका इति।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

ग्रन्थेऽत्र सामान्यायाः पञ्च नवा उपभेदा उक्ताः—(१) 'स्वतन्त्रा', (२) 'जनन्यधीना', (३) 'नियमिता', (४) 'क्लृप्तानुरागा', (५) 'कल्पितानुरागा' चेति।

'नियमिता' इत्यस्य तात्पर्यम्—या विवाहमन्तरापि धनलोभात् कञ्चिदेकं पुरुषमाश्रित्य नियतसम्बन्धस्थापना स्यात्।

धनेच्छया बहुभिर्भुक्तापि या एकत्र पुरुष एवानुरागं विधत्ते, सा 'क्लृप्तानुरागा' इति। या तु धनार्थं केवलमनुरागमभिनयति, न तु वस्तुतोऽनुरज्यते सा 'कल्पितानुरागा' इति। सामान्याया इमे भेदास्तात्कालिकीनां गणिकानां विभिन्नविधानां स्वरूपाणि परिचाययन्ति।

ग्रन्थेऽत्र 'अन्यसम्भोगदुःखिता', 'मानवती' च खण्डिताप्रसङ्गे निरूपितेति। वक्रोक्तिगर्विता च अष्टावस्थातिरिक्ता नवमी नायिका कल्पिता। अतश्च स्वाधीनपतिकादयोऽष्टभेदा एव न, अपि तु नव भेदाः। अत्र प्रत्येकं क्व क्व स्वीयादिभेदाः स्वीक्रियन्ते इत्येतत् सर्वं सविवेचनं लक्ष्यलक्षणसमन्वितं यथायुक्ति निरूपितम्। अत्र निरूपणं कियद् युक्तिसम्मतं कृतमिति स्वाधीनपतिकाभेदप्रसङ्गे द्रष्टव्यम्। तदाष्टविध्यं यथा—'स्वीया'–'मुग्धा'–'मध्या'-प्रगल्भा'–'परकीया'-'सामान्या'-'दूतीवञ्चिका'-'भाविशङ्किता' चेति। एवमेव वासकसज्जामध्ये 'अवसितप्रवासपतिका' इति वर्तते, न तु प्रोषितपतिकामध्ये। इत्थं विरहोत्कण्ठिताया द्वावुपभेदौ—'कार्यविलम्बसुरता' 'अनुत्पन्नसम्भोगा' चेति। अनयोर्द्वितीयस्याः पुनश्चत्वार उपभेदाः—१—'दर्शनानुतापिता', २—'श्रवणानुतापिता', ३—'चित्रानुतापिता', ४—'स्वप्नानुतापिता' चेति।

विप्रलब्धायाश्च द्वौ भेदौ—'नायकवञ्चिता' 'सखीवञ्चिता' चेति। खण्डिता च षड्विधा—'धीरा', 'अधीरा', 'धीराधीरा', 'मानवती', 'अन्यसम्भोगदुःखिता', 'ईर्ष्यागर्विता' चेति। इमे च भेदोपभेदा महता विस्तरेण निरूपिताः, इयान् विस्तरो नान्यत्र लभ्यते।

इत्थमेव च कलहान्तरिताया नायिकाया अपि ईर्ष्याकलह-प्रणयकलहभेदाभ्यां द्वावुपभेदौ। 'प्रेम-सौन्दर्य-सौभाग्य-नैपुण्यान्याधारीकृत्य वक्रोक्तिगर्विताऽपि चतुर्विधा। अवान्तरभेदेषु स्मित-यौवन-सौकुमार्य-विलासप्रभृतीनि वैशिष्ट्यान्यादाय लक्ष्यलक्षणे कृते। प्रोषितपतिका-प्रवसत्पतिका-प्रवस्यत्पतिकातिरिक्तः सख्यनुतापिताऽपि तुरीयभेदः प्रोषितपतिकायाः कृतः।

रसमञ्जरीकारमतेन स्वयमभिसरणकर्त्री नायिकाऽभिसारिका, प्रियं चाभिसारयति या सा 'वासकसज्जा' इति। अत्रेदं वैशिष्ट्यं यत्—प्रियसमीपमभिसरन्ती

६

CC-0. Sampurnanand University Collection. Digitized by eGangotri

नायिकैव 'अभिसारिका'। अन्यत्र नेयम्। परकीयाभिसारिकाया भेदा अत्र वर्णिताः सन्ति—ज्योत्स्नाभिसारिका, तमोभिसारिका, दिवाभिसारिका, गर्वाभिसारिका, कामाभिसारिका च। अन्योऽप्येको भेदो लक्ष्यते—प्रेमवाक्याभिसारिका।

उत्तममध्यमाधमास्त्रिभेदास्तु ग्रन्थेऽस्मिन्नपि स्वीकृताः। अन्ते च ग्रन्थकृता संक्षेपेण कामशास्त्रीयाः पद्मिन्यादिचतुर्भेदा अपि निरूपिताः।

इत्थं चैतस्य ग्रन्थस्यैतद्वैशिष्ट्यं यदत्र बहूनां नवीनानां भेदोपभेदानामुद्भावना वर्त्तते। अनुवादवशादन्यस्माद्वा कारणादत्र संस्कृतभाषा प्रवाहमयी नास्ति, न वा तत्र शास्त्रीयप्रयोगप्रौढिनैपुण्यं परिलक्ष्यते[1]।

**शृङ्गारामृतलहरी, रसरत्नहारः, रसचन्द्रिका च—**

अथात्र नायिकाभेदप्रसङ्गे उक्तास्त्रयो ग्रन्था अपि चर्च्या एव। तथाहि—सोमराजकृतशृङ्गारामृतलहर्यां[2] संक्षेपेण शृङ्गारालम्बनरूपेण नायकान्निरूप्या-

---

१—'शृङ्गारमञ्जरी'विषये सूचितं यन्मूलग्रन्थोऽयम् ग्रन्थ आन्ध्र-( तेलगू )-भाषायां विरचितो वर्त्तते—

तेनान्ध्रभाषायां रचितः शृङ्गारमञ्जरी ग्रन्थः।
स्वयमकबरेण भूभृन्मुकुटमणिरञ्जिताङ्घ्रिकमलः॥ ( लेन ? )

एतेनोपक्रमणिकापद्येन सूच्यते यत्स्वयं श्रीमता अकबरसाहिना ग्रन्थस्यास्य रचना कृता। अग्रेऽपि तत्रैवोक्तम्—"बड़ेसाहबाकबरशाहः 'शृङ्गारमञ्जरीग्रन्थराजं रुचिरं विरचयति"। अनेन एतदपि यथाकथञ्चिद् व्यज्यते यदस्य संस्कृत-संस्करणमन्यैर्विरचितमिति।

डॉ० भगीरथमिश्रेण 'हिन्दीकाव्यशास्त्र का इतिहास' नामा हिन्दीभाषामयो ग्रन्थः कश्चन व्यरचि। ग्रन्थस्यास्य नवीनसंस्करणे 'शृङ्गारमञ्जरी' ग्रन्थस्य यो हिन्दीभाषाऽनुवादो वर्तते, स त्वाचार्यचिन्तामणित्रिपाठिना लिखित इत्यभाणि, परं तत्रैव ग्रन्थे पश्चात् स्वोक्तिं विशदीकुर्वता श्रीमिश्रेणावादि यत्—'अस्य ( बड़ेसाहेबाकबरशाहस्य ) कृते चिन्तामणित्रिपाठिना प्रथमं तेलुगुभाषायां रचितस्य, ततः संस्कृतेऽनूदितस्य शृङ्गारमञ्जरीग्रन्थस्य व्रजभाषायामनुवादो विहितः, एषा सैव 'शृङ्गारमञ्जरी' अस्ति। हिन्दीभाषात्मकस्य 'शृङ्गारमञ्जरी'ग्रन्थस्य सम्पादनं डॉ० भगीरथमिश्रेण, प्रकाशनं च लक्ष्मणपुरविश्वविद्यालयेन कृतमिति। ततश्चायं निष्कर्षः—

'शृङ्गारमञ्जरी' नामको मूलग्रन्थो हि तेलगूभाषायामारचितः, बड़ेसाहेबमहोदयेन यो हि संस्कृतेऽनूदितः, अनुवादितो वा, तस्य पुनर्हिन्दीरूपं हि आचार्यचिन्तामणित्रिपाठिना कृतम्, ततश्च नायं कर्त्तुरुपज्ञाऽस्ति ग्रन्थः, अनूदितत्वात्। किञ्च ग्रन्थेऽत्र विषयनिरूपणे यच्छास्त्रीयविश्लेषणरूपा विस्तृता विवेचनशैली दृश्यते, सा तु प्रायस्तरां संस्कृतसंस्करण एव विद्यते।

२—द्र० काव्यमालायाश्चतुर्दशं गुच्छकम्।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

लम्बनभूता नायिका अपि सप्रपञ्चं शास्त्रदृष्ट्या निरूपिताः। अत्र शृङ्गारमञ्जरीदिशा सविवेचनं लक्षणं प्रौढगद्ये लिखितम्। ग्रन्थकर्त्रा स्वीयाया एव भेदत्वेन मुग्धा स्वीकृता। परं मध्या प्रगल्भा च परकीयायाः सामान्यायाश्च भेदत्वेनोक्ते। नवोढापराख्याया मुग्धाया भेदद्वयी—(क) अज्ञातयौवना, (ख) ज्ञातयौवना चेति। विश्रब्धनवोढा मध्याया एव भेद इति केचित्। परे तु—मुग्धाया इति। मध्यैवोद्यतयौवनेति कथ्यते। प्रगल्भानिरूपणे किमपि नावीन्यं नास्ति। धीरा च परकीयाभेद इत्यपि सोमराजेन नाङ्गीकृतम्। ज्येष्ठा कनिष्ठा च मुग्धाया भेद एव, तत्त्वं च कान्तगतप्रेमातिशयेन, न तु विवाहक्रमेणेति सोमराजेन सयुक्तिकमभ्यधायि। परकीयाया गुप्तादयः षड् भेदाः स्वीकृताः, वृत्तसुरतगोपना, वर्तिष्यमाणसुरतगोपनादिभेदात्।

(अनुशयाना च वर्तमानस्थानविघटनानुशयाना, भाविस्थानविघटनानुशयाना, स्वानाधिष्ठितस्थानस्य भर्तुरनधिष्ठानेन)।

गुप्तवर्तमानसुरतगोपनाविदग्धा, वाग्विदग्धा, क्रियाविदग्धा। सामान्यापि यथार्थानुरागवती भवेत्, परं परकीयायां मानस्य सत्ता नानेन उररीकृता। आगमिष्यत्पतिका च वासकसज्जाभेद इत्यपि स एव। एवम् अवसितप्रवासपतिका, आगतपतिका वाऽपि तद्भेद एव। अभिसारिकायाश्च अभिसरणकर्त्रीत्वं तत्कारयित्रीत्वं वोररीकृतम्। प्रवत्स्यत्पतिका च प्रोषितपतिकाभेद एवेति।

**शिवरामत्रिपाठिकृतः 'रसरत्नहारः'[1]**

ग्रन्थकर्त्रा नक्षत्रमालाग्रन्थे (द्र० काव्यमालापञ्चमगुच्छकम्) चर्चितोऽप्ययं विषयो 'रसरत्नहार' ग्रन्थे सविस्तरं निरूपितः। तत्र रसमञ्जर्युक्तनायिकालक्षणान्यपि समालोचितानि।

धीरादिविषयेऽनेनोक्तम्—पूर्वाचार्याणां मते स्वकीयाभेदा एव, परन्तु परवर्तिनां मते परकीयाया अपि द्वावन्यावपि भेदौ व्याख्यासूक्तौ—(क) गुरुजनभीता, (ख) भुजङ्गभीता[2] चेति। तत्र प्रथमा तावद् नाटकलक्षणरत्नकोशदर्शितदिशा 'सभ्या' इत्येव भाति।

रत्नहारोदाहृतदिशा प्रथमा नायिका परकीया इति भाति। या पितृगृहे परवशा स्वीयाऽपि द्वितीया स्पष्टतः परकीया एव।

---

१. काव्यमाला (षष्ठगुच्छकम्, पृ० १२७।

२. ,, ,, पृ० १२७।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**रसचन्द्रिकाः—**

अलङ्कारकौस्तुभग्रन्थकारस्यालङ्कारिकस्य विश्वेश्वरपण्डितस्य कृतिरियं प्रौढ्या शैल्या प्रसिद्धिं भजते। अत्र रचयित्रा नव्यन्यायस्य प्रौढां वैदुष्यपूर्णां शैलीमनुसृत्य भूयः परीक्ष्य पुङ्खानुपुङ्खरूपेण पदपदार्था विविक्ताः, आतश्चात्र नायिकाभेदमहिमानं भजते, विचारणाशैलीवैशिष्ट्यात्।

रसविषयकोऽप्ययं ग्रन्थो रसनिरूपणान्नारभ्य तद्युगीनां प्रवृत्तिमनुसृत्य नायक-नायिकाभेदमुखेन प्रारभ्यते, तत्रापि च नायिकामहिमानं समङ्गीकृत्य तत एव ग्रन्थारम्भः। अत्र नायिकात्रैविध्ये अज्ञातयौवना, ज्ञातयौवना चेति मुग्धाया भेदौ, ज्ञातयौवनाऽपि द्विविधा—नवोढा विश्रब्धनवोढा चेति सङ्कलनया मुग्धाया भेदत्रयी। मध्याप्रगल्भयोस्तु धीराधीरादिभेदा यथापूर्वमत्राप्युक्ताः, परं प्राचां मते इमे भेदाः स्वीयायाः, अर्वाचां मते च परकीयाया इति व्याहृतम्। ज्येष्ठात्वकनिष्ठात्वयोर्मूल-मत्रापि प्रेम, न तु विवाहक्रमः।

परकीयायाश्चानूढापरोढारूपं भेदद्वयमपाकृत्य मुग्धाविदग्धादिषड्भेदाः, अधिकन्तु कन्याऽनूढा सप्तमभेदोऽपि स्वीकृतः। उपभेदाश्चादसीयाः पूर्वानुगता एव। सामान्याया नास्ति, कोऽप्यवान्तरभेदः। इमाः सर्वा अपि अन्यसम्भोगदुःखिता-मानवती-वक्रोक्तिगर्विताभेदात् पुनस्त्रिविधाः। मानस्तु—प्रणयेर्ष्याप्रत्यक्ष-स्वप्नायित-भोगाङ्कदर्शन-गोत्रस्खलन-श्रवणभेदाद् बहुविध उदाहृतः। लघुमध्यगुरुरूपेण मानस्य निर्धारणं कृतम्। भेदप्रसारे च स्वीयास्त्रयोदश, परकीये द्वे, सामान्या एकैव। सङ्कलनया षोडश। अष्टावस्थाभेदाः, पुनश्चोत्तममध्यमाधमास्त्रयो भेदास्तदेवम्—( १६×८= १२८×३=३८४ ) चतुरशीत्युत्तरत्रिशतं भेदा भवन्ति। नात्र दिव्यादिव्यादिभेदा उक्ता।

अत्र किञ्चित्—पूर्वं कन्या, परकीयात्वेन गणिता, तथा चासतीरूपा सा जाता ( उदाहरणरूपेण )। एषा नायिकाकृतोद्वाहाऽपि कन्याकालिकं जारं प्रति प्रणयभाव-व्यवहारं [1]वर्तयति।

अत्र ग्रन्थे प्राधान्येन साहित्यदर्पणतो यत्र कुत्र नाट्यशास्त्रतो यदा कदाचिच्च

---

१. कन्यका यथा—

आरोपिता शिलायामश्मेव त्वं स्थिरेण मन्त्रेण।
मग्नापि परिणयापदि जारमुखं वीक्ष्य हसितैव॥
( द्र० रसचन्द्रिका, चौखम्बा संस्कृतसीरीज, पृ० १२ ( सं० १९८२ )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

रसमञ्जरीतोऽपि सामग्री सङ्गृहीता, क्वचिच्च पूर्वाचार्याणां मतान्युद्धृतानि। खण्डनमण्डनादीन्यपि संक्षेपेणात्र वर्तन्ते। पदपदार्थाश्च प्रौढ्या शास्त्रार्थशैल्या निरूपिताः, उदाहरणानि प्रायस्तरामन्यदीयानि बहुत्र स्वीयान्यपि। निष्कर्षस्तु सिद्धमेतत्—शृङ्गारप्रधानेऽपि युगे ग्रन्थोऽयं शास्त्रीयगाम्भीर्यशैलीमनुसृत्यारचितः। ग्रन्थश्चायमादितोऽन्तपर्यन्तं परां शास्त्रीयां प्रौढिं भजते।

**कतिपये अन्ये ग्रन्थाः—**

सदुक्तिकर्णामृतम्, शार्ङ्गधरपद्धतिः, पद्यरचनादयः। अत्राद्ये ग्रन्थे[1] किमपि न क्रमशो निरूपितम्, परं शृङ्गारप्रवाहवीचिप्रकरणे इमा नायिका उक्ताः—'मुग्धा, मध्या, प्रौढा, नवपरिणीता, विश्रब्धनवोढा (गर्भवती), सत्यवती (कुलजा), स्वैरिणी, असती, कुलटा वा, (एतदुपभेदाः—गुप्ता, विदग्धा, लक्षिता च) वेश्या, खण्डिता, अन्यसम्भोगचिह्नदुःखिता, विरहिणी, वासकसज्जा, स्वाधीनभर्तृका, विप्रलब्धा, कलहान्तरिता, मानिनी, (एतदुपभेदा उदात्तमानिनी, अनुरक्तमानिनी च) प्रवस्यद्भर्तृका, प्रोषितभर्तृका, प्रोषितसम्भेदा, अवसितप्रवासपतिका, आगतपतिका वेत्यनर्थान्तरम् अभिसारिका च (एतद्भेदाः—तिमिराभिसारिका, ज्योत्स्नाभिसारिका, दुर्दिनाभिसारिका चेति)।

नामग्राहमासामुदाहरणानि सन्ति, न तु लक्षणनिरूपणे। तत्रापि 'वेश्या' नायिकाया नामोदाहरणाभ्यां परं—दाक्षिणात्यस्त्री, पाश्चात्यस्त्री, उदीच्या—तत्रापि ग्राम्या, प्राच्या चेति। आसां नामान्युदाहरणानि च सन्ति। अत्र 'ग्राम्या'-नायिकाया ग्राम्यत्वं न दोषास्पदम्, अपि तु तस्या नैसर्गिकं सारल्यं सौन्दर्यं च रामणीयकमित्यवादि—

> **न तथा नागरस्त्रीणां विलासा रमयन्ति नः।**
> **यथा स्वभावमुग्धानि वृत्तानि ग्राम्ययोषिताम्[1]॥**

शार्ङ्गधरपद्धतौ[2] तु भरतोक्तदिशा देवत्वाप्सरस्त्वादि समाश्रित्य विविधा अङ्गना निरूपिताः। तत्र देवस्त्री-अप्सरसो यक्षाङ्गना राक्षसीप्रभृतयः किमपि महत्त्वमाभजन्ते, परमत्र नास्ति तस्य किमप्यन्यद् वैशिष्ट्यम्।

---

१. ग्रन्थोऽयम् 'पञ्जाब ओरियन्टल सिरीज'प्रकाशितः।

१. द्र० सदुक्तिकर्णा० पृ० १४८।

२. बम्बेगवर्नमेण्टसीरीजप्रकाशितोऽयं ग्रन्थः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

आङ्कोलकरलक्ष्मणभट्टस्य ( अदसीयः समयोऽज्ञातः ) 'पद्यरचना' ( एष सुभाषितग्रन्थः, काव्यमाला ८९) ग्रन्थोऽपि सदुक्तिकर्णामृतपद्धतिमनुहरति । अत्र चतुर्थ-श्रृङ्गारव्यापारे नायिकाया वयस्सन्धिस्तारुण्यमवयवाश्च वर्णितानि । पञ्चमे व्यापारे च विरहिणी वर्णिता । सप्तमाष्टमयोश्च नायिकाया नामान्युदाहरणानि च सन्ति। यथा--कुलाङ्गना, प्रोष्यत्पतिका, प्रोषितपतिका, उत्कण्ठिता च । ततश्च 'अथाङ्गना-वान्तरभेदाः' इत्युक्त्वा नवोढाविश्रब्धनवोढामुग्धामध्याप्रौढाऽसती ( विदग्धा, गुप्ता, लक्षिता च ) वेश्याकुलटा, प्रेमगर्विता, सौन्दर्यगर्विता, खण्डिता, कलहान्तरितादय उदाहृताः । नास्त्यत्रान्यन्नौत्न्यम् । सर्वमपि खलु तत्सामयिकमेव, येन परिचितताना-मेषामनुल्लेखेऽपि क्षतिविरहात्, केवलं प्रवृत्तिवशादेव सर्वमुदलेखि ग्रन्थकर्त्रेति ।

**रसिकजीवनम्--**

संस्कृतमयस्यास्य ग्रन्थस्य रचयिता कवी रामानन्दत्रिपाठी वर्तते । कविरयं काशीस्थः सरयूपारीणब्राह्मणः, बहुत्रविषये च रचनाकृत् ।

तदानीं खलु न केवलं हिन्द्याम्, अपि तु तेलुगुभाषायां संस्कृतेऽपि श्रृङ्गार-प्रवृत्तिस्सुदृढाऽऽसीदित्युपर्युक्तविवरणैः स्पष्टम् ।

यद्यपि रसमञ्जरीश्रृङ्गारमञ्जरीप्रभृतयो ग्रन्था यथाशास्त्रं निर्मिताः, तथापि नायिकानां रतिसम्बन्धिसौन्दर्यम्, तदुद्दीपकता च तदानीन्तनाचार्यहृदयेषु सुप्रतिष्ठितमासीत् ।

रसतरङ्गिणीरचनातः परमपि नायिकाभेदविषयकग्रन्थद्वयरचनामिमां भावनां परिचाययति ।

प्रस्तुत आलोच्यग्रन्थोऽयं रसिकजीवनाख्यः 'रीति'कालिकमनोवृत्तिं पर्याप्तं परिचाययति ।

तदानीन्तनानामन्येषामाचार्याणामिव ग्रन्थकर्तुरपि शास्त्रीयविश्लेषणापेक्षया लक्ष्यकाव्यद्वारा श्रृङ्गाररूपाङ्कनद्वारा नायिकानिरूपणेऽधिका रुचिः सुस्पष्टं प्रतीयते ।

**रसिकजीवनकारस्य कवेर्व्यक्तित्वं कृतित्वञ्च--**

तद्रचितस्य **'विराड्विवरणम्'** इति शीर्षकलघुग्रन्थस्य भूमिकायां कवेर्विषये मत्पित्रा प० श्रीनारायणपतित्रिपाठिमहोदयेन यल्लिखितम्, तदग्रेऽनूद्यते—

अस्मत्पूर्वजाः पण्डितश्रीरामानन्दमहोदयाः 'दाराशिकोह'राजकुमारेण **'विविध-विद्याचमत्कारपारङ्गम'** इति पदव्या सम्मानिताः । यदा तु औरङ्गजेबः पितरं

CC-0. Sampurnanand University Collection. Digitized by eGangotri

शाहजहाँसम्राजं कारायां बद्ध्वा, ज्येष्ठसहोदरं दाराशिकोहं जघान, तदानीम् अस्मत्पूर्वपुरुषेण श्रीरामानन्दमहोदयेनाभाणि—

नो सैन्यं चतुरङ्गमीश्वरकृपानाशे प्रभूतं धनं
नो वा पौरुषमात्मनो न च नृपान् मन्ये समर्थान् यतः।
दाराशाहमहीपतिर्दशहयैर्वीरार्गलाग्रामतो
यातस्तां मधुरां कथञ्चिदकरोद्विश्रान्तिमेकक्षणम् ॥ १ ॥

येनेयं धरणी समुद्रवलया प्रत्यर्थिभूपालया-
प्येकीकृत्य वशीकृता हि नितरां दिल्लीनृपेण स्वयम्।
रङ्गान्तक्षितिपेन सोऽपि बत यत् कारागृहं प्रापित-
स्तस्माद् दैवशणाम्बुजाक्षरमयीं मन्ये समर्थां लिपिम् ॥ २ ॥

येनेयं श्रीदकाशीसकलकविजनोद्दामदानप्रकाशै-
राकीर्णा धर्मवर्णामृतयुतसलिलैः संस्कृता स्वर्णदी च।
आकूपारं क्षितीशो नतिविनयमतिर्यश्च कर्त्रेश्वरस्तद्-
दाराशाहेन्द्रमौलेर्विपदि कथमहो जीवनीयं हि विश्वम् ॥ ३ ॥

धर्मस्तुर्ययुगे न तेन जयति त्वेकाङ्घ्रितां श्रावितो
यावत्तावदपुण्यपण्यनिरतं निर्जित्य दानैः कलिम्।
यः पुण्यामृतवाहिनीं सुकृतवान् विश्वम्भरां श्रीदतद्-
दाराशाहविपत्सु हा कथमहो प्राणा न गच्छन्त्यमी ॥ ४ ॥

दाराशिकोहस्यास्य सभा, या साम्प्रतमपि अधिकाशि दालमण्डीक्षेत्रे **'पुरानी अदालत'** नाम्ना ख्यातिं भजते, किञ्च दाराशिकोहकृता **'अतिथिवसतिः'** ( सराय ) अद्यावधि राजघाटक्षेत्रे रेलवेस्टेशननिर्माणाद् भग्नरूपा दृश्यते। किञ्च वाराणस्यां **'दारानगर'** इति प्रयागे च **'दारागञ्ज'** इति स्थानेऽपि तदीयमहिमानमुच्चैः ख्यापयतः।

रामानन्दस्तु तदानीं काश्यां पण्डितेषु श्रेष्ठः, सभासु च प्रथमपूजाभागासीत्। तदीया पितृभक्तिस्तु सुदृढा इति तत्कृततत्तद्ग्रन्थाध्ययनतः सुस्पष्टं प्रतीयते। एतत्कृता ग्रन्था लुप्तप्राया अपि केचन अवशिष्टा अद्यावध्युपलभ्यन्ते। तद्विवरणमधस्तादुपोध्रियन्ते—

**स्तोत्राणि**—

अत्र कियन्तिचन खण्डितानि जातानि। यथाशक्ति विवरणानि प्रस्तूयन्ते—

CC-0. Sampurnanand University Collection. Digitized by eGangotri

नाम श्लो० सं० छन्दः कालः

१—**रुद्रताण्डवम्** । ८ । पञ्चचामरच्छन्दः १९४४ सं० तमे देवीस्तवराजचतुर्भुजाष्टकाभ्यां सह मुद्रयित्वा निःशुल्कं वितीर्णम् ।

२—**सदाशिवस्वरूपस्तुतिः** । ८ । दण्डकच्छन्दः १७५९ वैशाखकृष्णशुक्रवारः । अस्यादिमे 'सार्धे द्वे' पद्ये न लभ्येते ।

३—**महाकालस्तोत्रम्**--दण्डकच्छन्दः । आद्यौ श्लोकौ लब्धौ ।

४--**शङ्करस्तोत्रम्**--त्रिभङ्गीच्छन्दः । आद्यश्लोकतः परं द्वितीयस्य अंश एव लब्धः, नात्र श्लोकसङ्ख्या निश्चेतुं पार्यते ।

५--**भास्करस्तोत्रम्** । ८ । दण्डकच्छन्दः । सं० १७५५ भाद्रशुक्ल ६ शनिः ।

६--**मार्तण्डस्तोत्रम्**--स्रग्धरा । ५॥। । पादोनषट्-श्लोकाः ६ एव लब्धाः, नातोऽन्तं वक्तुं शक्यते ।

७—**चतुर्भुजाष्टकम्** । ८ । पञ्चचामरच्छन्दः । सं० १७२३ फाल्गुने निर्मितम्, सं० १९४४ तमे देवीस्तवराजेन मुद्रितम् ।

८--**कृष्णाष्टकम्** । ८ । उपजातिच्छन्दः । सं० १७२४ ज्येष्ठः १२, शुक्रः ।

९--**रामाष्टकम्** । ८ । विविधानि च्छन्दांसि ।

१०--**रामकीर्तिस्तोत्रम्** । ५ । शार्दूल० स्रग्धरे'च्छन्दसी ।

११—**आद्यास्तवराजः** । १४ । स्रग्धरा, शिखरिणी, शार्दूल० ।

१२--**श्यामास्तवराजः** । १६ । स्रग्धरा, शिखरिणी, शार्दूल० । ग्रन्थोऽयं सानुवादं मुद्रितः ।

१३—**वगलामुखीस्तवराजः** । १५ । शार्दूल० शिररिणी च छन्दः ।

१४—**देवीस्तवराजः** । १० । त्रिभङ्गीच्छन्दः । सं० १९४४ तमे रुद्रताण्डवचतुर्भुजाष्टकाभ्यां सार्धं काश्या।म् 'अमरप्रेस' यन्त्रालये प्रकाशितः ।

१५--**विन्ध्येश्वरीपञ्चकम्** । ५ । शार्दूलच्छन्दः । नेदं पूर्णमलम्भि, अतः पञ्चकमित्यलेखि ।

१६--**विन्ध्यवासिनीकल्पद्रुमस्तोत्रम्** । ८ । स्रग्धराच्छन्दः । सं० १७४२ आ० शु० प्रतिपदि निर्मितम्, १९६१ संवत्सरे प्रकाश्य निःशुल्कं वितरितम् ।

१७--**महिषमर्दिनीस्तवः** । १० । पृथ्वीच्छन्दः ८, शार्दूल० २। वैशाख शुक्ल १३, शुक्रे रचितः । सङ्कटास्तोत्रमेतत् ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

१८—दुर्गाष्टपदी । ९ । आर्याच्छन्दः ।

१९—गङ्गाष्टपदी । ९ । ,,

२०—जाह्नवीस्तुतिः । ८ । स्रग्धराशार्दूलपृथ्वीच्छन्दांसि ।

२१—गङ्गालहरी । ८ । त्रिभङ्गीच्छन्दः ।

२२—गङ्गास्तवः । १६ । पज्झटिकाच्छन्दः । चौपाई इति भाषायाम् ।

२३—गङ्गामृताष्टकम् । ६ । स्रग्धरा । नान्तं वर्तते ।

२४—गङ्गाष्टकम् । ८ । शार्दूल० अन्तिमे च पृथ्वी ।

२५—मणिकर्णीकुसुमम् । ८ । त्रिभङ्गी । १७४२ संवत्सरे भाद्रकृष्णः १३ ।

२६—कविकौतुकाष्टकम् । ८ । मन्दाक्रान्ता ।

२७—कामाष्टकम् । ८ । ,, ।

२८—कोपाष्टकम् । ४ । मन्दाक्रान्ता । पूर्वार्धमिदम्, पूर्णं नालम्भि ।

२९—लोभाष्टकम् । ८ । मन्दाक्रान्ता ।

३०—मोहाष्टकम् । ४ । ,, । पद्यद्वयमेवालम्भि ।

३१—मोहनाशनम् ,, ,, ।

३२—आत्मस्तोत्रम् । अस्य त्रिभङ्गीच्छन्दोलिखितं पद्यत्रयमेवालम्भि । अन्तलाभाभावात् श्लोकसङ्ख्या न ज्ञाता ।

३३—विष्णूत्थापनस्तोत्रम् । स्रग्धरा । केवलं १॥ श्लोको लभ्यते ।

३४—तारापतिस्तोत्रम् । आर्दूल० । श्लोकत्रयं लभ्यते ।

## ग्रन्थविवरणम्

१—वेदार्थमन्त्रसङ्ग्रहः—नित्यकर्मश्राद्धाद्युपयोगिनो मन्त्रा अत्र सङ्गृहीताः ।

२—तत्त्वदीपिका । सिद्धान्तकौमुदीव्याख्येषा । आदितो हलन्तस्त्रीलिङ्गं यावत्, तिङन्तकारकयोश्च कियांश्चिदंशो लभ्यते । अदसीयं मङ्गलं यथा—

नत्वा साम्बसदाशिवाङ्घ्रियुगलं कृत्वा गुरोर्वन्दनं
स्मृत्वा चापि समन्ततोऽर्थगहनास्तास्ता मुनीनां गिरः ।
शिष्याणामनवद्यबुद्धिविमलज्ञानाय सत्कौमुदी
टीकामुक्तिविशेषयुक्तिनिकरैः कुर्मः प्रमोदास्पदम् ॥

३—तर्कगुम्फणा—तर्कसङ्ग्रहग्रन्थोऽत्र पद्यमयीकृतः । छात्रसौविध्याय प्रयासोऽयं सर्वथा सुकर उपायस्तेषां कृते । उदाहरणं यथा—



CC-0. Sampurnanand University Collection. Digitized by eGangotri

चक्षुर्ग्राह्यगुणो हि रूपमुदितं शुक्लादिभिः सप्तधा
जिह्वाग्राह्यगुणो रसो हि मधुराम्लाद्यैर्मतः षड्विधः।
घ्राणग्राह्यगुणस्तु गन्ध उदितो यस्तु त्वचा गृह्यते
स स्पर्शः कथितः स चापि कथितः शीतादिभेदैस्त्रिधा॥

ग्रन्थस्यास्य बहून्युदाहरणान्याहर्त्तुं पार्यन्ते, निवन्धविस्तरभिया न तान्युल्लिख्यन्त इति।

४--**वैद्यकम्**--विषयेऽत्र औषधसङ्ग्रहात्मकः कश्चन ग्रन्थोऽलम्भि, न च तत्र आद्यन्तौ उपलभ्येते। अतस्तद्विषये किमधिकं वच्मि! मन्ये पूरयितुमिच्छासीदिमं ग्रन्थम्? अदसीयकविता ललिताः। साधारणोऽप्ययं ग्रन्थो महान्तमुपकारं साधयति। उदाहरणं यथा सर्पवृश्चिकदंशप्रतीकाराय—

यः पिबति पुष्पदिवसे जलपिष्टं सितपुनर्नवामूलम्।
तत्सन्निधौ न वर्षं वृश्चिकभुजङ्गाः प्रसर्पन्ति॥

गर्भाधानप्रसङ्गे—

मूलं या लक्ष्मणायाः पिबति ऋतुमतीगर्भबद्धानुरागा
पुष्यार्कादिप्रसङ्गात् कथमपि विधिना साधकैः प्रापितायाः।
जीवद्वत्सैकवर्णोद्भवसुरभिपयःपेषितायास्तदानीं
रामानन्दप्रसङ्गाद् झटिति खलु भजत्येव बन्ध्यापि गर्भम्॥

अलमति विस्तरेण। साम्प्रतं हिन्दीभाषानिबद्धं किमपि प्रस्तूयते—

लाजी तजपत्रज त्रिकुटवंश विलोचन जानु
नागकेशरीसहित सब तोला तिन तिन मानु।
सब मिलाइके खाइए चूरनसुभग बनाइ
रामानन्द सुनासिका रुधिर थमा ह्वै जाइ॥

५. ज्योतिषम्—

अत्र विषये न कोऽपि ग्रन्थोऽलम्भि, परं काश्चन जन्मकुण्डल्यो लब्धाः। **शाहजहाँसम्राजो** जन्मकुण्डली एतदीयहस्तलिखिताऽपि लभ्यते, यस्यां **जन्मसमयस्तु—** १६४८ वैक्रमाब्दः, १५१३ शालिवाहनाब्दः, माघमासः, शुक्लप्रतिपद् बुधवारः

CC-0. Sampurnanand University Collection. Digitized by eGangotri

इत्युल्लिखितः। अत्र नाम—'खुरमसुलतान' इति वर्तते। ऐतिहासिकैर्गवेषणीयोऽयं विषयः। एतज्जन्मकुण्डलीस्तुतिर्यथा—

लोकानां सौख्यदात्री सुतजयजननी तुष्टिदायुःप्रदात्री
माङ्गल्योत्साहकर्त्री गतभवसदसत्कर्मणां व्यञ्जयित्री।
नानासम्पद्विधात्री धनकुलयशसां सर्वदा वर्द्धयित्री
रिष्टापद्विघ्नहन्त्री गुणगणवसतिर्लिख्यते जन्मपत्री॥

६. **निर्णयार्णवः**—ग्रन्थेऽत्र तिथिपर्वनिर्णयो यथाप्रमाणं सामान्येन कृतः। १७३५ सं० समुल्लेखो वर्तते। अपूर्णोऽयम्।

एवं शकुनशास्त्रीयोऽपि कश्चन निर्णयग्रन्थो लब्धः, परं खेदास्पदमेतत्, सोऽप्यपूर्णः। तदीयानि द्वित्राण्युदाहरणानि—

दन्तिस्तम्भगतो गजेन्द्रफलदो राज्यं हयस्थो गवां
लाभं धेनुगतो महोत्सवकरः स्यात् भूरुहे संस्थितः।
क्षेत्रे क्षेत्रफलप्रदः खरगतो रोगं मृतिं माहिषे
प्रासादेऽपि तथोन्नतिं प्रकुरुते ध्वाङ्क्षो ध्वजस्थो जयम्॥

अत्र प्रायः विंशतिः श्लोका लभ्यन्ते।

**७. वैदिककर्मकाण्डग्रन्थाः—**

विषयेऽत्र वहवः ग्रन्था लब्धाः। यथा—(१) विवाहपद्धतिः, (२) षोडशक्रियानुक्रमः, (३) आरामोत्सर्गः, (४) जलाशयोत्सर्गः, (५) वनोत्सर्गं इत्यादयः।

एषु षोडशक्रियानुक्रम एव पूर्णो लभ्यते, यस्यायमाद्यः श्लोकः—

नत्वा श्रीगणपं गुरुं ग्रहगणान् गौरीं गिरां देवतां
दिक्पालान् सकलान् समस्तकलशाधिष्ठातृदेवानपि।
रामानन्दकविः करोति कृतिनां मोदाय संक्षेपतो
रम्यं षोडशकर्मणा मृदुपदैस्तत्तत्क्रियानुक्रमम्॥

ग्रन्थेऽत्र कविना स्वपितामहयोर्नामनी अपि लिखिते—

विद्याविश्रुतविश्वनाथतनयः श्रीमान् सदाचारवित्
कस्तूरीतनयश्च यो 'मधुकरः' तस्यात्मजेन स्वयम्।
इत्येकादशवासरोचित इह व्यालोड्य तत्पद्धतिं
'रामानन्द'-मनीषिणा विरचितो नामक्रियानुक्रमः॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

एतद्विषये संक्षेपत एव दिग्दर्शनं विधाय विषयान्तरेषूपह्रियते किञ्चित्—

८. लिङ्गानुशासनम्—

एतन्नामकः कश्चन ग्रन्थोऽपि कोषविषयको व्यरचि, यतो हि अमरकोषस्य रामाश्रम्याख्यव्याख्या प्रतिलिपिः तदीयहस्तलिखिता आसीत् ? एष खल्वनुमाविषयो यत् तत्परिशिष्टरूपो ग्रन्थोऽयमारचितः । ग्रन्थोऽयं नोपलब्धः, परं तट्टीका खण्डिता ज्ञापयति—

नत्वा विश्वेश्वरं देवं स्वीयलिङ्गानुशासने ।
**रामानन्देन** विदुषा टीकेयं तन्यते शुभा ॥

९. छन्दः शास्त्रम्—छन्दोरत्नाकरः—

ग्रन्थोऽयं सज्जन इव सद्वृत्तः । एष खलु प्रतीतिविषयो यदत्र ग्रन्थे **वृत्तरत्नाकरतो**ऽपि प्रस्तारभेदा वर्धिताः, परमाप्रारम्भमासमाप्ति न पठित्वा किं नाम मया समीक्ष्यताम् । अदसीयं मङ्गलाचरणं यथा—

**नत्वा वाचमचिन्त्यशक्तिविलसत्सद्गद्यपद्यामृत-**
**प्रोन्मीलद्बहलप्रमोदजनने कल्पात्मिकां वीरुधम् ।**
**कुर्मोऽनेकमुनिप्रणीतविविधाँस्तत्तत्प्रबन्धानपि**
**व्यालोड्य प्रतिपत्तये कविगिरां रत्नाकरं छन्दसाम् ॥**

१०. तन्त्रशास्त्रम्—

विषयेऽत्र बद्धादरस्तत्रभवान् ग्रन्थकारः । आतश्च लिखितेषु तत्तद्ग्रन्थेषु तत्तत्तान्त्रिकमन्त्रा उद्धृताः ।

**विराड्विवरण**नामकग्रन्थेन सहापि **'श्यामास्तवराजः'** एकः प्रकाशितः, यत्र कालीमन्त्रा उद्धृताः ।

इदं किलानुश्रूयते—चरमे वयसि ग्रन्थकारैस्संन्यास आश्रितः । ततः परञ्च अधिकाशि उपलक्ष्मीकुण्डं कालीमठं संस्थापितवान्, यत्र भगवत्कालीमूर्तिरधुनापि विराराजीति ।

किञ्च—अधुना प्रतिहायनं भाद्रशुक्लपूर्णिमायां ( प्रौष्ठपद्याम् ) एतन्मठाध्यक्षा अस्मद्गृहमेत्य भिक्षां स्वीकुर्वन्ति । संन्यासतः परं स्वस्तोत्रेषु ग्रन्थकर्ता **'ज्ञानानन्दः'** इति नैजं नाम समुदलेखि ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

ईदृशस्तुतिषु—( क ) आद्यास्तवराजः ( ख ) श्यामास्तवराजः ( ग ) बगलामुखीस्तवराजश्च पूर्णा लभ्यन्ते । यदीयोऽयमाद्यःश्लोकः—

वामे षट्कोणवृत्ते बहिरपि चतुरस्रीकृतेऽर्ध्यामृतेनाऽ-
भ्युक्षाधारादिशक्तेर्यजनमिह महामण्डले तन्निधाय ।
रं वह्नेर्मण्डलायात्यपि च दशकलाद्यात्मनेऽर्च्या नमोऽन्तैः
कुम्भं फट्कारमूर्ध्वं तदुपरि वसनैर्भूषयेद् रक्तमाल्यैः ॥

विविधविधमनुपूरितोऽयं स्तवः चत्वारिंशता श्लोकैः पूर्णः । शार्दूलविक्रीडितं वृत्तम् ।

**११. आकाशवासिनीसपर्या—**

ग्रन्थस्यास्य चतुश्श्लोकात्मकमाद्यं पत्रं नोपलभ्यते । द्वितीयस्मात् चतुर्थं पृष्ठं यावल्लभ्यते । अदसीयोऽष्टात्रिंशत्तमः पूर्तिश्लोको यथा—

विचार्याचार्याणां निगमविहितं पद्धतिमतं
　　मुदे तत्तत्कौलव्रतनिरतकौलव्रतजुषाम् ।
इयं 'ज्ञानानन्द'द्विजवरनिबद्धात्मवचनैः
　　सपर्यापर्याप्तिं भृशमुपगताऽऽकाशवसतेः ॥

**१२. असितादिविद्यापद्धतिः ( सपर्वा )—**

ग्रन्थोऽयं तान्त्रिकदिशा विरचितः । अत्र त्रयोदश पत्राणि, अन्त्यमर्धपद्यं यथा—

भाद्रे संवति शोणिते गुहतिथौ कृष्णे बुधे वासरे
'ज्ञानानन्द'-मनोषिणा विरचिताऽगात्पद्धतिः पूर्णताम् ॥

'असितासपर्या' ग्रन्थोऽयं श्लोकबद्धः, एकादशपत्रात्मकः, एकपञ्चाशच्छ्लोकात्मक इति चानुमाविषयः ।

ग्रन्थस्यास्यान्ते पूर्वश्लोकोऽयं किमपि वैपरीत्यमाधत्ते—

विचार्याचार्याणां निगमविहितं पद्धतिमतं
　　मुदे तावत्तत्क्रमनिरतकौलव्रतजुषाम् ।
इयं 'ज्ञानानन्द'-द्विजवरनिबद्धात्मवचनैः
　　सपर्यापर्याप्तिं भृशमुपगते ह्यसिततनोः ॥

( संवत्—१७३९ भाद्रासितसप्तम्याम् )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**१३. कालरात्रिविधानम्—**

त्र्यधिकैकशतानुष्टुम्मयोऽयं ग्रन्थः १७३५ फाल्गुने शुक्ले तृतीयायां लिखितः। कुतश्चिच्चात्र ग्रन्थे तान्त्रिकपूजाविधिरपि सङ्गृहीतः।

**१४. गुह्यषोढाविवरणम्—**

ग्रन्थस्यास्यादिमत्रयोदशश्लोकेष्वेको यथा—

> **प्रातः पद्मासनस्थः शिरसि परिलसच्छ्रीसहस्राम्बुजान्तः**
> **प्रोन्मीलच्चन्द्रबिम्बस्थलगलविमलज्योतिजाग्रत्त्रिकोणम् ।**
> **हंसाख्ये तत्र पीठे वरमभयकरं रक्तशय्योपविष्टं**
> **शुक्लालङ्कारशुक्लाम्बरधरममलं श्रीगुरुम्भावयामि ॥**

श्लोकतः परं गद्येषु मन्त्रविवरणम्, समन्त्रकरन्यासः, अङ्गन्यासश्चेत्यादि विषया निरूपिताः।

## अथ साहित्यग्रन्थाः—

**१. रसिकजीवनम्—**

प्रकृतग्रन्थोऽयं नायिकाभेदविषयकः। अत्र **'रसमञ्जरी'** प्रभृत्युक्तदिशा दशविध-नायिकालक्षणानि सोदाहरणानि सन्ति। द्वितीयस्मिन् तरङ्गे नायकभेदा नायक-सहायकपीठमर्दादिप्रभृतयः सोदाहरणा निरूपिताः। तृतीयस्मिन् पुनस्तस्मिन् शृङ्गारनिरूपणम्, तुर्ये मानमानम्, पञ्चमे प्रवासनिरुक्तिः, षष्ठे विप्रलम्भशृङ्गार-निरुक्तिः, सप्तमे च हावभावादयो निरूपिताः। मूलग्रन्थे एकत्रिंशत् पत्राणि। तत्र भाषानुवादो मया (श्रीनारायणपतित्रिपाठिना) कृतः। अदसीयमङ्गलाचरणं तु पाठकैः ग्रन्थादौ द्रष्टव्यम्।

शृङ्गाररसमयोऽप्ययं ग्रन्थः कवितासरसतया नितरामास्वाद्यः। विटावतरणं यथा—

> **मरीचिरुचिसञ्चयैश्चपलचञ्चुकोटीभृतः**
> **समुल्लसति चन्द्रमाश्चपलयंश्चकोरानिह ।**
> **मरुच्चलति शीतलो रटति चञ्चरीकश्चिरं**
> **भविष्यति हि निश्चलस्तव स चण्डिमानः कथम् ॥**

ग्रन्थोऽयं प्रकाश्यमान एव, पाठकानां हस्तगतं राजते, आतश्च कृतं बहूदाहरणप्रयासैः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

ग्रन्थस्यास्यान्ते न हि निर्माणसंवत्प्रभृति वर्तते। कदाचित् इतोऽप्यग्रे किमपि ग्रन्थकर्त्तूं रचयितुमिच्छाऽऽसीत्, अन्यथा ग्रन्थान्तरेषु लघुषु पश्चाङ्कलेखको नाम कथमत्र तिथ्यादि नालिखत्। अस्तु नाम, साम्प्रतं विह्वतभाव उदाह्रियते—

**कन्दर्पोल्लासिलीलाविलसितबहलामोदसम्पद्विचित्रा**
**तिर्य्यक् सम्भाव्यनेत्राम्बुजमतिललितं वाचमाचम्य भर्त्तुः।**
**ह्रीगर्भां स्वामवस्थामवनतवदनच्छद्मना व्यञ्जयन्त्या-**
**स्तन्व्यास्तन्नात्र चित्रं विह्वतमपहरन्त्यन्तरं कस्य पुंसः॥**

**२. पद्यपीयूषम्—**

अष्टात्रिंशत्तमपत्रैः पूर्णोऽयं ग्रन्थः। एतदीयानि आदिमानि एकविंशतिः पत्राणि नोपलब्धानि, परं द्वाविंशत्तमपृष्ठे वृक्षान्योक्तयः, तत्र चन्दन-चम्पक-माकन्द-जम्बू-पनस-बन्धूक-बिल्व-नारिकेल-खर्जूर-बदरी-लवली-धात्री-उदुम्बर-शाल्मलि-पूग-निम्ब-वटप्रभृतयो वर्णिताः। ततः परं माध्वी-लवङ्गी-ताम्बूलवल्ली-प्रभृतिलतिकाः स्तुताः। ततो वायुवर्णनप्रस्तावोऽस्ति। ततो नवरसनिरूपणप्रस्तावः, ततोऽग्रे कीर्ति-प्रस्तावः, दानप्रस्तावः, विविधप्रस्तावः, राजसेवनप्रस्तावः, प्रकीर्णकप्रस्तावः, चित्र-काव्यप्रस्तावः, समस्यापूर्तिप्रस्तावश्च विलसन्ति।

ग्रन्थस्यास्य स्वल्पो रसास्वादो नितरामपेक्ष्य इति विचार्य सर्वे आम्रस्य एव रसमास्वादयन्तु—इति रसालपद्यमुदाह्रियते।

**रसाल किमचीकरत् किल भवानपूर्वं तपो**
**गुणप्रकरमीरितुं न खलु शक्यते मादृशैः।**
**यथा तव पचेलिमामृतफले रसः पीयते**
**तथा न तरुणीजनाधरसुधोद्भवा माधुरी॥**

ग्रन्थस्यास्यान्त्यः श्लोको ग्रन्थकर्तृपरिचयात्मको यथा—

**देशो यस्य वशिष्ठजोत्तरभवः शाण्डिल्यगोत्रं हि यत्**
**ख्याता यस्य कुले त्रिपाठिपदवी वृत्तिविशेनान्वयात्।**
**यत्तातः श्रुतिपारगो मधुकरो यस्यात्मजैर्निर्मितो**
**'रामानन्द'बुधैः सभासु[1] विदुषां पीयूषमास्तां मुदे॥**

---

१. 'सुमासु' इति मूलपाठः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**३. रामचरित्रम्--**

ग्रन्थेऽत्र वाल्मीकीयरामायणस्य उत्तरकाण्डीया कथा ललितपद्यैर्बद्धा 'दोहा-चौपाई' प्रभृतिहिन्दीच्छन्दस्सु ।

ग्रन्थोऽयं सीतावनवासावधिरुपलब्धः । अग्रेऽपि लिखितोऽयमिति प्रतीयते, परं न निश्चितम्; किन्तु सुन्दरकाण्डीयः कियांश्चिदंशः पृथग्लब्धः । स चेत्थं प्रतीयते—यत् **'तुलसीकृतरामायणम्'** खलु तदानीं नवीनमासीत्, तदाधृत्य काव्यमिदं रचितम् । तदुद्धृतिर्यथा—

**जलबुदबुदमखिलं जगद् गच्छत्यायुरिदं हि ।**
**'रामानन्द'-विवेकतो रामनाम सुखदं हि ॥**
**उत्तरचरितमिदं हि सच्छन्दोर्भिर्विविधं हि ।**
**प्रभवतु राममुदे सदा रामानन्दकृतं हि ॥**

अतःपरं रावणजन्मवर्णनं पठनीयम्, यद्धि त्रिभङ्गीच्छन्दस्युपनिबद्धं विलसति—

**भीषणदशवदनं भीषणरदनं भीषणविंशतिरोचनकं**
**भीषणभुजदण्डं रणभुविचण्डं रिपुखण्डनमरिभयजनकम् ।**
**रक्षःकुलपालं प्रकृतिकरालं भूपालं क्रव्यादकुले**
**रावणमतिगर्वं सततमखर्वं सा सुमालितनया सुषुवे ॥ १० ॥**

इदं हि खल्वेकं लघुकाव्यमेवासीत् । पद्यानि यस्य हृद्यान्यासन् । सर्गान्ते लिखितमेकं श्लोकमत्रोदाहरामि, येन कवेर्मनोगतभावा ज्ञातुं शक्यन्ते—

**काव्ये वाल्मीकिवद्धे यदिह विरचितं वर्त्मनैतेन बुद्ध्वा**
**तस्मादुद्धृत्य सारं निजमतिविभवाद्यद्धि लब्धं तु तस्मात् ।**
**नानाच्छन्दोवितानैः पठितुमवसरे पाटवैः सत्कवीनां**
**रामानन्दैर्निबद्धो भवतु रघुपतेः प्रीयते काव्यबन्धः ॥ ११ ॥**

काव्येऽस्मिन् प्रायः सर्गान्तिकथानां पुष्पिका किलेत्थं वर्णिता वर्तते—**"इत्युत्तर-गतरामचरित्रं वैदेहीवनगमनपवित्रम्"** इति ।

प्रसङ्गेऽत्र सुन्दरकाण्डस्य सौषम्यं विभावयन्तु सुधियः—

**यस्यां सीतार्थमुद्योगस्तरणं वारिधेरपि ।**
**लङ्कादाहादिकञ्चैव सौन्दरी सोच्यते कथा ॥ १ ॥**
**नश्वरमिदमिति तत्त्वतः संसार कलयन्ति ।**
**तदपि न हरिमिह तत्त्वतो 'रामानन्द'-भजन्ति ॥ ६ ॥**

CC-0. Sampurnanand University Collection. Digitized by eGangotri

उद्यल्लाङ्गूलदण्डः स्फुरदुरुरसनो भुग्नदंष्ट्राकरालः
पिङ्गाक्षस्ताम्रवक्त्रः परिघसमलसद्दीर्घदोर्दण्डचण्डः ।
विस्तारायामतो यत्तनुरपि दशकं योजनानां सत्रिंशद्
वेगात् सोऽयं हनूमान् विहगपतिरिव व्योममध्यं जगाहे ॥ ३ ॥

अथ विलङ्घ्य योजनशतमब्धिं पुनरपि कपिरभजत् तनुवृद्धिम् ।
तदनु लघुः शिथिलीकृतखेदे दशकन्धरनगरीमभिपेदे ॥
विविधविविधवनराजिविचित्रा नन्दनवनरचनेव पवित्रा ।
सरलासनकरवीरकदम्बा कुटजकेतकीचम्पकवृन्दा ॥
सप्तच्छदखर्जूरसमृद्धा सहसहकारपनसतरुविद्धा ।
कोटिकोटिरजनीचरजुष्टा कनकपुरी बहुतरसुखपुष्टा ॥

ब्रह्मास्त्रेण निबद्धच वायुतनयं नीत्वा दशास्यान्तिकं
पप्रच्छ स्वयमेव राक्षसपतिः कस्त्वं कुतः कस्य वा ।
सुग्रीवान् मिलनं हि बालिविजयं रामाङ्गनादर्शनं
वृक्षोत्पाटनमद्भुतं कथितवान् दूतत्वमव्याहतम् ॥

इत्यलं पल्लवितेन । अन्या अपि ललितरचना रसनीयाः सन्ति ।

**४. कटाक्षशतकम्—**

शतकमिदं नन्वष्टादशश्लोकावधि लब्धम् । रचना—

नीलाञ्जनोत्कटविषैर्विषमीकृतानि
तिग्माग्रमार्गणगणव्यथितान्तराणि ।
वामभ्रुवस्तदपि वाञ्छति हृत्सरोजं
हा हन्त सस्मितकटाक्षनिरीक्षितानि ॥

**५. धन्यशतकम्—**

अस्यापि त्रयोदशैव श्लोका उपलभ्यन्ते । अश्लीलतादोषग्रस्तोऽप्ययं वास्तविकं सम्भोगशृङ्गारं प्रकटयति । शतकेऽत्र प्रतिचतुर्थपादं समानमेवास्ति—

अव्यक्तामभ्यसन्तीमिव हि नहि नहीत्यादिकन्दर्पकक्षां
मा मा मामेति मामेत्यभिलपितलसत्कामसङ्ग्रामदक्षाम् ।
रामानन्दाननाब्जोत्कटभ्रुकुटितटाकुञ्चनां भावयन्तीं
धन्याः केचिद् भजन्ते निधुवनमुदिताः कामिनीं यामिनीषु ॥



CC-0. Sampurnanand University Collection. Digitized by eGangotri

**६. शशाङ्कशतकम्—**

अस्यापि केवलं पञ्चदशैव श्लोका लब्धाः । अत्र चन्द्रकलङ्क उत्प्रेक्षितः—

**विलसति हिमकरबिम्बं राजतमिव भाजनं पुरतः ।**
**शालग्रामशिलेयं मध्यगता लाञ्छनव्याजात् ॥**
**इन्दोरखण्डबिम्बं शिवलिङ्गं स्फाटिकं जयति ।**
**बिल्वीदलभरपूजितमिव रत्या लाञ्छनं भाति ॥**
**कामेनाम्बरभूमौ कन्दुक एषोऽम्बरे रन्तुम् ।**
**उच्छालित इति मन्ये गुम्फितोऽसितेन पट्टेन ॥**
**पायसपिण्डश्चन्द्रः तत्र कलङ्कस्तिलप्रक्षेपः ।**
**विष्णुपदे किल दत्तो रत्या कामस्य कान्ताय ॥**

अन्तिमः श्लोकोऽयमेकस्मिन् स्फुटपत्रे समुपलब्धः । अस्मिन् **'विष्णुपदशब्दो'** द्व्यर्थकः । एतद्भिन्नानि भूयांसि पद्यानि लब्धानि, किन्तु विस्तरभियाऽत्र नोपस्थाप्यन्ते ।

**७. हास्यसागरः**—लघुप्रहसनमिदम् ।

तत्र नान्दी यथा—

**उन्मीलत्पुण्डरीकप्रचुरतरपरीणाहकर्णान्तकान्ति-**
**र्नीलाम्भोजन्मकल्पाञ्जनरसविसरप्रोल्लसत्खञ्जनश्रीः ।**
**द्रष्टुं कान्ताननेन्दोर्द्युतिमतिचकितप्रेक्षितैरुल्लसन्ती**
**पार्वत्याः शर्महेतोः परिणयसमये कापि दृग्भङ्गिरास्ताम् ॥**

नान्द्यन्ते सूत्रधारः

**एतेषां पण्डितानां पटुतरकटुकव्यञ्जिकापञ्जिकास्तां**
**वाचालास्तावदेते दधतु जडधियो मूकतां वावदूकाः ।**
**गङ्गाकल्लोलकल्पाः सपदि सुकृतिनां सज्जनानां समाजे**
**'रामानन्द'–द्विजानां यदवधि सरसा वाग्विलासाः स्फुरन्ति ॥**

एतत्प्रतीयते यद्यदा 'औरङ्गजेवेन' काशिकमन्दिराणि भग्नानि, तदा खिन्न-खिन्नेन ग्रन्थकर्त्राऽभाणि—

CC-0. Sampurnanand University Collection. Digitized by eGangotri

हन्यन्ते निर्निमित्तं सकलसुरभयो निर्दयैर्म्लेच्छजातै-
दीर्यन्तेऽमी सदेवाः सकलसुमनसामालयाश्चातिदीर्घाः ।
पीड्यन्ते साधुलोकाः कठिनतरग्राहिभिः कामचारैः
प्रत्यूहैस्तैः क्रतूनां सभयमिव जगत् पामराणां कुमारैः ॥

यद्यपि दृश्यकाव्येषु ह्यभिनयोपयोगिन्यो वर्तमानकालिक्यः क्रियाः खलु क्रिया-समभिहारेण प्रयुज्यन्ते, तथाप्यधस्तनीये श्लोके तादृश्यः क्रियाः तात्कालिकीं घटनां ख्यापयितुं प्रयुक्ताः । पद्येऽस्मिन् कलियुगं नायकत्वेनोपस्थाप्य तस्य पुत्राणां विवाह उपवर्णितः । विवाहोपक्रमे गोत्रोच्चारादिका विधयो घटाटोपमय्यां भाषायां समुपवर्णिताः । भरतवाक्यमिदं विमृशन्तु काव्यरसिकाः—

आसारैः परिपूरयन्तु वसुधामेते महावारिदाः
कालेषु प्रतिवा-( वत् ) सरं फलवती शस्यैश्च पूर्णा मही ।
गावः कामदुघा भवन्तु सुधियस्सन्तु त्रयीनिर्भरा
राजानः परिपालयन्तु पृथिवीमानन्दसान्द्राः प्रजाः ॥

८. काशीकुतूहलम्—

ग्रन्थोऽयं विशालः, परं खण्डितः । नात आद्यन्तावुपलभ्येते । अत्र प्रकरणानि—

( १ ) पञ्चक्रोशकुतूहलम्, ( २ ) दानकुतूहलम्, ( ३ ) कालकुतूहलम्, ( ४ ) निर्धनकुतूहलम्, ( ५ ) सुवंशकुतूलहम्, ( ६ ) कुवंशकुतूहलम्, ( ७ ) सार्थककुतूहलम्, ( ८ ) अनर्थकुतूहलम्, ( ९ ) सारमेयकुतूहलम्, ( १० ) काककुतूहलम्, ( ११ ) क्रोडकुतूहलम्, ( १२ ) दुर्जनकुतूहलम्, ( १३ ) काणकुतूहलम्, ( १४ ) स्नेहकुतूहलम्, ( १५ ) मोहकुतूहलम्, ( १६ ) विप्रद्रोहकुतूहलम्, ( १७ ) जम्बुकद्रोहकुतूहलम् ।

कुतूहलानि कानिचिद् बृहन्ति लघूनि च कानिचित् । उदाहरणं यथा—

तत्रोचितनर्तनलीलौघं पश्यन्त्याकर्ण्य च वीणौघम् ।
नानातालध्वनिसङ्गीतं कुरुते जनचित्तं सुप्रीतम् ॥

पञ्चक्रोशकुतूहलत एतज्ज्ञायते यदद्यावधिफाल्गुनशुक्लद्वितीयायां जायमानायां देवयात्रायां गानमण्डली, लीलामण्डली च भवतः स्म ।

शङ्का यत्र न संस्कृतेस्त्रिजगतां रङ्कायते चान्तकः
कालव्यालविशालभीतिरहिता यत्रोद्भवा जन्तवः ।
नैशो यत्र कलिः कदापि कलुषव्यापारदीक्षाविधौ
सेयं किन्न निषेव्यते भगवतो भर्गस्य काशीपुरी ? ॥१॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

भवतु—साम्प्रतं 'दानकुतूहलस्य' अथ 'कालकुतूहलस्य' च रसास्वादनं सापेक्षमत्र—

दानकुतूहलम्—

इदमेव खलु भवसागरे करणीयमस्ति चिरेण।
पिब भुङ्क्ष्व देहि गृहाण भोः कर्मणेह परेण ॥३॥
धनमेव दाननिदानमत्र ददाति नो कृपणस्तु।
इति वक्ति 'रामानन्द'-गीरयमेव पापनरोऽस्तु ॥४॥

कालकुतूहलम्—

येषु येषु विषयेषु ममत्वं तेषु तेषु नश्वरमिति तत्त्वम्।
यदि नश्वरमिदमखिलमखण्डं भज हरिमिह भवतरणतरण्डम् ॥२॥
प्राणतत्त्वमिह यस्य हि वश्यं तस्य योगफलमखिलमवश्यम्।
कुण्डलिनीचालनमतिधीरः प्रभवति भुवने सुभगशरीरः ॥७॥
कालकुतूहलमष्टकसारं गुरुमुखतः कलयति भवपारम्।
रक्षति जन्मजराभयभीतं 'रामानन्द'—मनीषिविगीतम् ॥९॥

अस्तु नाम—अन्यान्यपि कुतूहलानि खल्वेवंविधान्येव मनोरञ्जकानि सन्ति, किन्तु प्रस्तारकारणान्नेहोपन्यस्यन्ते।

९. किरातभावदीपिका—

किरातार्जुनीयमहाकाव्यस्य टीकेयम्। ग्रन्थोऽयं प्रायः किरातार्जुनीयेन साम्यं भजते। नास्यादिरुपलभ्यते। एतदन्तो यथा—

मूलार्थैकनिबन्धना सहृदयानन्दैकसन्दोहदा
मन्दारद्रुममालिकेन सुखदा सर्वार्थदा सर्वदा।
'रामानन्द'-विनिर्मिता कतिपयैर्गूढैरगूढीकृता
सेयं भारविसूरिकाव्यविवृतिर्भूयात् सतां प्रीतये ॥

१०. काव्यप्रकाशप्राकृतार्थः—

ग्रन्थेऽत्र काव्यप्रकाशीयं प्रत्युल्लासं प्राकृतपद्यानि संस्कृतानि। ग्रन्थोऽयं कृत्स्न आप्तः। मङ्गलाचरणं यथा—

CC-0. Sampurnanand University Collection. Digitized by eGangotri

गलन्मदलसद्गण्डमिलन्मैलिन्दमेदुरम् ।
वेतण्डतुण्डमानन्दकन्दं वन्दे शिवात्मजम् ॥
काव्यप्रकाशिकागूढप्राकृतार्थविवेचनम् ।
'रामानन्देन' कविना गुरुं नत्वा वितन्यते ॥

**अत्र किञ्चित्--**

चत्वारिंशद् वर्षाणि यावद् फलाहारं कुर्वन् गायत्रीपुरश्चरणकर्ता, सरयूपारस्थ-गोरक्षपुरीयमझौलीराजगुरुः पण्डितश्रीमहादेवदत्तमिश्र उक्तवान्, यत्, एष एव श्रीरामानन्दमहाशयः सन्न्यस्य स्कान्दकाशीखण्डस्य संस्कृतव्याख्यां लिलेख, याऽद्यापि प्रसिद्धा । परं तदज्ञानवशाद् मया ( श्रीनारायणपतित्रिपाठिना ) स्वीयकाशीखण्डीय-भाषाटीकाभूमिकायाम् १९६५तमे खैस्ताब्दे मुम्बापुरीस्थश्रीवेङ्कटेश्वरप्रेसप्रकाशितायां किलेदमुदलेखि—**'यतीन्द्ररामानन्दस्वामी'** इति ।

एतन्न ज्ञायते—यदयमेव रामानन्दीयसम्प्रदायसंस्थापकः **'कबीरदासगुरुः'** पञ्चगङ्गाघट्टस्थपाषाणफलके पूजितचरणपादुकः सोऽन्यो वा ? परमस्मत्पूर्वपुरुषेण लिखितमिति सन्देहास्पदमेव । प्रमाणाभावाद् वयमत्र किमपि वक्तुमसमर्थाः ।

साम्प्रतमत्र कवयितुर्हिन्दीपद्यान्युद्ध्रियन्ते, यतो हि तान्यत्र प्रासङ्गिकानि; हिन्दीभाषामयत्वात् —

रामानन्द पी को एक कुहुक सतावै पिको
कुहुक सतावै पिको कुहुक निकेत है।
कानन भनक भोर कानन भनक भोर
कानन भनक भोर हू न कोउ देत है।
कंज विकसेरी हिय कंज कैसे विकसै री
विकसै विपिन क्यों विपिन को निकेत है।
चित्तमें न चेत भई ऐसी हौं अचेत आली
हरि चले चेत मेरो हरि चले चेत है ॥१।
गरद मिलायो दई गरद मिलायो दई
गरद मिलायो तऊ चन्द न छपत है।
पंचवान ही को लागे पंचवान ही को दूजे
पंचवान ही को पिक पंचम जपत है॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

नलिनी सलिल बिन जैसी मुरझानी सखि
तैसी मुरझानी मन मीन सौ चपत है।
रामानन्द कवि जैसे ग्रीषम तपत तैसे
पीय विन आली विरहानल तपत है॥२॥
रामानन्द आइबे की गरज नहीं धों उत
गरज नहीं धों इत गरज जनाए है।
चंचल चलाए पै न चंचल चलाए पिअ ( य )
चंचल चलाए चित चंचल चलाए हैं।
चातक कसाई बैन पिअ के सुनाये पै न
पिअ के सुनाए बैन पिअ के सुनाये हैं।
मोर मतवारे पै न पिअ मतवारे आये
घनस्याम आये पै न घनश्याम आये हैं॥३॥
विरह झकोरी मन नेकऊ न उझकोरी
औचक चकोरी बैन विष सी सुनाई है।
वाज आयो जिअ कैसे करि जीतिए री जिअ
रामानन्द चंद जिअ जारत जुह्लाई है॥
चंचरीक चंचलरी देखि चित चंचल री
कियो चित चंचलरी तैहूँ चंचलाई है।
विरह सरदही में विरहसर दही में
विरह दरदको सरद देन आई है॥४॥
भावे न तुसार जामे पुहुमी तुसार जामे
पौनऊ तुसार बहै हिम को मजूस है।
बिरह दहन को तुसार न बुझावै सखि
विरह दहन जीअ भयो आबनूस है॥
रामानन्द कवि पिअ दीपक पनूस है
मेरी मूरति पनूस मेरे पिअ को पनूस है।
सुखी दुखी लोगनि को सुख दुख जानिबे को
आली यह पूस हिम रितु को जसूस है॥५॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

बिकसे सरोज पै न बिकसै री ही सरोज
ही सरोज करै चित चन्दसों चकोरी के।
सुदिन मनाए औधिके सुदिन मन आए
सुदिन सुनाए पिक पंचम ठगोरी के॥
विविध सुगन्ध चीर 'रामानन्द' दम्पती सरीर
मंडन करत मुख लै अबीर झोरी के।
प्रीतम न मेरे आइबे की प्रीतम की
मेरे प्रीत मन आए सखि आए दिन होरी के॥६।

अपराऽपि खण्डितैका पुस्तिका समासादिता, यस्यां दशपद्यान्येवोपलभ्यन्ते, येषु शृङ्गाररस एव शृङ्गारितः। तद्यथा—

अजहूँ लौं वह कामकेलि अलसानी वाल
ऐसी छबि जाकी निसु दिन उर ठानिये।
जाके पीत वरन कपोल के ऊपर छूटे
अलक समूह भोंर भार से बखानिये॥
प्रकट कलुष हिअ गोपन करत ऐसी
चपल चकित चित चित्त में समाइये।
परम प्रचण्ड पंचवान वान पावक सों
विकल सरीर 'रामानन्द' मनभाइये॥

अधुना खलु शान्तरसमयानि कानिचित् भाषापद्यान्यास्वादयन्तु रसज्ञाः—

हंसा काहू जात न जानो!
यह तन मानस ललित केलि तजि औचक कियो पयानो।
देखत मात-पिता परिजन सब तिनको कछु न बसानो॥
आइ नगरवासी भाई सब पलक एक पछितानो।
कहँ धों रह्यो कहाँ लों आयो फिरि धों कहाँ समानो॥
'रामानन्द' अमर यह खेचर छन में भयो विरानो॥१।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

साधो यह जग भरम भुलानो ।

मात–पिता वनिता सुत संपति विषम विषय लपटानो ।
मैं मेरो अभिमान मोह बस माया रस बौरानों ॥
नहि सूझै परमारथ को पथ निज सारथ अरुझानो ।
'रामानन्द' नन्द नन्दन तजि सेवत चरन विरानो ॥२।

**'पद्यपीयूष'**—ग्रन्थान्ते कविना **'वृत्तिर्विशेनान्वयात्'** इत्यलेखि । एतज्ज्ञायते यत्-सरयूपारस्थगोरक्षपुरीयविशेनकुलतिलकमझवलीराजबोधमल्लस्य सभायां पण्डितैः शास्त्रार्थः कृतः । एतत्तत्प्रहितपत्रतो गम्यते । तदानीं यावत् **'पिण्डी'** ग्रामेण सहसम्पर्क आसीत्, यतः कवयितुः प्रपितामहो **'दिवाकरत्रिपाठी'** विद्याध्ययनाय काशीमागतवान्, अन्नपूर्णाकृपया चाधिकाश्येव उवास, विश्वनाथकृपया च स्वपुत्रस्य नामापि **'विश्वनाथ'** इति चक्रे । एतत्सर्वं **'षोडशक्रियानुक्रम'** ग्रन्थे वर्तते ।

सम्प्रति यथाप्रसङ्गं राजस्तुतिः लिख्यते—

वीर श्रीबोधमल्ल स्फुरति तव करे नीलवर्णासिवल्ली
निर्णीता सा भुजङ्गी सकलकविजनैः प्रोल्लसद्वाग्विलासैः ।
रामानन्दद्विजातेर्मनसि निविशते कापि शङ्का निसर्गात्
तद्दष्टारातिवर्गः कलयति भुवने मुक्तिमेतद्विचित्रम् ॥

अथ प्रश्नोत्तरात्मकः कश्चिच्छ्लोकः—

आस्ते नूनं गतिश्चेत् कथयतु कुशली भूतले नास्ति कुम्भः
कुत्र स्यादन्वयोऽस्य प्रथम इह पुनः कारके प्रश्न एषः ।
आख्याते कुत्र शक्तिर्भवति वदतु मामुत्तरं चेल्लकारे
बुद्धिर्वादे दृढा चेदथ भजतु पदं सादरं मन्दतायाः ॥

अत्रापि केचन स्फुटप्रश्नात्मकाः श्लोका अवलोकयन्तु—

के युष्मद् गुरवः किमस्त्यपि कुलं कः स्यात् प्रसङ्गोऽपि ते
तेषामध्ययनं किमस्ति भवता किं तत्र वाऽधीयते ।
अन्तेवासिजनाश्च कत्यपि पुनस्त्वय्यस्ति तेषां दया
रामानन्दमनीषिणस्त्वमधुना प्रब्रूहि प्रश्नोत्तरम् ॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

सच्छिष्येण निजाभिमानशमनं कृत्वाऽऽत्मना वाङ्मन-
स्कायैरीश्वरभावना कुशलिना सुश्रूषितव्यो गुरुः।
तत्कारुण्यकटाक्षकल्पितमतिः शास्त्रेषु वागीश्वरो
रामानन्दमते भवत्यनुदिनं चेत् प्रीतिरुज्जृम्भते॥

तदनु अपरोऽप्येकः प्रश्नात्मकः श्लोको दृग्गोचरी कुर्वन्तु काव्यकलामर्मज्ञाः। तथा च—

का श्लाघा विदुषां धरावनकृते को वा कृतो वेधसा
सम्बोध्यो नृजनः कथं किमिह वा पुर्य्याः पदं वाचकम्।
किं स्यादत्र विपूर्वकस्य सुकवे ! कल्पस्य बोधेऽव्ययं
दाक्षीपुत्रमुनिप्रणीतमहितात् सूत्राद् वदाशूत्तरम्॥

अधुना खलु यतिस्तुतिमयानि हृद्यानि पद्यानि विभावयन्तु—

पत्रं वागीशभारतीयोग्यम्—

स्वस्तिश्रीभारतीनां प्रभवति भवती भारती यस्य कण्ठे
नावद्यागद्यपद्यापटुचटुलपदैर्हृद्यविद्याविनोदैः।
वाचामीशे मुनीशे यमनियमसदाचारनिष्ठावशिष्ठे
रामानन्दस्य तस्मिन्नखिलगुणगुरौ स्यात् सहस्रं नतीनाम्॥ १।

कारुण्याद्वैतभावादिह कुशलमथ श्रीमतान्तन्नितान्त-
स्वान्ते सम्भावयामो वयमहह ! सदोदन्तचिन्ताभिपन्नाः।
संसारावर्तगर्त्ते सपदि सुखधिया दुःखमूले रटन्त-
स्तिष्ठामः कोऽभिजाने विधिकृतमधुना वश्यभाव्यं किमास्ते॥ २।

कामं विन्दन् मरन्दं बहलपरिमलोल्लाससंयातरङ्गो
दैवादम्भोजगर्भादुपरि परिणतश्चेतसा बद्धसङ्गः।
अस्मिन्नेवान्तराले हरिहरिदुरितोद्रेकझञ्झानिलेन
प्रोद्धूतः क्वापि यत्र प्रभवति नलिनं वीक्षितुं नापि भृङ्गाः॥ ३।

एवंविधाः स्फुटाः श्लोका यत्र तत्र प्रकीर्णरूपेणोपलभ्यन्ते। तेषां सर्वेषां रसास्वादनं तु पृथक् पुस्तकाकाररूपेण कर्तुं पार्य्यते। महाकविना ह्यनेन बह्व्यः भाषाकिंवदन्तयोऽपि श्लोकबद्धाः कृताः। यथा—'कौआ नाक ले गयो' सदृशी किंवदन्ती तु



CC-0. Sampurnanand University Collection. Digitized by eGangotri

साम्प्रतमपि व्यवहारपथमवतरति। इमास्तदानीमपि व्यवह्रियमाणा आसन्। अत एव महाकविनाऽनेन श्लोकबद्धाः पर्यवसिताः। तद्यथा—

**छिन्ना नासा वायसेन प्रमादादित्थं मोदात् केनचित् कश्चिदुक्तः।**
**मूढः कश्चिद् वायसान् धावमानो नासां स्वीयां न स्पृशत्यल्पबुद्धिः॥**

अग्रे एकं सटीकं मूलमपि पश्यन्तु सुधियः—

**नीतो बाह्यं केनचिद् ब्राह्मणेन नागो दावादंशुकान्तर्विलेन।**
**दष्टुं धावन् मन्दधीरात्मदोषाद् रामा-(ज्ञाना) नन्द ! स्यात् खले न प्रतीतिः॥**
**दावानल सों काढ़ि कै उरग उबारचो जाहि।**
**ताहि डँसै जौं उरग खल 'नन्द' पुकारिअ काहि॥ २॥**

इमानि खलु तत्तद् ग्रन्थेभ्य उद्धृतानि ललितपद्यानि स्तोत्राणि च पं० रामानन्दकवेर्महाकवित्वख्यापने स्वतो निदर्शनानि। न ह्यत्र प्रमाणान्तरस्यापेक्षा वर्वर्ति।

तदेवं संक्षिप्य सर्वमुक्त्वा साम्प्रतं कविवंशः प्रस्तूयते—

अकबरसम्राजः प्रायः राज्यसमकाले अस्मत्पूर्वपुरुषो **दिवाकरत्रिपाठी** विद्यां अध्येतुं **काशीमाजगाम**। स खलु ज्यौतिषज्ञो बभूव, तत्पुत्रो **विश्वनाथत्रिपाठी** बभूव, यत्कृतो ग्रहलाघवतिलकग्रन्थो वर्तते। तत्पुत्रो **मधुकरत्रिपाठी** आसीत्। यज्ज्येष्ठात्मजो **रामानन्दत्रिपाठी**, कनिष्ठसुनः **परमानन्दत्रिपाठी**। तत्र रामानन्दीयमितिवृत्तं यथाज्ञानमुपर्यलेखि। कनिष्ठस्य परमानन्दत्रिपाठिनः पुत्रः **पं० सूर्यमणित्रिपाठी**। स खलु नितरां धर्मनिष्ठस्तपस्व्यासीदिति श्रूयते। तत्पुत्रः **सनाथत्रिपाठी**, तदीय वैदुषीप्रभाविता **राजकुमारक्षत्रपतिसिंहः**, तत्पुत्रो **देशपतिसिंहः**, अन्ये च भूस्वामिनः शिष्यतां गृहीत्वा ग्रामान् भूमींश्च ददौ। ता भूमयोऽद्यावधि अस्मत्पार्श्वे आसन्। तत्पुत्रो **गणपतित्रिपाठी**। एतत्कृत एकशिवालयो लक्सावक्षेत्रे वर्तते।

## अस्य पुत्रत्रयी

गङ्गाप्रसादत्रिपाठी, दुर्गाप्रसादत्रिपाठी, अयोध्याप्रसादत्रिपाठी। एषु आद्यावनपत्यौ दिवंययौ। अन्त्योऽयोध्याप्रसादत्रिपाठी महाविद्वान् आङ्ग्लपारस्यभाषयोश्चाधीती। एष खल्वादौ ब्रिटिशशासनेन न्यायालयपण्डितीकृत्य पटनां प्रेषितः। तत्र क्रमेण उन्नतिं कृत्वा। 'मुंसिफो' बभूव-तदनन्तरं च सदरसदूर-(सदराल)पदं प्राप्तवान्। एष प्रकाममुपार्ज्य ग्रामान् क्रीतवान्। ततो निवृत्य षण्मासान् काशीं समुष्य

CC-0. Sampurnanand University Collection. Digitized by eGangotri

गृहसन्निधौ विशालं शिवालयं प्रतिष्ठाप्य कार्तिकवदिनवम्यां मणिकर्णिकायां प्राणायामं कुर्वन् तनुं जहौ ।

## अदसीयाऽपि पुत्रत्रयी

**चन्द्रशेखरत्रिपाठी** अग्रजः । मध्यमो मम (नारायणपतित्रिपाठिनः) पिता **रमापतित्रिपाठी ।** अनेन एकं विशालं श्रीलक्ष्मीगोपालयोः मन्दिरं प्रतिष्ठाप्य देवाः प्रतिष्ठापिताः । कनिष्ठः **श्रीचन्द्रपतित्रिपाठी ।** चन्द्रशेखरत्रिपाठी काश्यां श्रेष्ठः पण्डित आसीत् ।

तात्कालिकः काशिराजो महाराजश्रीमदीश्वरीनारायणसिंहदेवः (G. C. S. I.) तदीयो भक्त आसीत् । स्वयमागत्य तद्दर्शनं विदधाति स्म ।

महाराजश्रीकाशीनरेशाज्ञयाऽनेन काष्ठजिह्वस्वामिकृतशिवचरणपरिचर्याग्रन्थस्य टीका कृता ।

अनेन शारीरकसूत्रवृत्ति-परिभाषेन्दुशेखरविचार-श्लोकबद्धाष्टाध्यायी-पूजापुष्करिणी-रामकथा-मत्स्यपुराणटीकाप्रभृतिग्रन्थाः रचिताः । पूजापुष्करिणीग्रन्थादेव गणेशसूर्यविष्णुगङ्गाविश्वनाथस्तुतीः सङ्गृह्य 'पञ्चदेवस्तवाः' इति नाम्ना पञ्च स्तोत्राणि १९४४ तमे खैस्ताब्दे प्रकाश्य पण्डितसभासु स्मृतिरूपेण वितरितानि ।

नास्य पुत्र आसीत् । द्वे कन्ये आस्ताम् । कनिष्ठपितृव्यश्चन्द्रपतित्रिपाठी तु निरपत्य एव शिवरात्रिं समुपोष्य रात्रौ शिवसायुज्यमवाप ।

अस्मत्तातपादानां तदुपरि महान् स्नेह आसीत् ।

वयं खलु चत्वारो भ्रातरः द्वे भगिन्यौ चेति षट् सहोदराः स्मः । एषु अहमेवावशिष्टः ।

अस्मद् ज्येष्ठभ्रातुर्**लक्ष्मीपतेः** कनिष्ठभ्रातुः **उमापतेश्च** दिवंगते सति मम पितुरवस्था जर्जरिता सञ्जाता । १९४८ तमे वैक्रमाब्दे यदा मम ज्येष्ठभ्रातुर्विद्यापतेरवस्थाऽष्टाविंशद्वर्षीयाऽथ च ममावस्था सप्तदशवर्षीयाऽऽसीत्, तदा पिता महाप्रयाणं कृतवान् । तदनु पति-पुत्रवियोगदुःखसन्तप्ताया मातुः शारीरिकी मानसिकी च खिन्नता उत्तरोत्तरं वृद्धिं गता । अस्मिन्नेव काले मम गृहे प्रथमपुत्ररत्नस्य प्रादुर्भावोऽभूत्, यस्य संज्ञा **'काशीपतिः'** इति प्रसिद्धा ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

एवंविधे पर्यवसिते काले १९५२ तमे वैक्रमाब्दे पौषशुक्लदशम्यां भगवन्नाम स्मरन्ती माताऽपि असारं संसारं विहाय स्वर्जगाम। मातृ-पितृविहीनः स चाहं नानाविध-गृहकार्यव्यासक्तः सन्नपि यथामतिर्यथावकाशं चाशरणशरणायाः मातुः शारदायाः शुश्रूषां नाजहाम्। अत एव अधस्तनानां ग्रन्थानां प्रणयेन क्षमोऽभवम्—

१. **रससर्वस्वम्**—ग्रन्थेस्मिन् सलक्षणोदाहरणाः सर्वे विषया प्रकरणशः संस्कृतभाषायां संगृह्य लिखिताः। (प्रकाशनतिथिः, आषाढकृष्णदशम्याम्, मङ्गलवासरे, १९५२ तमे वैक्रमाब्दे)।

२. **काशीखण्डः**—ग्रन्थोऽयं १९६५ तमे वैक्रमाब्दे श्रीव्यंकटेश्वरप्रेसमुम्बापुरीतः प्रकाशितः। भाषा-टीकायुतोऽयं ग्रन्थः कैलाशवासीकाशीनरेशप्रभुनारायणसिंहजू-देवाय समर्पितः।

३. **वाराणसीमाहात्म्यम्**—पुस्तकमिदं कूर्मपुराणस्य पञ्चाध्यायीरूपम्। भाषाटीका-विभूषितमिदमपि श्रीव्यंकटेश्वरमुद्रणालयतः प्रकाशितम्।

४. **महिम्नस्तोत्रपञ्चमुखीटीका**—ग्रन्थस्यास्योल्लेखः प्राक् सञ्जातः।

५. **नीतिदृष्टान्तमाला**—अष्टोत्तरशतश्लोकपरिमितः संस्कृतमूलहिन्दीछायासहितोऽयं ग्रन्थोऽप्रकाशित एव।

६. **श्रीविश्वनाथशतकम्**, ७. **श्रीगङ्गाशतकम्**, ८. **श्रीकाशीशतकम्**—शतकेष्वेतेषु पञ्चशतश्लोकाः समाविष्टाः। एतान्यप्रकाशितान्येव।

९. **शृङ्गारतिलकतिलकम्**—विश्वविश्रुतस्य महाकविकालिदासविरचितस्य शृङ्गार-तिलकाख्यस्य खण्डकाव्यस्य प्रकाशनं मम भाषापद्यतिलकेन सहितं काशीस्थलहरी-मुद्रणालये जातम्।

१०. **स्तोत्रपञ्चरत्नम्**—मम हिन्दीभाषापद्यानुवादसहितानि श्रीमच्छङ्कराचार्य-प्रणीतानि पञ्चस्तोत्राणि—अपराधक्षमापन—द्वादशपञ्जरिका—चर्पटपञ्जरिका-पञ्चरत्नमालिका—पञ्चाक्षरस्तोत्रञ्च—१९६५ तमे वैक्रमाब्दे लहरीमुद्रणालयत एव प्रकाशितानि।

११. **वसन्तलता**—सामाजिक उपन्यासोऽयं वङ्गभाषातोऽनूद्यलहरीमुद्रणालयत एव प्रकाशितः।

१२. **भूकम्पकाव्यम्**—काव्येऽस्मिन् मौनी अमावास्यातिथौ, १९९१ तमे वैक्रमाब्दे (खैस्ताब्दतिथिः-१५-१-१९३४ ई०) भारतराष्ट्रे घटितस्य प्रचण्डभूकम्पस्य

CC-0. Sampurnanand University Collection. Digitized by eGangotri

संस्कृतश्लोकेषु वर्णनं [वरीवर्ति। अस्य काव्यस्य क्रमशः प्रकाशनं तदानीन्तने संस्कृतपाक्षिकपत्रे 'सुप्रभातम्' इत्याख्ये समभूत्।

एतत्सम्पूर्णं विवरणं नवत्युत्तरैकोनविंशतिशततमे वैक्रमाब्दे श्रीमन्नारायण-पतित्रिपाठिना प्रकाशिते **'विराड्विवरणाख्य'** ग्रन्थे कविकुलकथाशीर्षके हिन्दीभाषायां मुद्रितं वर्तते। समस्तस्यास्य विवरणस्य लेखकः—पं० त्रिपाठिनारायणपतिः।

मया किल **'रसिकजीवनम्'** नामकं ग्रन्थं सम्पादयता ग्रन्थकर्तुर्व्यक्तित्व-कृतित्वपरिचयस्तत एव सङ्कलय्यात्र विदुषां प्रमोदायोपनिबद्धः। संस्कृतभाषायां नायिकाभेदविषयविकासविवरणञ्च संक्षेपतस्तत्तद्ग्रन्थान् आलोड्य रसिकजीवन-प्रस्तावनारूपेणाहं खल्वत्र सङ्कलितवान्। ग्रन्थस्यास्य सम्पादनप्रसङ्गे सम्पूर्णानन्द-संस्कृतविश्वविद्यालयस्य कुलसचिवः **श्रीविश्वम्भरनाथत्रिपाठी**—व्याकरणविभागाचार्यो डॉ० कालिकाप्रसादशुक्लः—साहित्यविभागप्राध्यापकाः **श्रीवायुनन्दनपाण्डेयमहोदयाश्च** विशेषतो धन्यवादार्हाः, येषां हि नाम सम्पादनौपयिकं साहाय्यं बहुमूल्यमासीत्। एवमेव **श्रीमनुदेवभट्टाचार्य**-डॉ० हरिश्चन्द्रमणित्रिपाठिभ्यां चातीव श्रमेणानुवादकार्ये यद्यत् साहाय्यं विहितम्, तदर्थं तावप्याशीर्वादार्हौ। मुद्रणसौष्ठवसंवर्धनविधौ तारायन्त्रालय-सञ्चालकेन **श्रीरमाशङ्करपण्ड्या**महोदयेनापि समये समये महत्साहाय्यं कृतम्—तदर्थं तेऽपि धन्यवादार्हाः।

ग्रन्थेऽस्मिन् याः काश्चन त्रुटयस्ता मदीया इति मत्वा विद्वद्भिः क्षन्तव्योऽयं जनः।

अन्ते चाशास्यते यदयं ग्रन्थः साहित्यशास्त्रमर्मवेदिनां काव्यकलाकुशलानां सहृदयमनीषिणां मानसोल्लासाय कल्प्यत इति शिवम्।

**वाराणस्याम्**
माघशुक्लवसन्तपञ्चमो,
२०३४ तमे वैक्रमाब्दे।

**विदुषां वशंवदः**
**करुणापतित्रिपाठी**
कुलपतिः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

CC-0. Sampurnanand University Collection. Digitized by eGangotri

श्रीशौ वन्दे

पण्डितरामानन्दपतित्रिपाठिविरचितं

# रसिकजीवनम्

## प्रथमस्तरङ्गः

गङ्गाम्भोविन्दुरिङ्गत्पटुतरलहरीलास्यलीलाभिरिन्दोः
सन्दोहैश्चन्द्रिकाणां किमपि सपुलकं सान्द्रमुद्दीपितस्य ।
कान्तायाः कान्तकण्ठस्थलवहलभुजाश्लेषमुग्धाविलासाः
कल्याणं वर्द्धयन्तां प्रियसुखवसतेरर्द्धनारीश्वरस्य ॥ १ ॥
( स्रग्धरा )

साहित्यार्णवमन्थनेन हि मया स्वीयप्रवन्धे शुभे
कुम्भे किन्तु नवे समुद्धृतमहो प्रज्ञावतां प्रीतये ।
दृप्यद्दानवदुर्जनैरसुलभं भो निर्ज्जराः सज्जना
रामानन्दकवेस्तदेतदनिशं काव्यामृतं पीयताम् ॥ २ ॥
( शार्दूलविक्रीडितम् )

विधाय वहुवन्दनं गजमुखाय विघ्नच्छिदे
शिवाय पदपङ्कजं हृदि निधाय लक्ष्मीपतेः ।
तदेतदतिसुन्दरं मधुकरात्मजेन स्वयं
रसज्ञजनहेतवे रसिकजीवनं तन्यते ॥ ३ ॥

विवेकविकलाः खलास्त इह दुर्बलाः प्रायशो
मदीयरचनारसार्णवमहो तरीतुं पुनः ।
भवन्ति यदि सज्जनाः कतिपये मनोरञ्जना-
स्तदेतदवगाहितुं रसिकजीवनं ते क्षमाः ॥ ४ ॥
( पृथ्वी )

सर्वेषामपि सम्मतोऽयमिति यत् साहित्यविद्याविदां
शृङ्गारो रसनायकः खलु ततस्तस्यैव हेतोरिह ।
अस्यालम्वनकारणे प्रथमतः प्रायस्तरङ्गद्वये
तन्येते रसिकप्रमोदजनकेऽस्मिन् नायिकानायकौ[४] ॥ ५ ॥
( शार्दूलविक्रीडितम् )

---

१. भ्रम्नैर्याणां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्—इति तल्लक्षणम् ।
२. सूर्याश्वैर्मसजस्तताः स गुरवः शार्दूलविक्रीडितम्—इति तल्लणम् ।
३. जसौ जससूला गुरु — इति तल्लल्लणम् ।
४. "स्थूलसूक्ष्मन्यायेन ( स्थूलारुन्धतीन्यायेन ) नायिकैत्र प्रथमं तरङ्गे मया—इति पाठान्तरम् । :निरूप्यत इत्यर्थः" ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

स्वीया च परकीया च सामान्यवनिता तथा ।
कलाकलापकुशलाः तिस्रस्तस्येह नायिकाः ॥ ६ ॥

स्वस्वामिपरिचर्य्या च शीलसंरक्षणं तथा ।
आर्जवं च क्षमा चेति स्वीयायाः कथिता गुणाः ॥ ७ ॥

**स्वीया यथा[1]—**

सदा यासां चेतः स्वपतिपरिचर्य्यैकरसिकं
सलीलं प्रोन्मीलद् विधुवहलशीलं विलसति ।
क्षमैकप्राचुर्यं शमिन इव शस्तार्जवमहो
कुलस्त्रीणामेतत् किमपि खल चित्रं व्रतमिदम् ॥ ८ ॥
( शिखरिणी )

मुग्धा मध्या प्रगल्भा च स्वकीया त्रिविधा मता ।
मुग्धा ह्रियान्विता मन्ये मृद्वी चालङ्कृतिप्रिया ॥ ९ ॥

**मुग्धा यथा[2]—**

लज्जोल्लासितनेत्रवल्लिविलसद्भ्रूवल्लरीपल्लव-
श्रीसन्दोहसमुद्भवत्सुखसुधाकल्लोलकल्लोलिनी ।
मध्यस्निग्धमुरस्थलोद्धृतरुचिव्याकृष्टचित्ता भृशं
धूलीकेलिविनोदमग्नहृदया मुग्धा वधूः क्रीडति ॥१०॥
( शार्दूलविक्रीडितम् )

अज्ञातयौवना ज्ञातयौवना चेति सा द्विधा ॥ ११ ॥

**अज्ञातयौवना यथा—**

क्रीडन्ती क्वापि धूलीपटलवलयिते धाम्नि चञ्चच्चतुष्के[3]
मोदादात्मानुरूपाभिरपि सहवयस्याभिरेताभिरन्तः[4] ।
मुग्धाऽविज्ञाततत्त्वा निजतनुविलसत्कान्ततारुण्यभूते-
रालीनामेव वाग्भिः कथमपि हृदयं सावहेलं पिधत्ते ॥१२॥
( शार्दूलविक्रीडितम् )

---

८. रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी—इति तल्लक्षणात् ।

१०. लक्षणमुक्तम् ।

---

1. पाठान्तरम्
शुश्रूषाचरणोद्धुराः प्रियतमे शीलार्जवैरूर्जिताः
कान्तस्वान्तहराः क्षमाऽद्भुततराः शश्वत्त्रपानिर्भराः ।
विश्लेषक्रमकातराः प्रियतराः कारुण्यपूर्णाः परं
रामानन्दमनः प्रमोदजननाः स्वीयाङ्गनानां गुणाः ॥ ७ ॥

2. अपरा मुग्धा यथा—
सव्रीडस्मितसुन्दरनयनयुगे भजति भङ्गुरीभावम् ।
नवनवभूषणरसिका शिव शिव मुग्धा मनो हरति ॥ (आर्या)
—इति पाठान्तरम् ॥ १० ॥

3. किञ्चित् किञ्चित् सुवक्षोबदरफलमिवोत्तुङ्गतां गाहतीव ॥१२॥ इति पाठान्तरम् ।

4. दालीभिराभिः इति पाठान्तरम् ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**ज्ञातयौवना यथा—**

स्थित्वा स्थित्वा नवनवसखीवृन्दमध्ये सुमध्या
कामक्रीडावचनरचनाचातुरीं शिक्षमाणा ।
सम्प्रत्येषा मदयति मनो मुग्धभावापि यूनां
किञ्चित् किञ्चिन्नयनकमले भङ्गुरे विक्षिपन्ती[1] ॥१३॥
( मन्दाक्रान्ता )

सा नवोढा भय[2]त्रासैः पराधीनरतिस्तु या ।
सप्रश्रयाऽथ विश्रब्धनवोढाऽन्या प्रकीर्त्तिता ॥१४॥

**नवोढा यथा—**

पुरस्तादालीभिः कथमपि च नीता सशपथं
पुनर्भीता लज्जाभयभरपरीता मुहुरपि ।
बहिर्गन्तुं गेहात् कलयति समीहामियमहो !
दृढाश्लेषं सोढा कथमिह नवोढा निजविभोः ॥१५॥
( शिखरिणी )

**विश्रब्धनवोढा यथा—**

नीवीनिर्यमणैकनिष्ठुरकराम्भोजोरुवस्त्रोद्धुरा
शश्वत्पाणिनिरुद्धकाञ्चनरुचिप्रोद्भासिचञ्चत्कुचा ।
रामानन्दसुखं जगत्सुकृतिभिस्तैरेव लब्धं जनै-
र्येर्लज्जादरमुद्रिताक्षिकमला बाला चिरं चुम्बिता[3] ॥१६॥

---

१२—१६ लक्षणमुक्तं द्वितीयश्लोके । १३—मन्दाक्रान्ताजलधि । १५—लक्षणमुक्तमष्टमश्लोके ।

---

1. यथा वा—
किञ्चित् किञ्चिच्चित्तं विरमति धूलीविनोदकेलीभ्यः ।
लज्जामपाङ्गमूलं सम्प्रति भजते कुरङ्गनयनायाः ॥१३॥ आर्या ।

2. ह्रिया इति पाठान्तरम् ॥१४॥ लज्जाया मुख्यत्वादयं पाठो युक्तः ।

3. आलीभिर्विनिवेश्य केलिभवनाद् यातं त्रिहस्याधुने-
त्याशङ्कापरिशङ्किनी मुहुरपि व्रीडानमत्कन्धरा ।
तल्पोपान्तमुपेत्य संभ्रमभरं भूयस्तरां बिभ्रती
रामानन्दकणादसंशयपदे माना नवोढा वधूः ॥१६॥
एकस्मिन् धर्मिणि विरुद्धनानावमर्शः संशयः ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

समानलज्जा मदना मध्येति परिकीर्त्तिता ।
सैवातिप्रश्रयाद् बालाऽप्यतिविश्रब्धसंज्ञिका ।।१६।।

**मध्या विश्रब्धनवोढा यथा—**

निभृतनिभृतं केलीगेहे गतं नतशीर्षया
चकितचकितं तल्पोपान्ते स्थितं हरिणीदृशा ।
वलितवलितं भूयश्चेलाञ्चलावृतमन्तरा
कलयति मुखाम्भोजं तन्वो पतिं पुनरीक्षते[1] ।।१७।।

"स्वस्वामिकेलिनिपुणा प्रगल्भा साऽभिधीयते ।"

(हरिणी वा शालिनी)

**प्रगल्भा यथा—**

धन्यास्ताः सखि याः स्मरन्ति सुरतावस्थाव्यवस्थाक्रमं
भूयश्चापि निवेदयन्ति सुहृदां मोदाय तत्तद्दशाम् ।
अस्माकं तु नितान्तकान्तनिहितप्रव्यक्तदोःपल्लवां
नीवीं मुञ्चति वल्लभे सहचरि स्वल्पापि नैव स्मृतिः[2] ।।१८।।

( शार्दूलविक्रीडितम् )

एका धीराऽप्यधीराऽन्या धीराधीरा परा मता ।
मध्याप्रगल्भे कथिते त्रिविधे मानयोगतः ।।१९।।

व्यङ्ग्यकोपप्रकाशा तु धीराऽधीरा तु तं विना ।
व्यङ्ग्याव्यङ्ग्यप्रकोपस्य धीराधीरा प्रकाशिका[3] ।।२०।।

---

1—उत्कण्ठा रतिसङ्गरे नयनयोर्लज्जेति तल्पस्थया
यत् सङ्कल्पविकल्पकल्पितमनोवृत्त्याऽनया स्थीयते ।
अद्वैतागमजां निरस्य धिषणां द्वैतोत्थया शिक्षया
रामानन्दमनोभवेन गुरुणा मध्या किमध्यापिता ।।१७।।

2—आश्लिष्टा विशतीव हृत्सरसिजे पीयूषधारायिता
निष्पीतेऽधरपल्लवे पुलकिता वक्षोजनिष्पीडने ।
कन्दर्पोत्सवसत्प्रमोदलहरीं कन्दर्पलीलोद्भवं
"रामानन्द" विबोधयन्ति शयने धन्याः प्रगल्भां वधूम् ।।१८।।

( रतिप्रीता )

3—पर्यङ्के पदपङ्कजं विदधतः स्मेरं वचो जल्पतः
किञ्चित्कोपलसत्कटाक्षविशिखव्यापारमातन्वती ।
अन्तःप्रेमरसप्रवाहविगलत्प्रेमाश्रुभिर्दुर्दिनं
"रामानन्द" वितन्वती प्रियतमा धीराप्यधीरायते ।।२१।।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

धीरा [1]सोत्प्रासवक्रोक्त्या मध्या साश्रुः कृतागसम् ।
खेदयेद् दयितं कोपादधीरा परुषाक्षरम् ॥ २१ ॥

**मध्या धीरा यथा—**

कालिन्दीमञ्जुकुञ्जोदरमधिभवतः क्रीडतः क्वापि कामं
हेमन्तेऽपीदमर्क्कद्युतिभिरिव यदुत्कीर्णमाविर्बभूव ।
दूरादुत्सारयन्तां मधुमथनतवासन्ननद्यम्बुशीताः
स्वेदाम्भःपूरमेते ह्युपवनकुसुमामोदधीराः समीराः ॥२२॥
( शार्दूलविक्रीडितम् )

**मध्याऽधीरा यथा—**

नेत्रं कोकनदानुकारि भवतो विम्बाधरः खण्डितो
धत्ते मण्डनमेव किञ्च हृदयं वन्धूकपुष्पारुणम् ।
कालिन्दीजलविन्दुसुन्दरमिदं गण्डस्थले कज्जलं
दृष्ट्वैतत्तव भूषणं कथमहो मन्मानसं दूयते ॥ २३ ॥
( शार्दूलविक्रीडितम् )

**मध्याधीराधीरा यथा—**

रूपेणासि मनोभवप्रतिनिधिर्बुद्ध्याऽथ वारांनिधिः
शीलेनासि कलानिधिर्गुणशतैर्मन्येऽसृजत् त्वां विधिः ।
इत्युक्त्वा तरुणी किमप्यकरुणीभावप्रगल्भाः प्रिये
निःश्वस्याश्रुपरिप्लुताक्षिकुटिला मुक्ताः कटाक्षच्छटाः ॥ २४ ॥
( शार्दूलविक्रीडितम् )

**प्रौढा धीरा यथा—**

तस्या एव मृगीदृशश्चरणयोरारभ्यतामानतिः
किं मां वञ्चयसे नतेन शिरसा भूयोऽपि मिथ्येङ्गितैः ।
यस्याः पादयुगादलक्तकरसैर्वक्षोऽनुरक्तीकृतं
तामेव प्रमदां भज प्रिय मया किं कृत्रिमस्नेहया ॥ २५ ॥

**प्रौढाऽधीरा यथा—**

विदितमिह तवान्तः किं वृथा भाषसे मां
पुनरपि कुटिलायास्त्वं गृहं यास्यसीति ।
वहुतरकृतपुण्यः किन्तु सङ्केतकेली
भवनभुवि सुदत्या ताडयते कोऽपि धन्यः ॥ २६ ॥
( मालिनी )

---

२६—न न म म युतेयं मालिनीभोगिलोकैरिति लक्षणात् ।

---

1. सोत्प्रासः स मनाक् स्मितम् ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**प्रौढा धीराधीरा यथा—**

प्रणतिशतसहस्रैः सान्त्वयित्वा मृगाक्षी-
मनुनयशपथाभ्यां सानुरागामवेक्ष्य ।
करकमलममुष्या यावदालम्बतेऽसा-
वतिकुटिलकटाक्षं तावदाविश्चकार ॥२७॥

( मालिनी )

मध्या पुनः प्रगल्भा च द्विधा सा परिभिद्यते ।
एका ज्येष्ठा कनिष्ठाऽन्या नायकप्रणयं प्रति ॥२८॥

**धीरा ज्येष्ठा कनिष्ठा यथा—**

कमलदलविशङ्की भीरुभृङ्गो भवत्या
स्फुटवदनसरोजं गन्धलुब्धोऽभ्युपैति ।
नयनयुगलमुद्रामित्थमापाद्य सद्यः
सपदि कितवबन्धुस्तावदन्यां चुचुम्ब ॥२९॥

(मालिनी)

**अधीरा ज्येष्ठा कनिष्ठा यथा—**

गुम्फाविधौ त्रुटितमौक्तिकहारयष्टे-
र्नम्राननामविकलय्य निकाममेकाम् ।
पश्चादुपेत्य शनकैरपनीय कोपं
धूर्त्तः परां प्रियतमां भृशमालिलिङ्ग ॥३०॥

**धीराधीरा ज्येष्ठा कनिष्ठा यथा—**

कस्तूरीपुटपेशलां कुचतटीमालोक्य वामभ्रुवोः
कुर्वैकां चकितां तवेति किमिदं पङ्कैकशङ्कामिषात् ।
एकस्याः स्तनमण्डलं हि निविडं निष्पीड्य भूयस्तरां
सान्द्रानन्दमवाप यत् स कितवः किं तद्धि वा कथ्यताम् ॥३१॥

( शार्दूलविक्रीडितम् )

परप्रियकृतस्नेहा परकीयेति सा मता ।
परोढाकन्यकाभेदैर्द्विधा सा परिकीर्तिता ॥३२॥

**परोढा यथा—**

कुञ्जप्रान्तेष्वभिनवलतामुत्सुका गन्धवाहा
आश्लिष्यन्तः कुटजकुसुमामोदिनो जातहर्षाः ।
एताः श्यामाः सकलककुभश्रेणिभिस्तोयदानां
दृष्ट्वा चेतः सहचरिपराधीनतां शंसतीव ॥३३॥

---

२७—२९—लक्षणमुक्तम् ।

३०—उक्ता वसन्ततिलका तभजा जगौ गः-इति तल्लक्षणात् ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

गुप्ता विदग्धा सुदती लक्षिता कुलटामुखाः ।
परकीया पुरन्ध्रीणामेते भेदाः क्वचिन्मताः ॥ ३४ ।

वृत्तवर्तिष्यमाणादिभेदैर्गुप्ता त्रिधा मता ।
एकत्रैव प्रदर्श्यन्ते श्लोकोदाहरणेन ते ॥ ३५ ।

**गुप्ता त्रिधाऽपि यथा—**

क्रोडीकृत्य यदा यदा सखि मया बालोऽयमालिङ्ग्यते
मुग्धोऽयं हि तदा तदा मम तनुं क्रूरैर्नखैः कृन्तति ।
रोदित्येव यदैव नापितवधूरादिश्यते चेत् करं
मातस्तत् किमहं करोमि न पटुः प्रायो ममायं शिशुः । ३६ ।
( शार्दूलविक्रीडितम् )

विदग्धापि द्विधा प्रोक्ता वाक्क्रियाभेदविस्तरैः ॥ ३७ ।

**वाग्विदग्धा यथा—**

उस्रैः प्रोद्दण्डतापैः किमिति बहुतरं तप्यसे चण्डभानोः
पान्थ क्लान्तो नितान्तं यदसि सविनयं त्वामहं तद्ब्रवीमि ।
अस्मिन्नुद्यानकुञ्जे नवदलविन्दलमञ्जुमल्लीसुगन्धे
स्नात्वा सन्तापमुच्चैरपनय तरणेरद्य तद्दीर्घिकायाम् ॥ ३८ ।
( स्रग्धरा )

**क्रियाविदग्धा यथा—**

साङ्केतिकं कमपि वीक्ष्य जनं चिरेण
को वा भवांस्तदिति पृच्छति वल्लभेऽथ ।
भूमौ कुरङ्गनयना शकुनाक्षराणि
विन्यस्य तं खटिकया गणकं शशंस ॥ ३९ ।
( वसन्ततिलकम् )

**लक्षिता यथा—**

श्वश्रूः प्रकुप्यतु विनिन्दतु वा ननान्दा
याता कुलेऽप्यहह मामसतीं ब्रवीतु ।
कान्तस्तनोतु भयमत्र तथापि चित्तं
रक्तं ममालि वनमालिविलोकनेन ॥ ४० ।
( वसन्ततिलकम् )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**कुलटा यथा—**

कस्यापि कस्यचिदिहाश्रययोजनेन
विश्वं समस्तमपि सुस्थमहो विधाय ।
त्रैलोक्यजीवनविधानकथाप्रसङ्गे
हा ब्रह्मणापि न कृतः कुलटाप्रसङ्गः ।। ४१ ।
( वसन्ततिलकम् )

**कन्यका यथा—**

विधाय वदनाम्बुजे तनुतरं हि चेलाञ्चलं
निधाय शफरस्फुरत्पटुदृगाञ्चलं निश्चलम् ।
मृगीव चकिता मुहुः पुलकिता जनं सादरा-
दियं नृपतिकन्यका कमपि सस्मितं वीक्षते ।। ४२ ।
( पृथ्वी )

वित्तार्थिनी भवेद् या तु कर्मणा मनसा गिरा ।
धनिमात्रकृतस्नेहा सामान्यवनिता मता ।। ४३ ।

**सामान्यवनिता यथा—**

घनस्तनयुगार्पणैः स्मितमनोहरैर्भाषणैः
सविभ्रमपरिस्फुरन्नयनकोणसम्वीक्षणैः ।
विचित्ररतिकूजितैर्विविधवन्धवन्धक्रमैः
विनोदयति मानसं धनवतां हि वाराङ्गना ।। ४४ ।
( पृथ्वी )

एतास्तिस्रो भवन्त्यन्यसम्भोगसुखदुःखिताः ।
वक्रोक्तिगर्विताश्चापि मानवत्यश्च ता इमाः ।। ४५ ।

**अन्यसम्भोगदुःखिता यथा—**

अये दूति त्वं यन्मम रमणमासाद्य सुभगे
मदुक्तं चेदुक्तं किमु वहुवृथावादशपथैः ।
श्रुतं वा दृष्टं वाप्यहह ! नलिनीमेत्य चपले
न पीतं न त्यक्तं मधु मधुकरेणाम्बुजवने ।। ४६ ।
( शिखरिणी )

**वक्रोक्तिगर्विता द्वेधा कथिता रसकोविदैः ।**
**प्रेम्णैका गर्विता चान्या तथा सौन्दर्यगर्विता ।। ४७ ।**

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**प्रेमगर्विता यथा—**

प्रियास्तास्ता दृष्ट्वा सपदि सखि लज्जावसतयः
कथं सान्द्रानन्दं कथय पतयोऽमी विदधते ।
गुरूणामभ्यर्णं पतिरसहमानोऽन्तरमहो
मुखोत्कीर्णं चेलाञ्चलमपि कथञ्चिन्न सहते ।। ४८ ।
( शिखरिणी )

**सौन्दर्यगर्विता यथा—**

समाजे मित्राणां सततमुपविश्य प्रियतमो
ममैव प्रत्यङ्गं मुहुरपि सरङ्गं कलयति ।
इतीवान्तः खेदं न भजति पतिं प्रत्यपि यतो
ममेदं सौन्दर्यं सहचरि ! विडम्बं वितनुते ।। ४९ ।
( शिखरिणी )

प्रियापराधमालोक्य भवेत् कोपसमाकुला ।
साहित्यरसतत्त्वज्ञैर्मानिनी साऽभिधीयते ।।५०।

**मानवती यथा—**

उद्भिन्नं चरणाम्बुजेन सुदृशः कन्दर्पलीलाविधौ
वक्षोऽलक्तकमण्डितं निजविभोरालोक्य दूरादपि ।
अन्तः कोपकषायितं तरलितं वाष्पाम्बुपूरायितं
तन्व्यास्तत्समये न किं न किमहो नूनं दृगन्तैः कृतम् ।।५१।
( शार्दूलविक्रीडितम् )

[1]अष्टाभिस्तास्ताभिरेताभिरेताः
स्वावस्थाभिः षोडशाप्यष्टधा स्युः ।
प्रोषितभर्तृका खण्डितोक्ताऽथ भूयः
कलहान्तरिता विप्रलब्धा तथोत्का ।।
वासकसज्जा स्यात् स्वकाधीनभर्तृका
भूयोऽपि स्यात् साभिसारप्रिया च ।।५२।
( उपजातिः )

---

५२. इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातित्विदमेव नाम—इति तल्लक्षणात् । अन्येषां लक्षणमुक्तम् ।

---

1. आद्या प्रोषितभर्तृकेह कथिता स्यात् खण्डिताख्याऽपराऽ-
न्या कलहान्तरिता भवेच्च परतः स्याद् विप्रलब्धा वधूः ।
उत्का वासकसज्जिकाऽथ रमणी स्वाधीनकान्ता मता
रामानन्दमताभिसारकुशला चेत्यष्टधा नायिका ।।५२।
( शार्दूलविक्रीडितम् )

२

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**मुग्धा प्रोषितभर्त्तृका यथा—**

नानाऽभिलाषजनितस्मृतिवृत्तिजातां
　चिन्तां भजत्यति न जल्पति वा सखीभ्यः ।
वाष्पं विमुञ्चति दृशापि न लज्जयेव
　मुग्धा वधूर्विरहदुःखमतीव गूढम् ।।५३।

(वसन्ततिलकम्)

**मध्या प्रोषितभर्त्तृका यथा—**

अमी[1] ते माकन्दाङ्कुरमधुरमाध्वीकमुदिताः
　पिकाः कूजन्त्युच्चैरभिनवकलैः कुञ्जमभितः ।
विधत्ते सन्तापं सततमनुकूलोऽपि पवनो
　वसन्तेऽपि स्वान्तं सखि भवति दुःस्थं किमिति ते ।।५४।

(शिखरिणी)

**प्रौढा प्रोषितभर्त्तृका यथा—**

काञ्ची मुञ्चति मध्यदेशमधुना बद्धा गुणैरप्यहो
　केयूरेऽपि कराग्रमेव भजतो भूयो भुजान्तादपि ।
एतत्काञ्चनकङ्कणं वहिरिव प्रायः करात् सर्पति
　द्वित्रैरेव दिनैस्तवार्ति तनुता याता शरीरे कुतः?।।५६।

(शार्दूलविक्रीडितम्)

**परकीया प्रोषितभर्त्तृका यथा—**

मा मा माऽलि मृणालनालमुचितं नैतत्कृते नाम्बुजं
　किञ्च क्वापि न चन्दनद्रवमहो भूयो ममाङ्गेऽर्पय ।
मातः किं नु कुलालवह्निभवने यत् पङ्कलेपः कथं
　तत् तापोपशमाय वेत्ति वदति स्वैराङ्गना[2] सुन्दरी ।।५७।

(शार्दूलविक्रीडितम्)

**सामान्यवनिता प्रोषितभर्त्तृका यथा—**

कुतोऽपि देशात् सुचिरेण कामं समेत्य वित्तं किल दास्यतीति ।
सिद्धार्थतैलैर्वदनं विमृज्य वाष्पोदकं मुञ्चति वारयोषा ।।५८।

पराङ्गनोपभोगेन चिह्नितः प्रातरेति यः ।
तत्पत्नी खण्डिता प्रोक्ता साहित्यरसकोविदैः ।।५९।

---

1. असह्यमिदमेव मे यदिह दक्षिणाशानिलः
　प्रसर्पति गभस्तिभिर्दहति निर्दयश्चन्द्रमाः ।
वसन्तसमयेऽधुना सखि पिकोऽपि सञ्जल्पति
　कुहूरिति मुहुर्मुहुर्विरहवेदनावर्द्धनम् ।।५४।

(पृथ्वी)

2. "गनोत्तापिता" इति पाठान्तरम् अस्ति ५७ श्लोकस्य ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**मुग्धा खण्डिता यथा—**

तन्व्याश्चिरेण हृदयं हि पराङ्गनायाः
काञ्चीकलक्वणितशङ्कितमाकलय्य ।
तन्नूपुरौ मुहुरलं मुखरीविधाय
मुग्धामबोधयदहो भृशमेष धूर्त्तः ॥६०।

( वसन्ततिलकम् )

**मध्या खण्डिता यथा—**

उदञ्चत्पाटीरद्रववलितकाश्मीरकलित-
स्तनोद्भिन्नं पत्युर्मुहुरपि च वक्षः कलयती ।
समुत्थाय प्रातः शिव ! शिव ! मुखक्षालनविधौ
तिरोधत्ते वाष्पोदकमहह ! मध्या नववधूः[1] ॥६१।

( शिखरिणी )

**प्रौढा खण्डिता यथा—**

समाक्रान्तं वक्षश्चरणकमलालक्तकरसै
र्विपक्षप्रेयस्याः क्षुभितहृदया वीक्ष्य सुचिरम् ।
गिरा तन्व्या तन्वी पतिमसहमानात्ममुकुरे
मुखं दर्शं दर्शं त्रपयति सखी सुन्दरमुखी ॥ ६२ ।

( शिखरिणी )

**परकीया खण्डिता यथा—**

कान्तं विपक्षवनितावलयाङ्किताङ्गं
नेयं व्रतोपदिशतीति भृशं विलोक्य ।
चञ्चच्चकोरनयनान्तनितान्तशोणा
दूतीमुखे विनिहिताः खलु नेत्रकोणाः[2] ॥ ६३ ।

( वसन्ततिलकम् )

**सामान्यवनिता खण्डिता यथा—**

तामेव याहि कितव ! प्रमदां यदीय-
वक्षोयुगाङ्कितमिदं हृदयं विभाति ।
द्रव्यं ममार्पय पणीकृतमित्युदीर्य
रत्नाङ्गुलीयकमुपाददतेऽस्य वेश्या ॥ ६४ ।

( वसन्ततिलकम् )

---

1. वीक्ष्यालक्तकरागमण्डितमुरः कोदण्डवद्भङ्गुर—
भ्रूचापच्युतदृक्कटाक्षविशिखान् व्यापारयन्त्यो मुहुः ।
कोपात् किञ्चिदवद्धनद्धवचनैरानन्दकन्दायिता
रामानन्दमनःप्रमोदजनने स्युः खण्डिताः पण्डिताः ॥६१।

( शार्दूलविक्रीडितम् )

2. "सुदृशाक्षि" इति पाठान्तरम् ॥ ६३ ॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

सेयं कलहान्तरिता पतिमवमत्यानुभवति सन्तोषम् ।
भ्रान्तिज्वरप्रलापाश्चेष्टानिःश्वासमोहसन्तापाः ।। ६५ ।

( गीतिः )

**मुग्धा कलहान्तरिता यथा—**

मञ्जुकदम्बसुगन्धे मिलदलिपुञ्जे समीरणे वहति ।
हरिहरिमुग्धपुरन्ध्री पतिमनुनेतुं न लज्जया व्रजति ।। ६६ ।

( गीतिः )

**मध्या कलहान्तरिता यथा—**

अवनतवदनसरोजाऽव्याविर्भूतोरुदीर्घलज्जेयम् ।
कथमिह कलहनिवेदनमालिजने सुन्दरी कुरुताम् ।। ६७ ।

( आर्या )

**प्रौढा कलहान्तरिता यथा—**

कस्मादयमपि निर्दयभावं भूयो भजेत सखि ते भर्ता ।
अहह ! त्वमिह नु कलहं यदि न विदध्याः कदाचिदपि सुतनु ।। ६८ ।

( गीतिः )

**परकीया कलहान्तरिता यथा—**

यस्य कृते सखि ! विषमाः परिजनलोकस्य ता गिरः सोढा ।
सोऽपि मया परिभूतः कर्म न को वा पुराकृतं भुङ्क्ते ।। ६९ ।

( गीतिः )

**सामान्यवनिता कलहान्तरिता यथा—**

धनमिव जीवनमपि मे यस्य हि विदितं समस्तलोकस्य ।
विमुखीविधाय मातस्तमिह कमन्यं हि कामये मूढा ।। ७० ।

( गीतिः )

अपश्यन्तीं प्रियं प्रायः स्वसङ्केतनिकेतने ।
भवेद् व्याकुलचित्ता या विप्रलब्धेति सा मता ।। ७१ ।
सख्युपालम्भनिर्वेदमूर्च्छानिःश्वासपूर्विकाः ।
एताश्चेष्टास्तथा चान्याश्चिन्तावाष्पाम्बुसंयुताः ।। ७२ ।

**मुग्धा विप्रलब्धा यथा—**

सव्याजं समहोत्सवं सशपथं सस्नेहमभ्यर्थनै-
रानीता सखिभिर्निकुञ्जभवने मुग्धा कथञ्चित्पुनः ।
शून्यं वीक्ष्य वनं वधूः प्रतिदिशं प्रत्यर्पयन्ती मुहु-
र्न्यस्ताः काममदभ्रविभ्रमभृतः कुञ्जोपकण्ठे दृशः ।। ७३ ।

( शार्दूलविक्रीडितम् )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**मध्या विप्रलब्धा यथा—**

सङ्केतालयमेत्य नीरजमुखी यत्नैरनेकैर्भृशं
शून्यं वीक्ष्य तमत्र खिन्नहृदया चिन्ताकुलेयं मुहुः।
न स्थातुं न च गन्तुमेव हि तथा रन्तुं न वा वीक्षितुं
न त्यक्तुं न विचेष्टितुं शिव-शिव ! प्रायः समर्थाभवत् ।। ७४ ।।
(शार्दूलविक्रीडितम्)

**प्रौढा विप्रलब्धा यथा—**

याताऽनेकमनोरथं विदधती कुञ्जोदरं सुन्दरी
शून्यं वीक्ष्य मुमूर्च्छ मन्मथशरोन्मीलद्विषव्याकुला।
निर्वेदादिव दीर्घगद्गद्गिरा भूयोऽपि भूयो हरे!
गोविन्देति मुकुन्दमाधवविभो पाहीत्यहो जल्पति। ७५।
(शार्दूलविक्रीडितम्)

**परकीया विप्रलब्धा यथा—**

खलानां दुर्वाचः कथमपि विषह्यातिविषमा,
धृतिं वद्ध्वा वद्ध्वा भृशमधिगतं कुञ्जभवनम्।
तदप्यन्तः शून्यं चिरमवकलय्याकुलतया
[1]ह्यपश्यन्ती कान्तं मुहुरपि वनान्तं मृगयते ।।७६।
(शिखरिणी)

**सामान्यवनिता विप्रलब्धा यथा—**

वहुतरधनदानच्छद्मना वारयोषा
सविनयमनुनीता केलिकुञ्जं जगाम।
अहह ! गहनदुःखव्याकुला वीक्ष्य शून्यं
कलयति परितप्ताङ्गारशृङ्गारशोभाम् ।।७७।
(मालिनी)

सङ्केतभवने भर्त्तुर्भजत्यागमकारणम्।
सैव साहित्यतत्त्वज्ञैरुत्केत्युक्ता मनोषिभिः।।७८।
सन्तापा रतिजृम्भाङ्गाकृष्टिकम्पाश्रुपातनम्।
स्वावस्थाकथनाद् या स्यादवस्थोक्ता मृगीदृशः।।७९।

**मुग्धोत्का यथा—**

समामत्र प्रायो भृशमनवलोक्य प्रियतमां
गतः कामप्यन्यां व्रजति यदिदानीमपि न सः।
इतीवान्तर्मुग्धा मुहुरपि च चिन्ताकुलमुखी
सखीषु स्वावस्थां शिव-शिव! सलज्जा तिरयति ।।८०।
(शिखरिणी)

---

१—न पश्यन्तीत्यर्थः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**मध्योत्का यथा—**

तदेतत् किं कुञ्जं न मिलदलिपुञ्जं भवति वा
न वा नीतो भीतः किमिह मम सख्या सभुजगैः।
इतीयं वाष्पोदंः श्रुतिकलितकह्लाररजस-
च्छलादन्तस्तप्ता वनमिव गता सिञ्चति वधूः ॥८१।
( शिखरिणी )

**प्रौढोत्का यथा—**

पयोभिर्मेघानां कुसुमितकदम्बेऽथ कुटजे
भृशं मन्दं मन्दं प्रसरति सुगन्धेऽपि पवने।
लसत्कुञ्जेऽप्यन्तर्निविडतरुपुञ्जेऽपि भवने
ऋते कान्तं तन्व्यास्तदपि न सुखाय प्रभवति ॥८२।
( शिखरिणी )

**परकीयोत्का यथा—**

निर्विण्णं भवनादपि प्रतिगतं दूरे वनान्तादपि
ध्याता किञ्च चिरेण कान्तपदवीसन्धाय चित्ते पुनः।
यन्नाद्यापि स गोचरः प्रभुरभूदेतादृशोरित्यहो
कान्ता तप्तुमिवेह कुञ्जभवने प्रायः किमत्रेहते ॥८३।
(शार्दूलविक्रीडितम्)

**सामान्यवनितोत्का यथा—**

मामादिश्य वचोभिरद्भुतरसोदञ्चत्सुधासोदरैः
सङ्केतीकृतकाननेऽपि किमिति प्राणेश्वरो नागतः।
इत्यर्थोत्सुकमानसा पुरवधूः चिन्ताशतव्याकुला
वाष्पाम्भः पृषतैः कुचद्वयमहो भूयस्तरां सिञ्चति ॥८४।
( शार्दूलविक्रीडितम् )

अद्यमेकान्तदिवस इति निश्चितचेतसा।
सज्जीकरोति सामग्रीं सैव वासकसज्जिका ॥८५।

सख्या सार्द्धं परीहासः सामग्रीसाधनं मुहुः।
दूतीप्रश्नः कथालोकश्चेष्टा सह मनोरथैः ॥८६।

**मुग्धा वासकसज्जा यथा—**

काचित् ताम्बूलवीटीं रचयति कुतुकात् कापि पाटीरपङ्कं
कर्पूरैः पूरयन्ती कलयति च परा मल्लिकापुष्पमालाम्।
काचित् केलीगृहान्तः तनुगुणवलितं दीपमुद्दीपयन्ती
मुग्धान्तः प्रेक्ष्य मोदं प्रभजति रजनौ वासकस्यालिचेष्टाः ॥८७।
( स्रग्धरा )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**मध्या वासकसज्जा यथा—**

फुल्लत्कह्लारहारं कलयति भवनद्वारमालोकयन्ती
भूषाभिर्भूषयन्ती निजतनुलतिकामुल्लसन्ती लतेव ।
इत्येवं वासकस्य प्रभवति सुमुखी वासरे संविधातुं
सामग्रीमात्मशिल्पप्रणयनकलनैः क्रीडतीवाङ्गनासौ ।।८८।

( स्रग्धरा )

**प्रौढा वासकसज्जा यथा—**

तैस्तैरास्तीर्य तन्वी वहुविधकुसुमैः तल्पमस्वल्पगन्धैः
कृत्वा ताम्बूलवल्लीं परिमलवहलां तां लवङ्गीलताभिः ।
सज्जीकृत्येव व तून्यपि सुरतविधेर्भूषणैर्भूषिताङ्गी
केलीगेहान्तरालं निजतनुरुचिभिर्दुर्दिनं वर्द्धयन्ती[1] ।।८९।

( स्रग्धरा )

**परकीया वासकसज्जा यथा—**

श्वश्रूं वेश्मान्तराले क्वचिदपि निभृतं स्वापयित्वा तमिस्रे
धत्ते सङ्केतवृत्या कलकलितकलैः काकलीं सौधजाले ।
गेहान्तः कान्तबुद्धया मुहुरपि तरुणी विस्फुरद्ध्वान्तनाले
पल्यङ्केऽप्यर्पयन्ती निजकरकमलं नैव निद्रां जगाम ।। ९० ।

( स्रग्धरा )

**सामान्यवनिता वासकसज्जा यथा—**

शश्वच्चन्दनकुङ्कुमागरुमिलत्कर्पूरकस्तूरिका-
मोदक्षोदभरश्च तैरभिनवैः प्रत्यङ्कचञ्चद्रुचः ।
शृङ्गारेषु यथा यथा वरतनोर्वाराङ्गनायाश्चिरं
सव्यापारमहो धनेष्वपि तथा जाता मनोवृत्तयः ।। ९१ ।

( शार्दूलविक्रीडितम् )

सर्वदाऽऽज्ञाकराऽभीका स्वाधीनपतिका मता ।
महाहङ्कारकान्तारविहारमदनोत्सवाः ।। ९२ ।

मनोरथस्य चावाप्तिरिति चेष्टा मृगीदृशः ।। ९३ ।

**मुग्धा स्वाधीनपतिका यथा—**

कान्तिः कापि ममास्ति नाङ्गनिकरे नैवापि रागोऽधरे
पीनत्वं न तथाऽस्त्युरोजशिखरे श्रोणी न वा निर्भरे ।
प्रत्यङ्गेऽथ तथापि किन्तु सुभगे सौन्दर्यवुद्धया भृशं
श्रद्धालुः सखि ! वल्लभः कथमसौ मय्येव वद्धादरः ।। ९४ ।

( शार्दूलविक्रीडितम् )

---

1—"पूरयत्यञ्चिताभिः" इति पाठान्तरम् ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**मध्या स्वाधीनपतिका यथा—**

कामक्रीडाप्रसङ्गे यदपि सखि मया वामया वारितोऽसौ
भूयो भूयोऽपि भूयोऽप्यहह ! पतिरसौ नेति नेतीति वाक्यैः ।
पायं पायं यथाऽयं मुहुरपि समुदं सादरं नाधरं मे
मुञ्चत्याहो तथैवोज्झति न पुनरसौ पार्श्वदेशं किमेतत् ॥९५॥
( स्रग्धरा )

**प्रौढा स्वाधीनपतिका यथा—**

आस्यं हास्यपुरस्कृतं नयनयोर्लास्यं हि यासामसौ
कान्तः स्तौति मृगीदृशां सपुलकं धन्या रमण्यस्तु ताः ।
नाना नर्मविचक्षणास्वपि सखि ! प्रायोभिदां पश्यतो
भर्तुः किन्तु पराङ्गनासु न कथं चेतस्तथा स्निह्यते ॥ ९६ ।
( शार्दूलविक्रीडितम् )

**परकीया स्वाधीनपतिका यथा—**

एतास्ताः प्रतिमन्दिरं मृगदृशो यासां न विश्राम्यति
प्रोन्मीलत्पटुकिङ्किणीकलकलप्रोद्दामकोलाहलः ।
किन्तु स्निग्धदृशा भृशं प्रतिवनं प्रत्यङ्गणं प्रत्यगं
प्रत्यध्वानमहो गतां सखि समां कान्तः कथं नोज्झति ॥९७।
( शार्दूलविक्रीडितम् )

**सामान्यवनिता स्वाधीनपतिका यथा—**

खेलत्खञ्जनमञ्जुलोचनकला यासामनङ्गोत्सव-
व्यासङ्गाय भवन्ति सन्ति परितस्तास्ताः कुरङ्गीदृशः ।
सोऽयं किन्तु युवा युवान्तरमहो मामेव पौराङ्गना-
लोकेभ्यो विमुखीविधाय घटयत्यर्थाय किं कारणम् ॥ ९८ ।
( शार्दूलविक्रीडितम् )

स्वयं वाऽभिसरत्येषाऽभिसारयति वा प्रियम् ।
सेयं रसनिनादज्ञैः कथिताऽत्राभिसारिका ॥ ९९ ।
यथाकालोल्लसद्भूषा शङ्का नैपुण्यसाहसाः ।
प्रज्ञा कपटमुख्याऽस्याश्चेष्टोक्ता रसकोविदैः ॥ १०० ।

**मुग्धाऽभिसारिका यथा—**

श्यामाः श्यामघनैः स्फुरन्ति परितः प्रान्तेषु सर्वा दिशः
क्षोणीमण्डलमञ्चतीदमभितो नीलं हि शष्पाङ्कुरैः ।
एषा नृत्यति नीलकण्ठपटली केकां वदन्ती मुहुः
कान्ते कूजति चातके सखि ! तव प्राप्तोऽभिसारक्षणम् ॥१०१।
( शार्दूलविक्रीडितम् )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

मध्याऽभिसारिका यथा—

विद्युद्द्योतितदिग्विभागविहसत् कान्तारकजत्पटुः
प्रेमामोदितनीलकण्ठपटलत्रस्तोरगेन्द्रव्रजे ।
कालेऽम्भोधरसुन्दरेऽप्यभिसरन्ती हन्त ! शङ्काकुल-
स्वान्ता कान्तजनं दिनेऽत्र भवती भीता कथं लक्ष्यते ॥१०२।
( शार्दूलविक्रीडितम् )

प्रौढाऽभिसारिका यथा—

स्तूयन्तामभितो भुजङ्गरिपवः केकारवैः केकिनोऽ-
प्यासारैः परितः पयोदपटली मार्गं मुहुः सिञ्चतु ।
स्वेदाम्भः पवनः तुषारभवनः स्वैरं तिरोधापयेत्
मा खेदं व्रज सुन्दरि ! व्रज वनं कान्तो यतो वर्त्तते ॥ १०३ ।
( शार्दूलविक्रीडितम् )

परकीयाऽभिसारिका यथा—

हर्षोद्वर्षददभ्रमेघपटलध्वान्तभ्रमद्विभ्रम-
भ्रान्तस्वान्तपरिस्फुरद्द्युतिमिलत्सौदामिनीसुन्दरः ।
झञ्झान्दोलितझल्लरीझणझणञ्झञ्झावलीमञ्जुल-
स्त्वेष स्वैरमृगीदृशां हि समयः कान्ताभिसारक्षमः ॥१०४।
(शार्दूलविक्रीडितम्)

सामान्यवनिताऽभिसारिका यथा—

काञ्चीकङ्कणकुण्डलक्वणमिलत्केयूरकोलाहल-
क्रीडत्पादयुगाम्बुजार्पणरणत्कारोल्लसद्भूषणा[1] ।
चञ्चत्काञ्चनसूत्रचित्रवसनोत्कीर्णद्युतिद्योतित-
ध्वान्ता कान्तनिकेतनं निविशते [2]कस्यापि वाराङ्गना ॥१०५।
(शार्दूलविक्रीडितम्)

ज्योत्स्नाऽभिसारिका यथा—

चन्दनद्रवविलिप्तशरीराः कुन्ददामविनिवद्धसुकेशाः ।
योषितो विहरणेन हरन्ति स्वान्तमिन्दुधवलासु निशासु ॥१०६।
( स्वागता )

कृष्णाभिसारिका यथा—

नीलकञ्चुकनिचोलनिवद्धस्फीतचम्पकमनोज्ञशरीराः ।
तामसीषु विचरन्ति सरागाः स्वैरिणीयुवतयो हि विशङ्कम् ॥१०७।
( स्वागतम् )

१०६—१०७. स्वागतेति रनभाद् गुरुयुग्ममिति तल्लक्षणात् ।

1. न्नूपुरा इति पाठान्तरम् ॥१०५॥
2. घन्यस्य इति पाठान्तरम् ॥१०५॥



CC-0. Sampurnanand University Collection. Digitized by eGangotri

यास्यत्येव पतिर्यस्या देशेऽन्यत्र क्षणान्तरे ।
सा प्रोष्यत्पतिका ज्ञेया शृङ्गाररसभावुकैः ॥१०८।
वाष्पनिःश्वाससम्मोहसन्तापो विरतिस्तथा ।
कातरप्रेक्षितं काकुवचो विघ्नोपदर्शनम् ॥१०९।

**मुग्धा प्रोष्यद्भर्तृका यथा—**

गच्छत्येष सखि प्रियो यदि पुनस्तत् किं वृथा चिन्तया
दुःखव्याकुलितेव सम्प्रति भृशं मुग्धे मुहुर्म्लायसि ॥
अद्य श्वः कलकण्ठि ! कण्ठमधुरोन्मीलत्कुहूकूजितैः
स्वच्छन्दं निगडोपमैः प्रियतमः स्वेनैव सम्बध्यते ॥११०।
( शार्दूलविक्रीडितम् )

**मध्या प्रोष्यत्पतिका यथा—**

गन्तुं पृच्छति वल्लभे नयनयोर्वाष्पं तिरोभावितं
नोच्चैर्निःश्वसितं मनागपि न वा [1]सोद्वेगमुद्विग्नया ।
केशैः किन्तु मृगीदृशः सरसिजैः शैवालजालैरिवोत्-
कीर्णं-[2]सुन्दरकान्तिवक्त्रमभितो रोलम्बवल्लम्बितैः ॥१११।

**प्रौढा प्रोष्यत्पतिका यथा—**

गच्छामीत्येव वाचः श्रुतिविषयमहो ! सङ्गताः प्रेयसोऽपि
प्रेयस्या अङ्गतापः सपदि विरहजो नूनमाविर्बभूव ।
इत्यन्तःखिन्नचित्ताः पटुचकितधियश्चिन्तयन्त्यो वयस्या
इत्याचख्युर्गतेऽस्मिन्नहह ! वरतनोः का भवित्री दशाऽस्याः ॥११२।
( स्रग्धरा )

**परकीया प्रोष्यत्पतिका यथा—**

वचनीयं हि सहन्त्या किं किं न कृतं भवत्कृते नु मया ।
स भवान् क्वचिदपि गन्ता प्रभवतु हन्ता त्वया विना मदनः ॥११३।
( गीतिः )

**सामान्यवनिता प्रोष्यत्पतिका यथा—**

तव विरहज्वरपाण्डुरगण्डस्थलमीक्षितुं चिरेणाद्य ।
प्रियतम ! देहि पिनद्धं मणिनिकरैः काञ्चनादर्शम् ॥११४।
( आर्या )

**इति श्रीमत्सरयूपारीण-पण्डितधुरीण-महाकुलीन-श्रीमत्त्रिपाठिमधुकर-तनूजन्म-सकलविद्याचमत्कारपारङ्गम-श्रीरामानन्दशर्मविनिर्मिते साहित्यसागरसुधानिधानकलशे रसिकजीवने नायिकानिरूपणो नाम प्रथमस्तरङ्गः ।**

---

1. "न वा सोद्वेगतोद्भाविता" इति पाठान्तरम् ।
2. "पङ्कज" इति पाठान्तरमस्ति ॥१११।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# द्वितीयस्तरङ्गः

श्रृङ्गाररसनिष्पत्तौ नायिकाः कारणं यथा।
तद्धेतुत्वात्तरङ्गेऽस्मिन् नायकोऽपि निरूप्यते ।।१।

**नायकलक्षणं यथा—**

मानी त्यागी सुरतकुशलः सुन्दरः साधुवेषो
भव्यो नव्यः सुभगवचनः क्षान्तियुक्तः कलावित्।
रामानन्दप्रणयनपटुः सम्पदाढ्यः कुलीनो
नानाभोगानुभवरसिको नायकः कथ्यतेऽसौ ।।२।
**( मन्दाक्रान्ता )**

तत्रानुकूलः प्रथमो द्वितीयश्चापि दक्षिणः।
शठस्तृतीयो धृष्टश्च चतुर्थः परिकीर्त्तितः ।।३।

सततं पराङ्गनायां पराङ्मुखीवृत्तिभावनानिपुणः।
स्वीयाङ्गनासु सहजस्नेहविदग्धोऽनुकूल इत्युक्तः ।।४।
**( गीतिः )**

**अनुकूलो यथा—**

न वैदग्ध्यं वाचां न च हसितमप्यट्टहसितं
न तादृग्दृग्भङ्गिर्भ्रुकुटिकुटिलाभावसुभगा।
न वाऽलङ्काराणां सहचरि ! तथाधानकुशला
कथं रामानन्दो हरिरिह मयि प्रेम तनुते ।।५।
**( शिखरिणी )**

दाक्षिण्यं गौरवं भीतिं पूर्वयोषिति नोज्झति।
साधारणप्रियास्नेहशाली[1] दक्षिणलक्षणम् ।।६।

**दक्षिणो यथा—**

माधुर्यं वचसस्तदेव हि दृशोस्ते विभ्रमास्तादृशाः
साकूतस्मरकेलिकौतुककथास्ता एव सम्भाविताः।
रामानन्दसुखास्पदे ननु हरौ हा हन्त ! दोषाविला-
लोकालीकवचोभिरालिविकृतिः केन त्वयाऽऽविष्कृता ।।७।
**( शार्दूलविक्रीडितम् )**

परोक्षं यः प्रियं कुर्यादप्रियश्चापरोक्षतः।
सापराधोऽपि निःशङ्कः शठ इत्यभिधीयते ।।८।

---

1. "शीलम्" इति पाठान्तरम् ।।६।।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**शठो यथा—**

अलीकैरालीनां किमिह वचनैः सुन्दरि ! पुनः
तवैवाहं तावद् यदि सुमुखि ! चेद् विप्रियकरः ।
तदाऽलीकेनापि प्रभवति हि मुग्धे पुनरयं
स ते दासो नूनं पिशुनवचनैर्विप्रियकरः ।।६।

( शिखरिणी )

निःशङ्कः कृतदोषोऽपि वारितोऽपि पुनः पुनः ।
प्रश्रयप्रवणो नित्यं स धृष्टः कथितो बुधैः ।।१०।

**धृष्टो यथा—**

उदासीनां दीनामपि किमपि बुध्वाऽथ तदपि
प्रजल्पत्यव्यग्रः प्रहसति बलाच्चुम्बति च माम् ।
हठादप्याश्लेषं कलयति प्रणत्यानततनुः
कथं तस्मिन् भूयः सहचरि विदध्यां क्रुधमहम् ।।११।

( शिखरिणी )

पीठमर्द्दो विटश्चैव तथैव च विदूषकः ।
एते सहाया एतेषां चेतकोऽपि क्वचिन्मतः ।।१२।

प्रसादनपरायणः कुपितकामिनीनां भवेत्
स एव कविपुङ्गवैरिह हि पीठमर्द्दो मतः ।
विटो मदनतन्त्रविद् विविधवेषभाषादिभिः
कुतूहलकरोऽपरस्त्विह विदूषको हासकः ।।१३।।

( पृथ्वी )

**पीठमर्द्दो यथा—**

मानं मानिनि मुञ्च किञ्च चरणप्रान्तप्रपन्नं पुनः
प्राणेशं परिषिञ्च चण्डि ! करुणापीयूषवृष्ट्या दृशा ।
भूयश्चापि समुज्झिताखिलसुखारम्भाः कुरङ्गीदृश-
स्त्वं सम्भाव्य पुरेव मञ्जुवचनैरानन्दयालीरिमाः ।।१४।

( शार्दूलविक्रीडितम् )

**विटो यथा—**

मरीचिरुचिसञ्चयैश्चपलचञ्चुकोटीभृतः
समुल्लसति चन्द्रमाश्चपलयंश्चकोरानिह ।
मरुच्चलति शीतलो रटति चञ्चरीकश्चिरं
भविष्यति हि निश्चलस्तव स चण्डि ! मानः कथम् ।।१५।

( पृथ्वी )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

विदूषको यथा—

प्रिये ! नायं तापस्तव रमणकोपान्मदनजो
भवेदेतन्मन्ये कथमितरथा तेऽङ्गदवथुः ।
न विश्रम्भो ह्यम्भोरुहमुखि! पुनश्चेतसि तदा
परीरम्भारम्भं भज भुजलताभिर्निजविभोः[1] ॥ १६ ॥

(शिखरिणी)

इति श्रीमत्सरयूपारीण-पण्डितधुरीण-महाकुलीन-श्रीमत्त्रिपाठिमधुकर-
तनूजन्म-सकलविद्याचमत्कारपारङ्गम-श्रीरामानन्दशर्मविनिर्मिते
साहित्यसागरसुधानिधानकलशे रसिकजीवने
नायकनिरूपणो नाम द्वितीयस्तरङ्गः ।

1. कामा इति पाठान्तरम् ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# तृतीयस्तरङ्गः

सम्भोगो विप्रलम्भश्च शृङ्गारो द्विविधः स्मृतः ।
निरूप्याद्यं तरङ्गेऽस्मिन् विप्रलम्भो निरूप्यते ॥ १ ।

**तदुक्तम्—**

विप्रलम्भाभिधानोऽयं शृङ्गारः स्याच्चतुर्विधः ।
पूर्वानुरागो मानाख्यः प्रवासः करुणात्मकः ॥ २ ।

**सम्भोगस्तु—**

कूजच्चातकनिर्भरा वनभुवो नृत्यन्मयूराकुलाः
तेऽमी सीकरिणो वहन्ति[1] निभृतं वाताः कदम्बोद्भवाः ।
अभ्रैरभ्रमदभ्रविभ्रमहरं खद्योतविद्योतितः
कालः कोऽपि घनाघनस्त्रिजगतां विक्षोभणः शोभनः ॥३।

( शार्दूलविक्रीडितम् )

दम्पत्योर्दर्शनादेव समुत्पन्नानुरागयोः ।
ज्ञेयः पूर्वानुरागोऽयमप्राप्तौ स भवेद् यथा ॥ ४ ।

समन्तादप्यग्नेः कणमजनि कर्पूरकणिका
बृहद्भानुश्चन्द्रो गरलतरलं चन्दनरजः ।
दिनैर्द्वित्रैरेव प्रियतमवियोगे वरतनो–
रहो ! कष्टं व्यालावलिरिव मृणालावलिरभूत् ॥ ५ ।

( शिखरिणी )

विप्रलम्भे दशावस्था स्यादप्राप्तौ तयोरिह ।
अभिलाषोऽथ चिन्ता च स्मृतिश्च गुणकीर्त्तनम् ॥ ६ ।

उद्वेगोऽथ प्रलापः स्यादुन्मादो व्याधिरेव च ।
जडता मरणञ्चैव दुरवस्थं यथोत्तरम् ॥ ७ ।

व्यवसायो भवेद् यत्र बाढं तत्सङ्गमाशया ।
सङ्कल्पाकुलचित्तत्वात् सोऽभिलाषः स्मृतो यथा ॥ ८ ।

आयाति प्रतियाति वासभवनाद् व्यावृत्य यद् वीक्षते
यत् सख्यादरहासपेशलकथा शृङ्गारगर्भं वचः ।
प्रत्याख्याति विचेष्टते मुहुरपि प्रत्यग्रभावग्रहा
तन्मन्ये हरिणीदृशः प्रियतमे जाताभिलाषं मनः ॥ ९ ॥

( शार्दूलविक्रीडितम् )

---

1. "ऽपि वान्ति" इति पाठान्तरम् ॥ ३ ॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

कथं स वल्लभः प्राप्यः किं कुर्यामस्य तुष्टये ।
कथं भवत्यसौ वश्य इति चिन्ता भवेद् यथा ।। १० ।

प्रेयांसं हृदये निधाय गुरुणा रागेण वद्धादरा
तद्विश्लेषरुजार्द्दितेन मनसा या खिद्यमानानिशम् ।
नो सख्यश्चतुरास्तथाऽस्य मनसः सम्भावनासिद्धये
स्वावस्थामभिवक्तु कामियमहो ! चिन्ताकुला कामिनी ।। ११ ।
( शार्दूलविक्रीडितम् )

द्वेषो यत्रान्यकार्येषु तदेकाग्रं च मानसम् ।
श्वासैर्मनोरथैश्चापि चेष्टा तत्स्मरणं यथा ।। १२ ।

खिद्यति चन्दनचन्द्रैरेभिस्तुहिनोपचारसमवेतैः ।
श्वसितं दधाति बाला कमपि युवानं स्मरन्तीव ।। १३ ।
( आर्या )

सौन्दर्यहसितालापैर्नास्त्यन्यस्तत्समो युवा ।
इति वाणी भवेद् यत्र तदिदं गुणकीर्त्तनम् ।। १४ ।

मृद्वचो माधुर्यधुर्य्या विजितविधुरुचस्ता गिरः स्मेरगर्भाः
तत्कारुण्यावलोकप्रकटितनयनद्वन्द्वमिन्दीवराभम् ।
सौन्दर्यं तच्च तादृक् सहचरि ! किमपि क्ष्वेडपीडापरीतं
स्मारं स्मारं मुरारेर्गुणगणमतुलं मानसं मुह्यतीव ।। १५ ।
( स्रग्धरा )

स उद्वेगः स्मृतो यत्र द्वेषोऽत्यन्तहितेष्वपि ।।

चन्द्रं निन्दति चन्दनं न सहते कर्पूरमुत्सारय-
त्यम्भोजानि मृणालजालरुचिराण्यालोक्य विभ्राम्यति ।
दग्ध्याच्चाङ्गणमध्यगा हिमकरप्रालेयकल्पैः करै-
स्तल्पेषु व्यजनानिलानपि वधूरुद्वेजिता चारुणत् ।। १६ ।
( शार्दूलविक्रीडितम् )

विभ्राम्यति मनो यस्मिन्नत्यौत्सुक्यादितस्ततः ।
वाचः प्रियाश्रया एव स प्रलापः स्मृतो यथा ।। १७ ।

प्रियेणाहं दृष्टा न खलु हतयालोकि स मया
वचो दत्तं तेन प्रतिवचनमुक्तं न तदपि ।
इति प्रादुर्भूतप्रियतमजनौत्कण्ठ्यनिविडं
कुरङ्गाक्षी वाचं प्रलपति किमप्यर्थविधुराम् ।।१८।
( शिखरिणी )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अपूर्णच्छन्दः—

उन्मादो रोदनश्वासकम्पभूलेखनादिभिः ।[1]
रोदिति श्वसिति कम्पते भृशं भूतलं लिखति किञ्च नखेन ।
विस्फुरद् गुरुतनूरुहमालां बिभ्रती प्रियतमोन्मदितेव ॥१९॥
( उपजातिः )

सन्तापवेदनाप्रायो दीर्घश्वाससमाकुलः ।
तनूकृततनुर्व्याधिरष्टमो जायते यथा ॥२०॥

स्मरज्वरव्याकुलिताङ्गयष्टेः
प्राप्ता तनुस्तानवमम्बुजाक्ष्याः ।
मनोभवव्याधिमिवोल्लपन्ती
विराजते पाण्डुकपोललक्ष्मीः ॥२१॥
( उपजातिः )

अकाण्डे यत्र हूङ्कारो दृष्टिस्तब्धागता स्मृतिः ।
श्वासः समधिकः कार्श्यं जडतेयं स्मृता यथा ॥२२॥

निःस्यन्दाक्षिकनीनिकास्यकमलश्वासोऽपि वैश्वानर-
ज्वालाबान्धवगन्धवाहविषमो बिम्बाधरं धूसरम् ।
हूमित्येव पदं न चेन्मृगदृशः प्रत्युत्तरं व्यञ्जकं
स्वीकुर्य्यादिह सुभ्रुवोऽपि निपुणः कः शालभञ्जीभिदाम् ॥२३॥
( शार्दूलविक्रीडितम् )

इति श्रीमत्सरयूपारीण-पण्डितधुरीण-महाकुलीन-श्रीमत्त्रिपाठिमधुकर-
तनूजन्मविविधविद्याचमत्कारपारङ्गम-श्रीरामानन्दशर्म्मविरचिते
साहित्यसागरसुधानिधानकलशे रसिकजीवने
विप्रलम्भशृङ्गारप्रसङ्गे पूर्वानुरागवर्णने
तृतीयस्तरङ्ग ।

---

1. अपूर्णच्छन्दः ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# चतुर्थस्तरङ्गः

पूर्वानुरागरचना[1] विप्रलम्भे निरूपिता।
तुरीये तु तरङ्गेऽस्मिन् मानावस्था निरूप्यते ॥ १ ।

स प्रायशो भवेत्त्रेधा कामिनीनां प्रियं प्रति।
अवेक्ष्य दोषमेतस्य गरीयान् मध्यमो लघुः ॥ २ ।

गुरुर्यथा—

भ्रमद्भ्रुकुटिवल्लरी भजति भङ्गुरां भावनां
विपक्षवनितानखक्षतमवेक्ष्य वक्षःस्थले।
स्फुरत्सु रदनच्छदक्षुभितनेत्ररूक्षाक्षरै-
र्निवेदयति भामिनीं कमपि मानमुग्रं हृदि ॥ ३ ।

(पृथ्वी)

मध्यमो यथा—

रोषारुणेक्षणलसद्भ्रुकुटीतरङ्गै
रूक्षैर्वचोभिरभजद् गुरुतामपि प्राक्।
मानः स एव सुतनोः प्रणयप्रणम्रे
जातागसि प्रियतमे लघिमानमाप ॥ ४ ।

(वसन्ततिलकम्)

लघुर्यथा—

नास्त्यागो मयि मीनाक्षि! मुधैव परिखिद्यसे।
इति वाऽऽकर्ण्य मानिन्या जाते वाष्पाकुले दृशौ ॥ ५ ।

मानभेदास्तु बहवो बहवो वर्णयन्त्यमून्।
ग्रन्थगौरवमालोक्य दिङ्मात्रमिह दर्शितम् ॥ ६ ।

**इति श्रीमत्सरयूपारीण-पण्डितधुरीण-महाकुलीन-श्रीमत्त्रिपाठिमधुकर-तनूजन्म-विविधविद्याचमत्कारपारङ्गम-श्रीरामानन्दशर्मविनिर्मिते साहित्यसागरसुधानिधानकलशे रसिकजीवने विप्रलम्भ-शृङ्गारप्रसङ्गे माननिरूपणो नाम चतुर्थस्तरङ्गः।**

---

1. कामावस्थाप्रयोक्त........।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

# पञ्चमस्तरङ्गः

## प्रवासनिरूपणम्

विप्रलम्भाख्यशृङ्गारे मानावस्था निरूपिता।
पञ्चमे तु तरङ्गेऽस्मिन् स प्रवासो निरूप्यते ॥१।

परदेशं व्रजेद् यत्र कुतश्चित्कारणात् प्रियः।
स प्रवास इति ख्यातः कष्टावस्था द्वयोरपि ॥२।

आयातो मम यः पयोदसमयः सन्तापकारी स किं
नायातो दयितः परं हृदि यतश्चिन्ताचलं मे मनः।
आलि ! प्राघुणिकाऽपि काऽपि न पुनः सम्प्रत्युपैतीह यत्
तत् किं केन कथं गमिष्यति वद प्रावृड् दिनं दुर्दिनम् ॥३।

( शार्दूलविक्रीडितम् )

धारापातप्रचुरविकिराः प्रस्फुरच्छीकरार्द्राः
सोढाः प्रौढाः परिमलभृतः केतकीगन्धवाहाः।
खद्योताली विरलतिमिराप्रोषिते प्राणनाथे
विद्युत्सङ्गा हरति हृदयं कापि कादम्बिनीयम् ॥४।

( मन्दाक्रान्ता )

कार्श्यं जागरमालिन्यचिन्तोन्मादविमूर्च्छनाः ।
गते बन्धौ दशास्त्वेताः ता इहोक्ता न विस्तरात् ॥५।

**इति श्रीमत्सरयूपारीण-पण्डितधुरीण-महाकुलीन-श्रीमत्त्रिपाठिमधुकर-तनूजन्म-विविधविद्याचमत्कारपारङ्गम-श्रीरामानन्दशर्मविनिर्मिते साहित्यसागरसुधानिधानकलशे रसिकजीवने विप्रलम्भ-शृङ्गारप्रसङ्गे प्रवासनिरूपणो नाम पञ्चमस्तरङ्गः।**

CC-0. Sampurnanand University Collection. Digitized by eGangotri

## षष्ठस्तरङ्गः

### विप्रलम्भनिरूपणम्

तरङ्गे पञ्चमे किञ्चित् प्रवासो हि निरूपितः।
करुणात्मक एतस्मिन् विप्रलम्भो निरूप्यते ॥ १ ।

केषाञ्चित् करुणाभ्रान्तिः कारुण्यादिह जायते।
एतस्य मिथुनावस्थां विस्मृत्य रतिमूलजाम् ॥ २ ।

इत्ययमपि प्रियजनसमागमोत्सुकतामापादयन् श्रृङ्गारमेव पुष्णातीति सम्मतत्वात् सर्वेऽप्येनमङ्गीकुर्वते ॥ २ ॥

गत-गच्छद्-गमिष्यद्भिः प्रवासैः करुणो रसः।
आगतागच्छदागामिभेदैरेकोऽप्यनेकधा ॥ ३ ।

**गतप्रवासो यथा—**

एते ते करिणोऽम्बुदालिमिषतो मन्ये कदम्वानिल-
व्याजात् किञ्च परिस्फुरन्ति परितस्तुङ्गास्तुरङ्गा अमी।
हन्त ! स्वान्तविलोडनाय सुदृशां दूरङ्गते वल्लभे
सन्नद्धो मदनोऽद्य विद्युदसिभृत्त्यक्त्वा धनुः कौसुमम् ॥ ४ ।
( शार्दूलविक्रीडितम् )

अनयैव दिशा भेदा ज्ञेया अन्येऽपि कोविदैः।
ग्रन्थगौरवभीत्या तु पृथक् सर्वे न वर्णिताः ॥ ५ ।

इति श्रीमत्सरयूपारीण-पण्डितधुरीण-महाकुलीन—
श्रीमत्त्रिपाठिमधुकरतनूजन्म-विविधविद्याचमत्कार-
पारङ्गम-श्रीरामानन्दशर्मविनिर्मिते साहित्य-
सागरसुधानिधानकलशे रसिकजीवने
विप्रलम्भश्रृङ्गारनिरूपणो नाम
षष्ठस्तरङ्गः ॥६॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

## सप्तमस्तरङ्गः

### हावभावप्रभेदनिरूपणम्

विप्रलम्भो हि शृङ्गारः सप्रभेदो निरूपितः ।
निरूप्यते तरङ्गेऽस्मिन् प्रभेदा भावहावयोः ।।१।

तारुण्ये वामनेत्राणां कथ्यन्ते कामकोविदैः ।
सत्त्वजाता अलङ्कारा विंशतिश्चतुरुत्तरा ।।२।

सञ्जायन्ते तत्र भावहावहेलास्त्रयोऽङ्गजाः ।
लीलाविलासो विच्छित्तिर्विभ्रमः किल किञ्चितम् ।।३।

मोट्टायितं कुट्टमितं विब्बोको ललितं तथा ।
विहृतं चेति कविभिः प्रोक्ताः स्वाभाविका दश ।।४।

**अथ भावः—**

निर्विकारात्मकात् सत्त्वाद् भावस्तत्राद्यविक्रिया ।

**उदाहरणम्—**

स्वैरस्मेरावलोकस्फुरदुरुशफरोत्सर्पिनेत्राशुगानां
विक्षेपं यत्र धत्ते युवजनमभितो विस्फुरद्भ्रूविलासः ।
उद्यद्दोर्वल्लिमूलो(द्) द्रुतलघुवसनव्यक्तवक्षोजकुम्भ-
द्वन्द्वाविष्कारशाली जयति मृगदृशः कोऽपि भावोऽन्तरस्थः ।।५।

( स्रग्धरा )

**अथ हावः—**

सबाष्पगद्गदालापः सस्मितापाङ्गवीक्षितम् ।
प्रेमदाक्षिण्यवृत्तिश्च तरुण्या हाव उच्यते ।।६।

एतस्या भ्रूविलासस्फुटमदनधनुर्वल्लरीविभ्रमाणां
दृग्भङ्गीभ्राजमानां श्रियमनुकुरुते चारुकर्णान्तपूर्णः ।
शैथिल्यं गात्रयष्टेगतिरपि च वलन्मत्तमातङ्गमन्दा
माधुर्यस्मेरगर्भा परिभवति पिकं मञ्जुला गीस्तरुण्याः ।।७।

( स्रग्धरा )

**अथ हेला—**

स एव हेला सुव्यक्तशृङ्गाररससूचकः ।

रत्युल्लासातिरेकात् प्रचुरतरवलत्कुञ्चितभ्रूलताया
गाढाश्लेषप्रदानप्रकटितपुलकव्यक्तकम्पाकुलायाः ।
सान्द्रानन्दं धयन्त्याः प्रियतमवदनाम्भोजमाध्वीकधारा-
मन्तः कामानुरक्तं न खलु कलयते कस्य हेलाङ्गनायाः ।।८।।

( स्रग्धरा )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**अथ लीला—** प्रियानुकरणं लीला मधुराङ्गविचेष्टितैः।

वयस्याभिस्ताभिस्तदुदिततदध्यासितकथा
तदीहा तद्रत्युत्थितहसितभावार्द्रवपुषः।
कुरङ्गाक्ष्यास्तत्तत् सपदि पतिलीलानुकरणं
मुदं यूनामन्तः प्रभजति निकामं कलयताम् ॥९।
( शिखरिणी )

**अथ विलासः—** तात्कालिको विशेषस्तु विलासोऽङ्गक्रियोक्तिषु।

उत्फुल्लाम्भोजगर्भभ्रमदलिपटलीविभ्रमादभ्रशुभ्रा
यत्र स्मेराननश्रीर्मदयति सततं सर्वयूनां मनांसि।
नृत्यन्नेत्राब्जकोणप्रचुरतरचमत्कारकान्तिप्ररोह-
प्रौढप्राग्भारशाली सुखयति हृदयं सुभ्रुवीभ्रूविलासः ॥१०।
( स्रग्धरा )

**अथ विच्छित्तिः—** आकल्परचनाल्पापि विच्छित्तिः कान्तिपोषकृत्।

सर्गे पद्मभुवो भजत्यभिनवे नैवात्र चक्षुष्मतां
यस्या एव हि वीक्षणात् क्षणमपि स्वान्तं स्थिरीभावनाम्।
एतस्याः स्मरकार्मुकप्रविलसद्भ्रूपल्लवायाः शुभे
भाले कापि विचित्रविन्दुसुषमा यूनो मनोहारिणी ॥११।
( शार्दूलविक्रीडितम् )

**अथ विभ्रमः—** विभ्रमस्त्वरया काले भूषास्थानविपर्ययः।

कुतश्चित् सव्याजं चकितनयना केलिभवनाद्
वहिर्यान्तं कान्तं कथमपि विदित्वालिवचनैः।
दृशोर्लाक्षालक्ष्मीं तिलकमपि गण्डस्थलयुगे
द्रुतं दध्रे लीलाञ्जनमलिकमध्येऽम्बुजमुखी ॥१२।
( शिखरिणी )

**अथ किलकिञ्चितम्—** क्रोधाश्रुहर्षभीत्यादेः सङ्करः किलकिञ्चितम्।

पुलकपटलोद्भेदस्वेदप्रमोदसमुल्लसद्-
घसितरुदितक्रोधत्रासप्रकम्परसाद्भुता।
सुरतरभसाद्यस्मिन्नन्तर्दशा मदनोद्भवा
सुखयतितरां धन्यस्यान्तः प्रियाकिलकिञ्चितम् ॥ १३।
( शालिनी )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**अथ मोट्टायितम्—**

दयितस्य कथारम्भे साङ्गभङ्गविजृम्भणम् ।
कर्णकण्डूयनं स्त्रीणां मोट्टायितमुदाहृतम् ।। १४ ।

कण्डूतिर्यदकारणं श्रवणयोर्यज्जृम्भणं भूरिशः
कान्ते तत्कथयाशु कोऽपि सुकृती स्वान्ते तवास्ते पुनः ।
यद्ध्यानादिदमुल्लसद्गुरुतरस्वेदोद्गमोद्दीपित-
प्रत्युद्यत्पुलकं प्रमोदनिविडं मोट्टायितं धार्यते ।।१५।
( शार्दूलविक्रीडितम् )

**अथ कुट्टमितम्—**

केशस्तनादिग्रहणे हर्षादिभ्रमिते सुखे ।
दुःखाविष्करणं तन्व्या यत्तत् कुट्टमितं मतम् ।। १६ ।

केशं मुञ्च विमुञ्च नाथ ! नखरैः किं वा खरैः पीडयते
मा मां पीडय दंशनेन दशनैर्दासी भवेयं तव ।
इत्थं मन्मथसङ्गरस्फुटसुखव्यासङ्गमुग्धान्यहो !
धन्याः कुट्टमिताक्षराणि सुदृशां श्रुत्वा मुदं बिभ्रते ।।१७।
( शार्दूलविक्रीडितम् )

**अथ विव्वोकः—**

अभिमतवस्तूपहृतावपि गुरुगर्वादनादरस्तन्व्याः ।
स्खलिते प्रियस्य संयमताडनमित्येष विव्वोकः ।। १८ ।

यत्तत्कञ्चुकबन्धमोचनविधौ यच्चुम्बनालिङ्गने
यन्नीवीवसनग्रहे मुहुरपि क्रोधप्रबोधोदयः ।
यद्भ्रूभङ्गतरङ्गितं प्रतिभटं सावज्ञमालोकितं
विव्वोकं कुटिलभ्रुवः किमपि तन्मन्येऽस्त्रमन्तर्भुवः ।। १९ ।
( शार्दूलविक्रीडितम् )

**अथ ललितम् —**

भ्रूनेत्रादिक्रियाशाली सुकुमारविधानतः ।
हस्तपादाङ्गविक्षेपस्तन्वङ्ग्या ललितं विदुः ।। २० ।

भ्राम्यद्भ्रूपरिवर्तिताक्षिकमलस्मेरावलोकोल्लसत्
पूर्णेन्दुप्रतिमाननद्युतिवलत्स्वेदार्द्रगण्डस्थलम् ।
उद्यद्वेपथुविस्फुरद्भुजयुगव्यक्तीभवद्विभ्रमं
तन्वङ्ग्या ललितं निसर्गललितं कस्यास्तु नान्तर्मुदे ।। २१ ।
( शार्दूलविक्रीडितम् )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अथ विहृतम्—

वाच्यानां च पदार्थानां ज्ञानेऽपि यदभाषणम् ।
नायकेषु मृगाक्षीणां विहृतं तत्प्रकीर्तितम् ।। २२ ।

कन्दर्पोल्लासलीलाविलसितवहलामोदसम्पद्विचित्रा
तिर्यक्सम्भाव्य नेत्राम्बुजमतिललितं वाचमाचम्य भर्त्तुः ।
ह्रीगर्भां स्वामवस्थामवनतवदनच्छद्मना व्यञ्जयन्त्या-
स्तन्व्यास्तन्नात्र चित्रं विहृतमपहरत्यन्तरं कस्य पुंसः ।। २३ ।
( स्रग्धरा )

इति श्रीमत्सरयूपारीण-पण्डितधुरीण-महाकुलीन-श्रीमत्त्रिपाठिमधुकर-
तनूजन्म-विविधविद्याचमत्कारपारङ्गम-श्रीमत्त्रिपाठिरामानन्द-
शर्मविनिर्मिते साहित्यसागरसुधानिधानकलशे रसिकजीवने
हावाद्यलङ्कारनिरूपणो नाम सप्तमस्तरङ्गः ।

❀ ❀ ❀

निद्रां विधूनयसि शास्त्ररसं रुणत्सि
सर्वेन्द्रियार्थमसमर्थविधिं विधत्से ।
चेतश्च विभ्रमयसे कविते ! पिशाचि
लोकस्तथापि सुकृती त्वदनुग्रहेण ।। १ ।

।। समाप्तश्चायं ग्रन्थः ।।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# श्लोकपादानुक्रमणी



CC-0. Sampurnanand University Collection. Digitized by eGangotri

CC-0. Sampurnanand University Collection. Digitized by eGangotri

CC-0. Sampurnanand University Collection. Digitized by eGangotri

CC-0. Sampurnanand University Collection. Digitized by eGangotri

CC-0. Sampurnanand University Collection. Digitized by eGangotri

CC-0. Sampurnanand University Collection. Digitized by eGangotri

CC-0. Sampurnanand University Collection. Digitized by eGangotri

रजिस्टर्ड न्यूजपेपर्स एक्ट के अन्तर्गत

# विज्ञप्ति

| | | |
|---|---|---|
| १. | प्रकाशन का नाम | सारस्वती सुषमा |
| २. | प्रकाशन की तिथि | त्रैमासिक |
| ३. | प्रकाशक का नाम | भागीरथ प्रसाद त्रिपाठी |
| | राष्ट्रियता | भारतीय |
| | पता | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, |
| ४. | सम्पादक का नाम | भागीरथ प्रसाद त्रिपाठी |
| | राष्ट्रियता | भारतीय |
| | पता | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |
| ५. | मुद्रक का नाम | श्री रमाशंकर पंड्या |
| | राष्ट्रियता | भारतीय |
| | पता | तारा प्रिंटिंग वर्क्स, कमच्छा, वाराणसी |
| ६. | स्वामित्व | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |

मैं भागीरथ प्रसाद त्रिपाठी घोषित करता हूँ कि उल्लिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है।

हस्ताक्षर
भागीरथ प्रसाद त्रिपाठी
गवेषणालय-संचालक
सं० सं० वि० वि०, वाराणसी—२२१००२.

CC-0. Sampurnanand University Collection. Digitized by eGangotri

पञ्जीकरणसंख्या—६६८१।५७

# सारस्वती सुषमा

## सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका ।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति ।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्‌बोधनं प्रोत्साहनं चास्ति ।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते ।

५. प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति ।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते । तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये ।

७. 'कुलसचिव, सम्पूर्णानन्दसंस्कृतविश्वविद्यालय, वाराणसी-२२१००२ (उ०प्र०) इति सङ्केतेन ('बैंकड्राफ्ट' अथवा 'पोस्टल आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम् ।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी–२२१००२ (उ० प्र०) इति सङ्केतेन विधेयः ।

प्रकाशकः–सञ्चालकः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी-२२१००२ (उ० प्र०) ।
मुद्रकः–तारा प्रिंटिंगवर्क्स, कमच्छा, वाराणसी ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# सुसङ्ग्राह्या दर्शनग्रन्थाः

क्रमसं० ग्रन्थनाम मूल्यम्

१. **न्यायसिद्धाञ्जनम्**— [ श्रीवेदान्तदेशिकाचार्यविरचितम् ] पुस्तकरत्नमिदं विदुषा सम्पादकेन स्वर्गीयनीलमेघाचार्येण हिन्दीभाषयानूद्य विविधैर्विमर्शप्रधानैः परिशिष्टैः, अथ च विषयसारभूतया भूमिकया सनाथीकृतम्— २५–००

२. **न्यायकुसुमाञ्जलिः**— [ उदयनाचार्यप्रणीतः ] गद्यपद्यात्मकन्यायकुसुमाञ्जलिरयं सर्वप्रथमं हिन्दीभाषयानूद्य प्रकाशितः। बुधा सम्पादकेन श्रीदुर्गाधरझाशर्मणा विमर्शात्मिकया भूमिकया शास्त्रानुमोदिन्या स्वोपज्ञया टिप्पण्या च समलङ्कृतः– ५६–५०

३. **न्यायकौस्तुभः** — [ श्रीमहादेवपुणतामकरविरचितः ] अनुमानखण्डात्मकस्यास्य द्वितीयभागस्य सम्पादनं न्यायधुरन्धरैः स्वर्गतैः श्रीदामोदरलालगोस्वामिभिर्निपुणं व्यधायि— १०–९०

४. **पदवाक्यरत्नाकरः** — [ श्रीगोकुलनाथोपाध्यायविरचितः ] न्यायशास्त्रस्य ग्रन्थरत्नमिदं श्रीयदुनाथमिश्रविनिर्मितया गूढार्थदीपिकाख्यया व्याख्यया, अथ च विदुषा सम्पादकेन श्रीनन्दिनाथमिश्रेण कृतया गवेषणाप्रधानभूमिकया विविधैः परिशिष्टैश्च समुद्भासितम्— १५–००

५. **श्रीमद्भगवद्गीता**—[ भट्टभास्करभाष्यविभूषिता ] नवमाध्यायपर्यन्तेयं श्रीमद्भगवद्गीता तत्तत्पाठभेदनिर्णयैर्विविधैः परिशिष्टैश्चालङ्कृता शोभते— ५–००

६. **तत्त्वचिन्तामणिः** — [ गङ्गेशोपाध्यायविरचितः ] मङ्गलवादान्तोऽयं ग्रन्थः श्रीमथुरानाथकृतमाथुरीव्याख्यया समुद्भासितः, अथ च विदुषा सम्पादकेन श्रीबदरीनाथशुक्लमहोदयेन विमर्शात्मिकया भूमिकया तथा अनेकैः परिशिष्टैः टिप्पण्यादिभिश्च सनाथितः— १५–००

७. **विज्ञप्तिमात्रतासिद्धिप्रकरणद्वयम्**—[आचार्यवसुबन्धुविरचितम्] बौद्धदर्शनग्रन्थोऽयं विंशतिकापर्यन्तं स्वोपज्ञवृत्त्या, त्रिंशतिकापर्यन्तम् आचार्यस्थिरमतिविरचितभाष्यविभूषितः। अयं प्रथमतया गूढार्थदीपिकाख्यया हिन्दीव्याख्यया शास्त्रसारभूतया भूमिकया विविधैरानुसन्धानिकैः परिशिष्टैश्च समलङ्कृत्य प्रकाशितः— ३९–२५

प्रकाशक :— निदेशकः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

## सुसङ्ग्राह्याः तन्त्रशास्त्रीयाः पालिभाषामयाश्च ग्रन्थाः

क्रमसं० ग्रन्थनाम मूल्यम्

१. नित्याषोडशिकार्णवः—ग्रन्थरत्नमिदम् ऋजुविमर्शिन्या, अर्थरत्नावल्या च व्याख्यया विभूष्य विदुषा सम्पादकेन बहुपरिश्रम्य, अनुसन्धाय च सम्पादितम्। ग्रन्थोऽयं म० म० गोपीनाथकविराजमहोदयानाम् आङ्ग्लभाषालिखितोपोद्घातेन समलङ्कृतः— २५—००

२. तन्त्रसङ्ग्रहः – [प्रथमद्वितीयभागात्मकः] 'योगतन्त्रग्रन्थमालायाश्चतुर्थपुष्परूपमिदं ग्रन्थरत्नं निर्वाणतन्त्र-तोडलतन्त्र-कामधेनुतन्त्र-फेत्कारिणीतन्त्र-ज्ञानसङ्कलिनीतन्त्र-सवृत्तिकदेवीकालोत्तरागमेति षड्ग्रन्थसङ्ग्रहरूपम्। विमर्शप्रधानया भूमिकया पाठान्तरेण च विभूषितोऽयं ग्रन्थो म० म० गोपीनाथकविराजमहोदयैः सम्पादितः—

प्रथमभागस्य—१६—००

द्वितीयभागस्य—१७—००

३. महार्थमञ्जरी– [श्रीमहेश्वरानन्दप्रणीता] परिमलाख्यस्वोपज्ञव्याख्याविभूषितमिदं ग्रन्थरत्नं विदुषा सम्पादकेनानुसन्धानिकैः भूमिकाटिप्पणीपरिशिष्टादिभिः सनाथितम्— १७—५०

४. त्रिपुरारहस्यम्—ज्ञानखण्डमात्रम्। तन्त्रशास्त्रसर्वस्वभूतमिदं ग्रन्थरत्नं श्रीनिवासभट्टविरचिततात्पर्यदीपिकाख्यया व्याख्यया परिमण्डितम्, अथ च म० म० गोपीनाथकविराजमहोदयानां सम्पादनेन सनाथितम्— ९—००

५. लुप्तागमसङ्ग्रहः–[ प्रथमो भागः ] ग्रन्थोऽयं तत्तत्तन्त्रशास्त्रग्रन्थेषु तत्तद्ग्रन्थनाम्ना उद्धृतानां वचसां सङ्ग्रहरूपः, अथ च विदुषा सम्पादकेन म० म० गोपीनाथकविराजमहोदयेन विनिर्मितया टिप्पण्या, भूमिकया, तत्तत्परिशिष्टैश्च परिमण्डितः— १२—००

६. विसुद्धिमग्गो – [ बुद्धघोषाचार्यविरचितः ] भागत्रयात्मकोऽयं ग्रन्थो भदन्ताचारियधम्मपालत्थेरकृतपरमत्थमञ्जूषानाम — विसुद्धिमग्गमहाटीकासमेधितः, अथ च विदुषा सम्पादकेन गवेषणागर्भभूमिकया विभूषितः— प्रथमभागस्य—३६—००

द्वितीयभागस्य—३२—००

तृतीयभागस्य—२७—००

७. अभिधम्मत्थसंगहो–[अनिरुद्धाचार्यप्रणीतः] पालिभाषामयोऽयं ग्रन्थः अभिधर्मप्रकाशिन्या व्याख्यया हिन्दीभाषानुवादेन च समलङ्कृतः, अथ च पाठभेद-पादटिप्पणीभावार्थ-तुलनात्मकटिप्पणीसन्निवेशेन गवेषणामूलकभूमिकाऽनुक्रमण्यादिभिश्च सुसमेधितः— प्रथमभागस्य —१५—००

द्वितीयभागस्य—२०—००

प्रकाशकः-निदेशकः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी-२२१००२

CC-0. Sampurnanand University Collection. Digitized by eGangotri